The Suprabhatam

Registered. NO.A. 1348.

वार्षिकम्मूल्यम् —२)

छात्रेभ्यः—१)

## संस्कृत-साहित्य-समाजस्य मासिक मुखपत्रम्




तिमिरततिमुदस्यद् भेदतारा विलुम्पन्, नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विबुधविहगवादैराह्वयद् भाग्यभानुम् , विलसतु भुवनेऽस्मिन् सर्वतः "सुप्रभातम्" ॥

एकादशेऽब्दे } चैत्री पूर्णिमा, १९९२ { प्रथमा संख्या

सम्पादकौ :—

श्रीकेदारनाथशर्मा

श्रीविन्ध्येश्वरी प

प्राप्तिस्थानम्:—

व्यवस्थापकः—सुप्रभात-कार्यालयः,

काशी ।

विषयसूची ।



## सुप्रभातस्य रजतजयन्त्यङ्कः

वैशाखाङ्कः सुप्रभातस्य रजतजयन्त्यङ्को भविष्यति । स च विविधचित्रैः समलङ्कृतो मुद्रितप्राय एव । सप्ताहानन्तरमेव ग्राहकाणां सविधे समायास्यति । प्राचीनैर्ग्राहकैः स्वीयं शुल्कं मनिआर्डर द्वारा प्रेषणीयम् । वी० पी० [illegible] कार्यालयो नूनं समाज्ञापनीयः

## सुप्रभात-नियमाः ।

१—संस्कृत-साहित्य-समाजस्य मुखपत्रमिदं प्रतिमा[स] प्रकाश्यते ।

२—अस्य साधारणं वार्षिकम्मूल्यं मुद्राद्वयम् । छा[त्रे]भ्यः—एकामुद्रा, वैदेशिकेभ्यश्च चतस्रो मु[द्राः] गृह्यन्ते ।

३—समाज-सदस्येभ्यो विना मूल्यं वितीर्यते । ते त्रिविधाः—सहायकाः, अनुग्राहकाः, माननीय संरक्षकाश्चेति । यैस्तु सदस्य-शुल्कं क्रमशः १०) २५) १००) प्रदेयम् ।

४—वार्षिकमूल्यं सर्वथाग्रिममेव देयम् । एकाङ्क आणकत्रयम् ।

५—यथासमयं पत्रालाभे कार्यालयो नूनं सूचनीय तत्रापि पत्रालये ( पोस्ट आफिस ) प्रथममन्वेषणमावश्यकम् ।

६—चिटिका ( टिकट ) प्रेषकै राजेष्टितपत्र[...] चिटिकाः प्रेषणीयाः । अन्यथा कार्यालयो न[...] रदायी स्यात् ।

७—द्रव्यप्रेषकैः, धनादेश-( मनिआर्डर ) पत्र समाचारलेखन-स्थाने (कूपन) स्वीयः पूर्णसङ्के[तः] सुस्पष्टैराङ्गलाक्षरैर्देवनागराक्षरैर्वा नूनं लेखनीयः

८—पत्रोत्तरमभिलषद्भिः स्वपत्रेण सह चिटिका न[ूनं] प्रेषणीया। स्वीया ग्राहकसंख्या चावश्यं लेखनीया अन्यथा पत्रमत्रावलोकितमेव न स्यात ।

९—व्यवस्थासम्बन्धी पत्रव्यवहारः—व्यवस्थापक[ना]म्ना, सम्पादकीयश्च सम्पादकनाम्ना विधेयः । [...]विधोऽपि पत्रव्यवहारः—"**सुप्रभात-कार्यालयः, काशी**" ( Benares City. ) इत्यनेन सङ्केतेन विधेयः ।

१०—विज्ञापन-नियमाः पत्रं संप्रेष्य ज्ञातव्याः ।




एकादशोऽब्दः | चैत्री-पूर्णिमा, विक्रमसंवत्सरः १९९२ | प्रथमोऽङ्कः

## मासावतरणिका ।

जाड्यं प्रोज्जासयन्ती, जगति विदधती मित्रतेजः समृद्धिम् ,
भूयोऽपि प्रोन्नयन्ती द्विजपतिवलयस्याच्छतां पूर्वसिद्धाम् ।
युक्ता जातिप्रपञ्चैः, प्रकटित—सुमनोमोदभृत्—'सुप्रभाता'
सद्गोष्ठीवेयमुच्चैः प्रगुणयति मुदं चेतसश्चैत्रलक्ष्मीः ॥

—भट्ट गिरिधारीशर्मा.



## शुभाशिषः ।

विविध-विबुधमोदं तन्वतः सत्क्रियाभि—
स्तम इह भुवि सान्द्रं निघ्नतः स्वोदयेन ।
गहनविधिरहस्यं कुर्वतो व्यक्तमुच्चै—
र्दिशिदिशि विजयन्तां सुप्रभातस्य भासः ॥

श्रीप्रमथनाथ तर्कभूषणभट्टाचार्यः,
( महामहोपाध्यायः, पण्डितसम्राट् )

# सम्पादकीयम्

## सुप्रभात-साफल्यम् ।

जीवनस्य दशवत्सरानतिवाह्यैकादशे हायने प्रविशत् सुप्रभातम्, सर्वप्रथमं परमकारुणिकं भगवन्तं काशीविश्वेश्वरं सश्रद्धं प्रणमति, यस्यैवेच्छा कार्यमात्रं प्रति कारणतामावहति । तदनन्तरं निष्कारण-प्रणयिनो दिवङ्गतान् स्वसञ्चालकान् सादरं प्रणमति, यैः स्वार्थत्यागस्योदाहरणभूतैर्मातृभूतायाः जीवनदायिन्या भगवत्याः सुरभारत्याः कृते संस्कृतज्ञानां कर्त्तव्यस्यादर्शः समुपस्थापितः । तदनन्तरञ्च तान् सप्रणयमभिनन्दति, यैर्निष्कारणप्रणयिभिः केवलं सुरसरस्वती-स्नेहेनैव दुरवस्थस्यापि सुप्रभातस्य मध्ये मध्ये द्रव्यसाहाय्येन संरक्षणं विधीयते । ये केवलं यथाकथमपि सुप्रभातं पठन्ति, तेऽप्यस्माकं दयालवः संरक्षका एव । तानेतान् सर्वानपि सविनयं सोत्साहञ्च मानसैरेवोपचारैः सर्वथा सम्भावयति ।

यद्यपि विगतेषु दशवत्सरेषु प्राथमिके वर्षपञ्चक एव सुप्रभातस्य जीवनं सुव्यवस्थितं समुन्नतिशीलञ्चासीत् । तदनन्तरं वर्षपञ्चके शनैः शनैरस्य ह्रास एव समजनि । 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ।' अस्य पतन-समये बहुधा प्रयतमानैरपि संस्कृत-साहित्य-समाज-सदस्यैर्न पारितमस्य सुरक्षणम् कर्तुम् । "अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ।"

अस्मिन् वर्षपञ्चके समाजस्य धनजनयोर्द्वयोरपि हानिः समभवत् । न केवलं सुप्रभातस्यैव; परं सनातनधर्म-कर्णधाराणां भूयसां प्रकाण्डविदुषां हानिरभवत् । इदानीं तु पञ्चषा एव विद्वांसो निखिलेऽपि भारते समालोक्यन्ते तादृशाः । हन्त ! दौर्भाग्य-विलसितमस्मद्भारत्याः !! तथापि तामेतामसहनीयां क्षतिमालोच्य विलुलितधैर्यमिदं सुप्रभातमेकादशे वर्षे पुनरपि सुप्रभातमिव जागर्तिं जनयितुं प्रभवेदित्याशास्महे ।

❀ ❀ ❀

विगते दशमे वत्सरे यथाकथमपि समुत्सहमानैः संस्कृत-साहित्य-समाज-सदस्यैर्यत् पराक्रान्तं तदनेककारणैरप्रगल्भमिव, शिथिलमिव, निराशमिव पराक्रान्तम् । तथापि समाज-सदस्याः सर्वथा धन्यवादार्हा एव सन्ति । यैर्भीषणायां परिस्थितावपि केवलमीश्वरावलम्बनेनैव साहसमिदं विहितम् ।

एतस्मिन् विगते विपत्कालेऽपि सुप्रभातस्य सुरभारत्याः किमपि समभ्युदयमालोचयतामस्माकं चेतः परं सन्तोषमावहति । यतः सुप्रभातस्यावकाशग्रहणानन्तरमेव संस्कृत-साहित्य-सम्मेलनकर्णधारैर्भारतप्रसिद्धैः पण्डित-प्रकाण्डैः संस्कृतयुवकानामादर्शभूतैर्महामहोपाध्यायश्रीगिरिधर शर्ममहोदयैश्चिरान्निरुद्धेलस्य संस्कृत-रत्नाकरस्य

पुनरपि संक्षोभः समुत्पादितः, साम्प्रतं तस्य कल्लोल-कलकलमाकर्ण्य धैर्य्य विन्दतेतरां चेतः । विगते वत्सरे च वाराणस्यां स्वरूपानुरूपमवतीर्णा-"अमरभारती" तु सुप्रभातस्य शक्तिरिव विद्योतते तराम् । श्रूयते च साम्प्रतवत्सरे काचन 'वल्लरी' नाम्नी पत्रिका प्रकाशिता भविष्यति वाराणसीत इत्यहो साफल्यं सामर्थ्यञ्च सुप्रभातस्य । महामण्डलीयः 'सूर्योदयः' 'ब्राह्मणमहासम्मेलन' श्चेति पत्रद्वयं प्राक्तनमेव । एवं यत्र वाराणस्यां संस्कृत पत्रस्य नामापि नासीत्, तत्रैव पञ्चपत्राणां प्रकाशनं भवतीति सुप्रभातस्यैव सुप्रभातमिदमिति प्रसीदतितमां संस्कृत-साहित्य-समाजः ।



एतस्मिन्नवसरे गुर्जरप्रान्तीयनडियाद-नगरात् 'पीयूष-पत्रिका' पीयूषमिव वर्षन्ती राजकीय-कारणकलापैरस्तंगता । काश्मीरस्थ-श्रीनगरात् प्रचरन्ती 'श्रीः'नाम्नी संस्कृत-त्रैमासिकपत्रिकाऽपि जीवनपूर्णा स्वावलम्बिनी च वर्तते । तस्याः सञ्चालकः सम्पादकश्च डा० पं. कुलभूषणमहोदयः पाश्चात्यशिक्षा-दीक्षितोऽपि केवलं संस्कृत-प्रेम्णा स्वयमेव संस्कृतमधीत्य स्वीयेनैव व्ययेन पत्रिकां सञ्चालयति । अयमप्यस्माकं सुहृत्तमः सुप्रभात—प्रणयी सुप्रभातेनैव प्रोत्साहितः पत्रं सञ्चालयतीति परं साफल्यं मन्यामहे । पञ्चैव वत्सरेषु अयोध्यानगर्याः 'संस्कृतम्' नाम मासिकं पत्रं प्रचलति । अस्य सम्पादकोऽप्यस्माकं परममित्रं सुप्रभातमादर्शीकृत्यैव पत्रं सञ्चालयति । परमनेन पत्रेण संस्कृत भाषाया एव गल-सम्मर्दनं क्रियत इति नितान्ततान्तस्वान्ता वयं न तत्र दृष्टिनिक्षेपं कुर्मः । न केऽपि मार्मिकाविद्वांसस्तमवलोकयन्ति । मन्यामहे,सम्पादक-महाभागा विमृश्य व्यवस्थां विधास्यन्तीति । एवं पञ्चवर्षाभ्यन्तरे विविधपरिवर्तनैः सह संस्कृत-पत्राणां प्रचारमालोक्य स्वीयं विपत्कालमपि सफलमेव सम्मनुते सुप्रभातम् ।



## हिन्दीज्ञानयात्रिमण्डलाभिनन्दनम् ।

रामनवम्यां सायं ५ वादनसमये अपारनाथ टेकरास्थे-उपदेशक-महाविद्यालये संस्कृत-साहित्य-समाजस्य विशिष्टमधिवेशनं समभूत् । यत्र कर्नाटक-प्रान्तीयवेङ्गलोरनगरस्थानां हिन्दी-भाषां तत्साहित्यञ्चाध्येतुमागतानत्र च 'हिन्दीकोविद' परीक्षां दत्त्वा स्वदेशे तत्प्रचाराय गन्तुकामानां 'हिन्दीज्ञानयात्रीमण्डल'—सदस्यानां साशीर्वाद-शुभाभिनन्दन-समर्पण-समारम्भः समजनि ।

वस्तुतो दक्षिणोत्तरभारतयोर्नितरां वैषम्यमासीत् । तच्च वैषम्यं भाषाया ऐक्येन, तद्द्वारा विचार विनिमयेन च दूरीकर्त्तुं शक्यम् । एतदर्थं दक्षिण भारते हिन्दी-प्रचारान्दोलनं महता वेगेन प्रचलति । तत्र दशवर्षाभ्यन्तरे ५०००० सहस्राधिकैर्दक्षिण-भारतीयैर्हिन्दी भाषा शिक्षिता । साम्प्रतं विशिष्टज्ञानलिप्सा तेषां हृदि जागरूका वर्वर्त्ति । अतस्तेषां हिन्दी ज्ञानयात्रीमण्डल' नाम्नी संस्था संस्थापिता विद्यते । यस्याः समुद्योगेन प्रतिवर्षं हिन्दीसाहित्याध्ययनाभिलाषिणश्छात्राः शतशः काश्यां, प्रयागे लवपुरादिहिन्दीभाषाकेन्द्रेषु पठन्ति, परीक्षां च ददति । तदयं तेषां प्रथमः पर्यायः काशीविद्यापीठे 'हिन्दीकोविद' परीक्षां दत्त्वा प्रस्थातुकाम आसीत् । तस्मिन्नवसरे संस्कृत-साहित्य-समाजेन यदभिनन्दनं प्रदत्तं तदविकलमत्रोद्ध्रियते ।

"अयि राष्ट्रभाषासमादरसमुत्सुकाः ! ज्ञानयात्रिमण्डलविद्यार्थिवर्गाः ! भाषा हि नाम मानवसमाज-संग्रन्थनस्य प्रधानं निदानम् । भाषासाम्येनैव विभिन्नप्रान्तीयानामपि भारतीयानां परस्परविचार विनिमयेन भारतीयराष्ट्रसंग्रन्थनकर्मणि महत्सौकर्य्यमागमिष्यतीति दक्षिणभारते भारतीय-राष्ट्र भाषां ( हिन्दीं ) प्रचारयितुं प्रबलप्रेमपरायणैः श्रीमद्भिर्यः खलु प्रयाससाध्यो महान् प्रयत्नः सततं सम्पाद्यते, तन्नितरां प्रमोदास्पदमस्माकम् ।

"हिन्दीभाषास्नेहेन सुदूरमिह सर्वविद्याकेन्द्रायमाणायां वाराणस्यां श्रीमतः सम्प्रेष्य तदीयोच्चशिक्षासमर्जनसमुत्सुकानां स्वदेशे च तस्याः प्रचाराय बद्धपरिकराणां महोत्साहसम्पन्नानां सस्वार्थत्यागं स्वदेश-समाज-साहित्य-धर्मादि-संरक्षणाय वास्तविकं सुदृढं समुद्योगं सर्वथा संविदधताम्, स्वल्पेनैव समयेन सर्वत्र भारते प्रसिद्धिमासेदुषां श्रीज्ञानयात्रिमण्डलपदाधिकारिणां कार्य्यकलापेन प्रमुदितमानसा वयं सर्वेऽपि विश्वविदितस्य भारते परमप्रसिद्धस्य विद्वद्वृन्दसमादृतस्य श्रीसंस्कृत-साहित्य-समाजस्य सम्मिलिताः सदस्याः, सम्प्रति श्रीमद्भ्यः साधुवादान् धन्यवादान् आशीर्वादांश्च वितरन्तः श्रीमतां सार्वत्रिकं साफल्यं सर्वाङ्गीणञ्चाभ्युदयं श्रीकाशीविश्वेश्वरात् समभ्यर्थयामहे ।

"श्रीमन्तश्च स्वराष्ट्रभाषाश्रद्धावन्तः स्वदेशस्य, स्वसमाजस्य, स्वसाहित्यस्य, स्वराष्ट्रस्य, स्वधर्मस्य च संरक्षणे बद्धपरिकरा भारतीयामार्य्यसंस्कृतिं तदाधारभूतां, सुरभारतीं सर्वभाषामातरं हिन्दीभाषाञ्च राष्ट्रजननीं समुन्नेतुं सर्वदा सन्नद्धाः स्युः । मा कदापि शिथिलप्रयत्ना भवेयुरिति शुभाशाभिः सम्वर्द्धयन्तः श्रीमतां सुस्थिरं विजयं शाश्वतिकञ्च सुप्रभातमाशास्महे ।"

विनयाय हि निर्यान्तु प्रतपन्तो दृढव्रताः ।
रक्षन्तु मानमार्य्याणां राष्ट्रभाषाप्रचारकाः ॥

श्रीमतां शुभाभिलाषुकाः,
**श्रीकाशीस्थ-संस्कृतसाहित्य-समाजसदस्याः ।**

× × ×

## महाभाष्य-दीपिका ।

सुप्रभाते महाभाष्यदीपिकायाः सञ्चिकात्र प्रकाशितम् । तदनन्तरमस्य सम्पादकाः श्रीमन्तस्त्यागमूर्त्तयो विद्वत्प्रवराः श्रीब्रह्मदत्तजिज्ञासु महोदयाः काशीतो लवपुरं गताः । अतस्तस्य प्रकाशः कियतः कालादवरुद्धं विद्यत इति विदितमेवास्ति सुप्रभातपाठकानाम् । एतदपि विदितमेवानुग्राहकाणां यत् पुस्तकस्यैक एवादर्शः समुपलब्धः । सोऽपि शर्मण्यदेशे (जर्मनी) । अतस्तस्य संशोधने, सम्पादने, टिप्पनी-निर्म्माणे च भूयान् परिश्रमो भवतीति प्रत्यङ्कं तस्य प्रकाशनं नियमतः कर्त्तुं न पारितम् । बहवः सुप्रभात-पाठकाः केवलं महावैयाकरण-भर्तृहरिप्रणीत-महाभाष्यदीपिका-संग्रहलोभेनैव सुप्रभातस्य ग्राहकाः सञ्जाताः । तैः कियत् कालं यावल्लोभसंवरणं विधेयम् । अग्रिमाङ्कतस्तस्य पुनः प्रकाशनं भविष्यति । तस्य मुद्रणे प्रूफसंशोधनेऽपि प्रचुरतरः कालः समपेक्ष्यते । परं वर्षाभ्यन्तरे तस्य द्वादश सञ्चिका नूनं प्रकाशिताः स्युरिति तत्प्रणयिभिर्न व्याकुलैर्भाव्यम् ।

× × ×

# संस्कृतज्ञानां कर्त्तव्यम्।

श्रीमान् डा० मङ्गलदेव शास्त्री, एम० ए०, डी० फिल्० ( आक्सन )

[अस्य लेखकाः श्रीमन्तः शास्त्रिमहोदयाः प्राच्य-पाश्चात्योभयविज्ञानविदः प्रथिता विद्वांसः सन्ति। एभिः संस्कृतच्छात्रजीवनम्, आङ्गलच्छात्रजीवनम्, पाश्चात्यदेशीयच्छात्रजीवनञ्चानुभूतम्। साम्प्रतमिमे युक्तप्रान्तीयराजकीयसंस्कृतपरीक्षा-व्यवस्थापकाः ( रजिष्ट्रार ) सन्ति। इमे प्राचीनसंस्कृत-शिक्षा-प्रणाल्यां परमश्रद्धावन्तः संस्कृतविदुषां छात्राणाञ्च हितैषिणः सन्ति। विगते मासे खेतान-संस्कृत-विद्यालयस्य वार्षिकोत्सवावसरे सभापतिपदमलङ्कुर्वद्भिस्तैर्विस्तृतं भाषणं प्रदत्तम्। तेषां भाषणस्य कियानपि महत्त्वपूर्णो भागस्तेषामाज्ञयैव प्रकाश्यते। एतेषां विचारा अवश्यं मननीयाः संस्कृतविद्वद्भिश्छात्रैश्च। —सम्पादकः]

अस्माकं माननीयैः पूर्वजैराचार्यैर्भारते व्यवस्थापिता दानप्रणाली यादृशी विद्यते, न तादृशी कापि भूमण्डले दरीदृश्यते। परमिदानीं नितरां प्रशंसनीया सा दानमर्यादाऽस्माकं दौर्भाग्येण स्वकीयं प्राशस्त्यमपहाय विकृतिमापन्ना विलोक्यते। यदीयं दानप्रणाली पुनरपि परिष्कृता प्राचीनभावमापन्ना स्यात्तदा भूयोऽप्यस्माकं परिस्थितिः समीचीना भवेत्। साम्प्रतिकी दानप्रणाली प्रायस्तामसं राजसञ्च मार्गमध्यास्ते। सात्त्विकं दानन्तु कदाचिदेव विलोक्यते। उक्तमेव भगवता श्रीकृष्णेनः—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम्॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम्॥"

इति श्रीमद्भगवद्गीता-गीतं दानत्रैविध्यं सुप्रसिद्धमेव। सात्त्विकदानेषु विद्यादानं सर्वमप्यतिशेते। तदुक्तम्:—सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते।" इति'

व्यतीतानि पञ्चविंशतिहायनानि, यदा मयापि वाराणस्यां संस्कृतच्छात्रजीवनं वर्षत्रयं यावत् यापितमासीत्। तदनन्तरमाङ्गलच्छात्रजीवनस्यापि भूयान्कालो व्यतीतः, परं यादृशं माधुर्य्यम् सारल्यं सरसत्वञ्च संस्कृतच्छात्रजीवने समनुभूतम् न तादृशं पुनराङ्गलभाषाध्ययनकाले।

कालप्रभावात् साम्प्रतं समाजे संस्कृतविदुषां छात्राणाञ्च तादृशः समादरो न दरीदृश्यते, यादृशोऽपेक्ष्यते, यथावा पूर्वमासीत्। तदुक्तम्—नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण। इति॥

एतस्यामप्यवस्थायां ये संस्कृत-समासक्त-मनसस्तपस्विन इव जीवनं यापयन्तोऽपि स्व-कर्तव्यपथमधिरूढाः दृश्यन्ते, तेभ्यो वस्तुतः सहस्रशो धन्यवादा दीयन्ते। एतादृशैरेव जनैर्हिन्दुधर्मस्य तन्मर्यादायाश्चाद्यापि संरक्षणं सम्पाद्यते। इमामवस्थां दर्शं दर्शं भाविसमुन्नतेराशा तेभ्य एव विधातुं शक्या। साम्प्रतमपि संस्कृतविदुषां छात्राणाञ्च जीवने यादृशी ऋजुता, पवित्रता, आदर्शवादिता, कष्टसहिष्णुता च समुपलभ्यते, तत्रास्माकं विद्यते महान् गर्वः। इदानीमपि ते सर्वेषामादर्शभूताः सन्ति।

भवद्भिराकर्णितमेव स्यात् यदाङ्ग्लशिक्षितेषु जीविका-समस्या नितान्तमुग्ररूपं विदधती दरीदृश्यते। तेषामिमां दशां दूरीकर्तुं कार्यरहितानां जीवनसमस्यां पूरयितुं च समितिस्थापनं ( वेकारी-जांचकमेटी ) नितान्तमावश्यकं समजनि। एतस्या दुरवस्थितेर्निदानमेत-

देव यदाङ्ग्लशिक्षितेषु युवकेषु स्वाभाविकं सारल्यम्, कष्ट सहिष्णुत्वम्, तपस्विजीवनम्-सर्वमेतन्नास्ति । शिक्षण काल एव ते गृहस्थानप्यतिशेरते । संस्कृतज्ञानां जीवन मद्यापि नियन्त्रितं नियमितं पूर्वोक्तदोषानाकृष्टं विद्यते । अत एव मया प्रोक्तं यत् स्वीयां संस्कृतच्छात्रावस्थां स्मारं स्मारमपरानपि तद्विधान् दर्शं दर्शं परं सन्तोष मञ्चतितरां चेतः ।

संस्कृतभाषायाः हिन्दुसंस्कृत्या धर्म्मेण च विद्यते घनिष्ठोऽविच्छिन्नतरश्च सम्बन्धः । यावत् पर्यन्तं भारतीया संस्कृतिः, हिन्दुधर्मश्च स्थास्यतः, तावदेव संस्कृत भाषायाः जीवनमपि सुस्थिरमेव सम्पत्स्यते । ये हि नाम साम्प्रतमिमाममरगवीं मृतां मन्यन्ते ब्रुवन्ति वा, तत्तेषाम-ज्ञानविजृम्भितमेव । अद्यत्वे संस्कृतभाषा न व्यावहारिकी, अतो मृतेति न वक्तुं शक्यते । इदानीमपि भाषाया-मस्यां तादृशं साहित्यं समुद्द्योतते यद् भूमण्डले महतां तत्त्वविदां मर्मज्ञानां विदुषाञ्चात्मशान्त्यै, अमन्दानन्द सन्दोहवितरणाय चालं भवेत् । अतएवास्माकं भाषा 'देववाणी' 'अमरभारती' इत्यदिभिः शब्दैराम्नायते । अस्या भाषाया आयतिर्न कदाचिदप्यन्धकारमयी भवेत् । अथ भारतीया सभ्यताऽपि संस्कृतभाषामन्तरा जीवितुं न शक्नोति । अतो ये विद्वांसश्छात्राश्च स्वीयं जीवन-मस्याः समाराधने समर्पयन्तः समालोक्यन्ते; तेऽस्माक-मेव न; अपितु सर्वेषामेव धन्यवादार्हाः सन्ति ।

× × ×

मम हृदये नितरामानन्दो वर्वर्ति यत्-पुनरपि सुर-गीरियं व्यपगतां स्वीयां प्रतिष्ठां वर्द्धयितुं प्रभवेदिति । परमस्माभिस्तदर्थमश्रान्तं बुद्धिपूर्वकं प्रबलतरः प्रयत्नो विधेयः । अन्यथा निराशैवस्यादिति प्रतीमः ।

अत्रविषये स्वकर्तव्यसमीक्षायै सर्वतः प्रथमं संस्कृत भाषाया अतीतसमये दृष्टिर्देया, तदैवास्माभिः प्रतिक-र्तुं शक्यते । प्राक्तनसमये संस्कृतभाषायाः कीदृशः प्रचार आसीदित्यनुभवोऽनेन कर्त्तुं शक्यते यदियम्प्राचीन ग्रन्थेषु 'भाषा' शब्देन व्यवहृताऽस्तीति; तथाहि-पाणिनि मुनिनाऽष्टाध्याय्याम् "पूर्वन्तु भाषायाम्" ( अ० ८। पाद २ । ९८ सू० ) इति, कात्यायनमुनिना "प्रत्यये भाषायां नित्यम्" इति, यास्काचार्येण च निरुक्ते "नूनमिति विचिकित्सार्थीयो भाषायामुभयमन्वध्यायम्" इति चोक्तम् ।

एभिः प्रमाणैरतिरोहितमेव यत्तदानीं संस्कृतभाषा केवलभाषाशब्देन व्यवहृताऽऽसीदिति । अनेनापि सुस्पष्टं प्रतीयते यत् तदा संस्कृतभाषायाः सर्वसाधारणेषु स्वाभाविकः प्रचार आसीत् ।

अत्र महाभाष्ये एकां ग्रामीणामुदकहारिणीम्प्रति कस्यचित् प्रश्नमाश्रित्य "उदहारि भगिनि ! या त्वं कुम्भं हरसि शिरसाऽनड्वाहं साचीनमभिधावन्तमद्राक्षीः" इत्युक्त्या तत्स्पष्टीकरणं जायते । तस्मिन्नेव भाष्ये कस्यापि वैयाकरणस्य सूतस्य चातीव रोचकसम्वादमव-लम्ब्य "तत्रायमप्यर्थः, इदमपि सिद्धम्भवति प्राजितेति, किञ्च भो इष्यत एतद्रूपम् ? वाढमिष्यते । एवं हि कश्चित् वैयाकरण आह-कोऽस्य रथस्य प्रवेतेति । सूत आह-आयुष्मन्नहं प्राजितेति । वैयाकरण आह— अपशब्द इति । सूत आह प्राप्तिज्ञो देवानां प्रियो नत्विष्टिज्ञः । इष्यत एतद्रूपमिति वैयाकरण आह—अहो । खल्वनेन दुरुक्तेन बाध्यामह इति । सूत आह-न खलु वेञः, सूतः, सुवतेरेव, सूतो यदि सुवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति ( २ ४ । ४६ । )" इतिसन्दर्भेणापि संस्कृतभाषायाः सर्वसाधारणे प्रचारो विज्ञायते ।

मध्यकालेऽपि संस्कृतभाषायाः साधारणजनेषु प्रचारं भोजप्रबन्धादिकेः—

'काव्यं करोमि नहि चारुतरं करोमि,
यत्नात्करोमि यदि चारुतरं करोमि ।

भूपालमौलिमणिमण्डित-पादपीठ !
हे साहसाङ्क ! कवयामि, वयामि, यामि ॥ १ ॥
विप्रोऽपि यो भवेन्मूर्खः, स पुराद्बहिरस्तु मे ।
कुम्भकारोऽपि यो विद्वान्, स तिष्ठतु पुरे मम' ॥२॥

इत्याद्युक्तिरेव प्रमाणम् । अनेन स्पष्टं ज्ञायते यद्भविष्यति काले संस्कृतभाषायाः समुन्नतये कीदृश आदर्शः स्वसमक्षं स्थापनीयः । प्रथमं तावद् अस्माभिरत्र विषयेऽत्युदारविचारैर्भवितव्यम् । इदमप्यावश्यकं यत्संस्कृतविद्भिः प्राचीनकाल इव दर्शन—ज्यौतिष—विज्ञानादि विषयाः प्राक्तनविचारेण सममाधुनिकैतद्विषयविचारधारयाऽपि पूर्णतयाऽभिज्ञानं प्राप्तव्यम् । एवम्प्राचीनविभिन्नसंस्कृतसाहित्यशाखानामपि सम्यगभ्यासो विधेयः ।

अद्यत्वे संस्कृतभाषाया अध्ययनाध्यापनयोः केवलं त्रिचतुश्शतशताब्द्यामेव लिखितानां ग्रन्थानां बहुधा प्रवेशो दृश्यते । प्रत्येकविषयेषु बहुसंख्यका महत्वपूर्णाः प्राचीनग्रन्थाः सन्ति, यान् कश्चित्कदापि नावलोकयत्यपि । यथा न्याये—न्यायभाष्य—न्यायवार्त्तिक –न्यायमञ्जर्यः । नीतौ कौटिलीयार्थशास्त्रादि । व्याकरणे सम्पूर्णमहाभाष्यादि । साहित्ये—भासादीनां नाटकादि । वैदिकसाहित्यस्य तु महानभाव एव ।

प्राक्तनकालेऽध्ययनाध्यापने एतावत्संकुचितविषयके नास्ताम् । नास्त्यस्माकमीदृशाभिप्रायो यद् साम्प्रतिकप्रौढ पाण्डित्यं न विधेयमिति, किन्त्वयमेवाभिप्रायोऽस्माकं सहस्रसंख्याकेष्वध्येतृषु तत्तत्प्राचीनग्रन्थाभ्यासितारोऽपि बहवो विद्वांसः सम्भवन्तु । संस्कृतज्ञविद्वत्सु—एतस्यात्यावश्यकता वर्त्तते, यत्तेषु परस्परविचारविनिमयसहिष्णुता समुत्पद्यतामिति ।

हिन्दुधर्मो हि एकः समन्वयात्मकधर्मस्वरूपः । इदमेव तात्पर्यं यदत्र विभिन्नसंप्रदायानुयायिनः स्वस्वव्यक्तित्वमभिरक्षन्तोऽपि परस्परं समादर-बुद्धयो भवेयुः । ईदृशाभिप्रायेण संस्कृतविदुषां कर्त्तव्यमेतद् यत् परस्परविचार समालोचनां कुर्वन्तोऽपि अनाक्षिपन्त उदारहृदया एव भवेयुः । सिद्धान्तसमालोचनायां व्यक्तिगतविचार प्रश्नानामवसरो न देय इति ।

संस्कृतच्छात्राणामपि विशेषतो वाराणस्यामनेकाः समस्याः विद्यन्ते, तास्वपि कदाचित् कदाचित् सशान्तिकं विचारदृष्टिः प्रक्षेपणीया । सर्वापेक्षया महत्कर्त्तव्यं विद्यालयसंचालकानामिदमास्ते, यदल्पीयस्यामेवावस्थायां दूरत आगतानां छात्राणां जीवनचर्यायाम्पूर्णतो ध्यानं देयम् । तच्चरितविशोधनस्य भविष्यज्जीवनस्य च पूर्णतयोत्तरदायित्वं तानेवाश्रयते । सर्वतः प्रथमं नित्यसंध्यावन्दने, शरीरपोषकव्यायामे छात्राणां ध्यानमाकर्षणीयम् ।

सामूहिकजीवनलाभप्रदर्शनाय प्रतिविद्यालयं पाक्षिकया मासिकया वा छात्राणां समित्या भवितव्यम् । यस्यां छात्रवर्गाः लेखैर्भाषणैश्च निजविचारोन्नतिविकाशं परिमार्जनञ्च कर्त्तुं शक्नुयुः । सर्वतोभावेन स्वच्छताऽऽवश्यकतायामपि छात्राः समुपदेष्टव्याः । नावश्यकमिदं यत् छात्राः स्वावश्यकतातोऽधिकवस्त्राणि परिदध्युः।परन्तु इदमेवावश्यकं यत्किञ्चिदपि वस्त्रं परिहितं भवेत् तत्सर्वं निर्मलं स्यात् । यदि वयं पूर्वोक्तकर्तव्यानां परिपालनं विदध्यामः, उपर्युक्तादर्शांश्च स्थापयेम, तदा तानि दिनानि दूराणि न सन्ति; येषु अयं देशः स्वं तादृशं गर्वं प्राप्नुयात्, यः पुरातनसमये प्राप्त आसीत् । यस्योल्लेखोऽतीव सौन्दर्येण भगवता मनुना मनुस्मृतौ प्रदर्शितः—

"एतद्देश प्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन्, पृथिव्यां सर्वमानवाः ॥



# सुप्रभातम्

श्रीमान् ईशदत्त पाण्डेयः, "श्रीशः", कविरत्नम्

अपह्नुतिः ।

प्राचीयमस्ति नहि, काऽपि वधूर्नवीना
नैषाऽप्युषा किल तदीयमुखाम्बुजाभा ।
नैवाम्बरं जयति तद्वसनं नवीनम्
तन्मन्दमन्दहसितं न तु 'सुप्रभातम्' ॥

नायिका ।

नीता निशा सुमुखि ! तेन नतेन सर्वा,
हाङ्गीकृतस्तदपि नैव नु मानभङ्गः ॥
मानं यदैव विगतं सखि ! मोहजातं
जातं तदैव भुवने खलु 'सुप्रभातम्' ॥

अन्योक्तिः ।

शोकं विधेहि नहि भारतभृंग ! नूनं
यत्पारतन्त्र्यरजनीगतपद्मबद्धः ॥
भूयो भविष्यति चिराय सखेऽधुनैव
स्वातन्त्र्य-सूर्य-किरणारुण-सुप्रभातम् ।

वसन्तः ।

पद्मं सुसद्म सुखिनां सलिलं सलीलं
कान्ताश्च कान्तनिरता वसुधा सुधार्द्रा ॥
सत्पावनो नु पवनोऽपि यतस्तदेतद्
धन्यं वसन्ततिलकाङ्कित-सुप्रभातम् ॥

ग्रीष्मः ।

चण्डांशुभिः सकललोकमलं सशोकं
कुर्वत् रसालरसितं सुषमा-निधानम् ॥
द्युत्या दिगन्तमखिलं सुविधाय दिव्यं ।
ग्रीष्मोष्मणा सह विभासति सुप्रभातम् ।

वर्षाः ।

बुद्ध्वा प्रियं सदनतो ननु गन्तुकामं
दृष्ट्वा च घोरजलवर्षणजान्धकारम् ॥
मुग्धा वधूर्वदति सम्प्रति रात्रिरेषा
गच्छेर्यदा प्रिय ! भविष्यति सुप्रभातम् ॥

शरद् ।

चञ्चच्चकोरकलकूजितचारुचन्द्रं
मन्दं विधाय निजनव्यतमांशुजालैः ॥
सद्यो विमर्द्य च सरोरुहकोशबन्धं
लोके समुल्लसति शारद-सुप्रभातम् ॥

हेमन्तः ।

व्यर्थं कदर्थ्य रमणी रमणीयरूपाः
इन्दो ! मदेन गगने विचरस्यहो किम् ॥
किं ज्ञायते न भवतोऽपि मनोऽभिरामं
हैमन्तिकं धुरि भविष्यति 'सुप्रभातम्' ॥

शिशिरः ।

लावण्यलोलललनालपनानि धीरं
धीरं विचुम्ब्य च विधातृशरीरकम्पम् ।
सीत्कारकारकमदो वितरत्तुषारं
सारं भुवो जयति शैशिर सुप्रभातम् ॥

सुप्रभातम् पत्रम् ।

देवीप्रसादभरितं सुगिरीशगौरं
सद्दुःखभंजनकरं निकरं सुधाम्नः ॥
कान्तं नितान्तमधिकाशि विकाशि-शान्तं
सारस्वतं सरति सुप्रभ-सुप्रभातम् ॥

इयं समस्यापूर्त्तिः संस्कृत-साहित्य-समाजस्य कवि सम्मेलने पठिता, पुरस्कृता च ।

# शिक्षाया आदर्शः ।



महतस्तमसः पारे पुरुषं ह्यतितेजसम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥

ब्रह्मशक्तिर्हि स्वस्वरूपं द्विधा विभज्य बन्धं मोक्षं च विदधाति। जगत्यज्ञानजालं प्रसारयन्ती सृष्टिकर्त्री, तमःप्रधाना अविद्या, द्वितीया सा विद्या, या जीवान् आत्मोन्मुखान् विधाय मुक्तिपदे प्रतिष्ठापयति। विद्याऽविद्ये ज्ञानज्ञाने जनयतः। अविद्या ब्रह्मतः स्वतन्त्रा नृत्यन्ती सर्वान् मायापाशे पातयति। विद्या तु निजान् ज्ञानिभक्तान् स्वरूपप्रदर्शनपुरस्सरं ब्रह्मपारावारे निमज्जयति, निमज्जति च। अविद्यायाः क्रीडास्थली बहिर्जगत् संसारः, विद्याया अन्तर्जगत् ज्ञानराज्यम्। याथातथ्यमविद्यास्वरूपं परिचीय विद्यासेवनेन ब्रह्मानन्दाम्बुधावगाहनमेव शिक्षाया अद्वितीयमुद्देश्यम्।

परमपूज्यपादास्त्रिकालद्रष्टारो जगद्गुरवो महर्षयः सर्वत्रैवैवमुक्तवन्तो यदन्तःकरणमेव जीवानां सुखदुःखयोः, धर्माधर्मयोः, मोक्षबन्धयोश्च कारणम्। तच्च मनोबुद्धि—चित्ताहङ्कारैश्चतुर्धा विभक्तम्। संकल्पविकल्पात्मकं मनः,निश्चयात्मिका बुद्धिः, मनोनर्तनकारि संस्कारधारकं चित्तम्, स्वतन्त्रास्तित्वनिदर्शकोऽज्ञानबीजरूपोऽहङ्कारः। सूक्ष्मपर्यालोचनेन तु मनसोऽन्तर्विभागश्चित्तम्, बुद्धेरहङ्कार इति सिध्यति। चित्तप्रेरणयैव मनः सकल्पं विकल्पं वा विदधाति। स्वीयस्वतन्त्राहङ्कार प्रयोजकतयैव स्वविचारानुरूपं बुद्धौ सदसद्विवेको जन्म लभते। अविद्यानिकेतनं मनः, विद्याश्रयीभूता बुद्धिः। अतिसूक्ष्मपर्यालोचनया किल मनस एवाऽशुद्धं शुद्धमिति भेदद्वयमवगन्तव्यम्। बुद्धिरपि द्विविधा—आत्मपरा इन्द्रियपरा च। अशुद्धेन मनसा, इन्द्रियपरया बुद्ध्या च क्रियमाणकार्यकलापस्य परिणामो विषयसुखम्, शुद्धेन मनसा आत्मपरया बुद्ध्या च विधीयमानव्यापारसमूहस्य फलम् आत्मानुसन्धानरूपं ब्रह्मानन्दनिमज्जनम्। अतो हि यत्र शिक्षाप्रणाल्यामशुद्धमनस इन्द्रियपराया बुद्धेश्च लालनं पालनं च स्यात् सा नोपादेया। यत्र हि ज्ञानप्रदायिन्या स्वस्वरूपप्रकाशिन्या महादेव्या विद्यायाः समुपासनया शुद्धस्यमनसः, आत्मपराया बुद्धेश्च क्रमविकासः, सैवोपादेया कल्याणकारिणी च। अत्रैव प्राचीनभित्तौ जगदेकाश्रयः पुरातनोऽपि सनातनो महामहिमशाली विशालः शिक्षादुर्गः परमपावने सर्वतः प्राचीने भारतदेशे जगद्गुरुभिर्महर्षिभिर्निर्मितः।

व्यक्ते र्जातेर्वा स्वस्मिन् विद्यमानस्य मौलिकभावस्योद्भावनमेव शिक्षाया अन्तिमम् उद्देश्यम्। यथा च हयत्व-हस्तित्व-विकासयित्री किल हय–हस्तिनोः साधीयसी शिक्षा, तथैव या स्वगतमौलिकभावानां मनुष्यतादीनां पूर्णविकासपूर्वकं मानवान् स्वरूपोपलब्ध्या पूर्णतापदे प्रतिष्ठापयति, सैव मानवशिक्षा शिक्षेति पौरस्त्यः सिद्धान्तः। येन शिक्षाविधानेन नारीणां स्वस्य मौलिकधर्मस्य जगन्मातुरंशस्याविर्भावः स्यात्, स्त्रियो जगन्मातृत्वमधिगच्छेयुस्तदेव शिक्षाविधानं स्त्रीणां हिताधायकम्। जगत्पितुर्जगन्मातुश्चांशकलामाश्रित्य पुमांसः स्त्रियश्च समुत्पद्यन्त इति सांख्यविदः। अतो हि यया शिक्षणसरण्या पुरुषाणां जगत्पितृभावस्य स्त्रीणां च जगन्मातृभावस्य सम्पूर्णो विकासः स्यात् सैव समादरणीया समुपादेया च, नेतरेति। न केवलं मानवीयस्य पञ्चभूतसंहतिरूपस्य स्थूलशरीरस्यैव, प्रत्युत

तेन साकं सूक्ष्म-कारणयोरपि शरीरयोरात्मनश्च समुन्नयनं यया सम्पद्यते, सैव वास्तविकी शिक्षा ।

विद्यायाः संक्षेपतो भेदद्वयमवगन्तव्यम् ❀ अपरा, परा च । इहामुत्र वा सर्वविधानामपि सुख समृद्धीनामुपलब्धिमूलिका समस्ताऽपि विद्याऽपरा, स्वरूपोपलब्धिप्रदा परा चेति । उभाभ्यामेव विद्याभ्यां पराऽपराभ्यां समेधितशरीरा शिक्षासरणिर्लोकहिताधायिका । केवलं कलाकौशल-शिल्पसम्पत्तिपदार्थविद्यादीनामशेषपरिज्ञानमेव न शिक्षाया उद्देश्यम्; किञ्च सादृधर्माधिभौतिक्या समुन्नत्या आधिदैविकी, आध्यात्मिकी च समुन्नतिः; शरीरस्य, मनसः, बुद्धेः, आत्मनश्च वा क्रमोन्नतिर्यया सम्भवति, सैव शिक्षा सर्वाङ्गसम्पूर्णा सदादर्शरूपा च ।

सर्वेऽपि जागतिकाः पुरुषार्थाः कामार्थधर्ममोक्षनाम्ना चतुर्धा विभक्ताः । तदनुसारेणैव समस्तोऽपि मानवसमाजः शूद्र—वैश्य—क्षत्रिय—ब्राह्मण भेदेन चतुर्विधः ।‡ ब्राह्मण-क्षत्रिय-वैश्या द्विजातय उच्यन्ते । चतुर्थो वर्णः शूद्रः । पञ्चमो वर्णः कोऽपि नास्ति संसारे । अतस्तत्तद्वर्णबालकेभ्य आगर्भनिवासादेव तत्तत्पुरुषार्थशिक्षणं पुरा समनुष्ठीयतेस्म । मानवसमाजस्य सर्वतः समुन्नतिकृते चातुर्वर्ण्येन चतुःपुरुषार्थसाधनं हि प्राचीनशिक्षायाः सदुद्देश्यम् ।

शिक्षां द्वारीकृत्य यस्या जातेः सामाजिकी व्यवस्था सर्वतः साधीयसी, सैव सभ्येति गीयते । शिक्षारीतिमहिम्नैव विद्या, ऐश्वर्यं, बुद्धिः, संहतं विनयनसंवलितं लोकवलं च सर्वमिदं मानवजातौ समेधते । विद्यायाः प्रभावेण, ऐश्वर्यस्य साहाय्येन, सुबुद्धिजनितविचारशक्तेरुपयोगेन समवेतेन विनीतेन मनुष्यबलेन च सभ्यमानवजाति र्यदिच्छति तदेव विधातुं शक्नोति । शिक्षामाहात्म्येनैव धर्मनीतिः, राजनीतिः, अर्थनीतिः, समाजनीतिश्च पूर्णतामधिगच्छति । धर्मनीतिं द्वारीकृत्य मानवजातिर्नियमत आध्यात्मिकीमुन्नतिमनुष्ठातुं प्रभवति । अस्योदाहरणं प्राचीनभारते समुपलभ्यते । यया राजनीत्या प्रजाया राज्ञश्च स्वतन्त्रता मर्यादा च सुरक्षिता स्यात्, उभयोः सहानुभूत्या सहायतया च राज्यशासनं विधीयेत, सैव राजनीतिरुत्तमा । अस्यादर्शो रामराज्ये लभ्यते । व्यापारनीतिः देशस्य जातेश्च वर्द्धयति ऐश्वर्यम् । प्राचीने भारते सर्वविधा समर्घतैवास्य बलवदुदाहरणम् । यद्यपि पाश्चात्यः प्रदेश इदानीमर्थनीतावतीव प्रवीणः, परं हि प्राचीनं भारतमपि नास्ति न्यूनम् । अधःपततोऽपि भारतस्य व्यापारिकं महत्त्वं विलोक्यैव भारते यूरोपीयाः पदं निदधिरे । सर्वप्रथमं वासकोडीगामा नामको जलमार्गमाविष्कृत्य यूरोपं भारताभिमुखं चकार । प्राचीना भारतस्य समाजनीतिस्तु समस्तेऽपि भूमण्डले न तुलां विभर्त्ति । धर्ममूलिकाया वर्णाश्रमश्रृङ्खलापरिगृहीताया भारतीयसमाजनीतेः प्रशंसनं तु सम्प्रति यूरोपीया आमेरिकाश्च सुधियो मुक्तकण्ठं कुर्वते । सर्वमिदं भारतीयप्राचीनशिक्षापद्धतेः सदुदर्कविजृम्भितमेव ।

पूर्वोक्तं विद्याऽविद्ययोर्दार्शनिकं सिद्धान्तं संमुखी-

---

❀ द्वे विद्ये वेदितव्ये परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद शिक्षा कल्पो व्याकरणम् निरुक्तं छन्दो ज्यौतिषमिति । अथ परा यया तदक्षरमधिगम्यते । ”

—मुण्डकोपनिषत् ।

‡ ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ॥—मनुस्मृतिः

कृत्य प्राचीने काले महर्षयः शिक्षापद्धतिं परिचालितवन्तः। ब्रह्मचर्य—गार्हस्थ्य-वानप्रस्थ—संन्यासनामधेयेषु चतुर्षु आश्रमेषु, ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-संज्ञकेषु चतुर्षु वर्णेषु, प्रवृत्ति—निवृत्ति-धर्मयोराचार-निर्णयादिषु च सर्वत्रैव सर्वजीवहितकाम्यया जनानामधिमानसं प्रकृत्यैव समुद्भूतस्याविद्याप्रवाहस्य प्रणाशपूर्वकमुत्तरोत्तरं ज्ञानप्रकाशकविद्याशक्तिप्रादुर्भावनमेव प्राचीने भारते शिक्षालक्ष्यं स्थिरीकृतम्। तेनैव ब्रह्मचर्यं चरद्भिर्गुरुगृहमधिवसद्भिर्ब्रह्मचारिभिराचार्य-सेवातदाज्ञापरिपालनपूर्वकं विद्या अधीयतेस्म। सर्व-शास्त्रपारदृश्वानो धर्मकामा अलुब्धा आचार्या अपि पुत्रनिर्विशेषान् स्वशिष्यान् यथाधिकारं स्वस्वकर्त्तव्य-पालनरूपविद्याध्ययनमार्गे परिचालयन्तस्तान् समाज-सेवनदक्षान् विहितवन्तः। गृहिणोऽपि निजोद्दामप्र-वृत्तिधर्मेऽपि निवृत्तिधर्मसब्धयपुरस्सरं, वृद्धेष्वादरं, समानेषु प्रेम, लघुषु स्नेहं कारं कारं स्वकीयं गृहस्थधर्मं परिपालितवन्तः। वानप्रस्थाः सन्यासिनश्च स्वीयमलौकिकं तपस्त्यागादिकं धर्मं विदधाना निष्कामभावेन समाजसेवनमकुर्वन्। ब्राह्मणानां तपः, स्वाध्यायः, धनाद्यैश्वर्यपरित्यागश्च, क्षत्रियाणां पुत्रवत् प्रजापालनं, धर्मयुद्धे प्राणविसर्जनं च, वैश्यानां कृषिः, गोरक्षणं, वाणिज्यं, स्वधर्मवृद्ध्यै वा धनोपार्जनं च, शूद्राणामलौकिकः समाजसेवाधर्मः, कलाकौशलम् नगरपरि-ष्कृतिप्रबन्धादयः सर्वेऽपि वर्णाश्रमसदाचाराः शिक्षणसुप्रबन्धपरिणामरूपा विद्यन्ते स्म। शरीरमनो-बुद्धीनां क्रमशो मल-विक्षेपावरणानि कर्मोपासनाज्ञानैः प्राणाश्य विद्यासाहाय्येन स्वस्वरूपोपलब्धेरनुष्ठानम्, अविद्या-प्रभाव-प्रणाशपूर्वकं विद्याशक्तिप्रवर्द्धनमेव भारतीयायाः प्राचीनशिक्षाया आसीत् लक्ष्यम्।

अधुनातनी पाश्चात्यप्रवर्तिता शिक्षापद्धतिः सर्वथाऽध्यात्मिकलक्ष्यबहिर्मुखी परिदृश्यते। तदीयायां शिक्षणसारण्यामुपर्युक्तविद्याऽविद्याविचारलेशोऽपि न निभाल्यते। यथा च वास्तविकमानवत्वप्राप्तिः, अभ्युदयनिःश्रेयसाधिगमश्चेत्यादिकं प्राच्यायां गरीयस्यां प्राचीनशिक्षापद्धतौ सुरक्षितं, न तथा पाश्चात्यायां शिक्षापरिपाट्यामिति निश्चप्रचम्। यूरोपदेशीया शिक्षापद्धतिरैहलौकिकसुखावाप्तिमूलिकैव। पाश्चात्यानामाश्चर्यकरः पदार्थविद्याऽऽविष्कारः, शिल्पोन्नतिः, युद्धरीतिः, तदर्थं च शस्त्रास्त्राणामाविर्भावः, धार्मिक्यः, सामाजिक्यः, राजनीतिक्यश्च नीतयः, संघटनम्, वायु-धूम्र-स्थल—जल—यानादयो निखिला एवाविष्कारा ऐहलौकिकसुखावाप्तिमूलका एव परिदृश्यन्ते। यद्यपि शिक्षायां कामार्थावपि ध्रुवं प्रयोजनीयतामावहतः, परं हि लक्ष्यभूतौ धर्ममोक्षावेव। केवलमैहलौकिकं सुखसाधनं न भारतीयशिक्षायामभिप्रेतम्। तद्धि नास्तिक्यमाविर्भावयति। ईश्वरीयविज्ञानविहीनायाः शिक्षणसरणेर्दुष्परिणामः सम्प्रति पाश्चात्यैरनुभूयते सन्तप्यते च।

यूरोपीयगतमहायुद्धात् परं शिक्षाप्रगतिपरम्परेयं पाश्चात्या नितरां नैरङ्कुश्यमापद्यत। नारीणां निर्लज्जतापरिचायकं परिच्छदं, शिथिलप्रायं समाजबन्धनं, धार्मिकसामाजिकराजनीतिकसमुच्छृङ्खलत्वादिकं सीमानमतिक्रम्य प्रवर्धमानं निभाल्य चेखिद्यन्ते सचेतसां चेतांसि। अमेरिका—यूरोपादिषु परमात्मनोऽस्तित्वे तत्रत्यनिरङ्कुश—नर—नारीणां मताधिक्यं परमप्रमाणकोटौ परिगण्यते। तत्रत्यैः प्राणप्रियोऽपि स्वीयो धर्मो दैनन्दिनं निःशङ्कश्च परिहीयते। यस्य नास्ति कोऽपि धर्मः, स नास्तिकोऽपि सर्व्वशिरोमणित्वेन प्रख्याप्यते।

समितिविशेषेषु तत्रत्याः स्त्रियः पुरुषाश्च नग्नाः सम्मिलन्ति ! सर्वमिदमालोक्य नेदं तिरोहितमन्तर्दृष्टिसम्पन्नानां विपश्चितां यत् सभ्यतां तिरस्कुर्वत् पाश्चात्यं जगदिदानीमसभ्यताभिमुखमग्रेसरतीति । यदि चायं प्रवाहो न निरुध्येत, तर्हि ऐतिह्यप्रसिद्धाः प्राचीनाः पाश्चात्या बहुविधा जातय इव, साम्प्रतिकीयं पाश्चात्यजातिरसभ्यतां प्राप्य नूनं पतिष्यति ।

पाश्चात्यो वात्यावर्त्त एष व्यापकत्वात् एशियाखण्डं भारतवर्षमप्यवास्कन्दति। तत्प्रभावत एवात्रापि धार्मिकाः सामाजिकाश्च विप्लवाः परितः प्रवर्द्धमानाः परिदृश्यन्ते। वर्णाश्रमबन्धसुरक्षिता, संयमशालिनीयमार्यजातिः सदैवस्वभावत एव निरङ्कुशता–प्रतिरोधिनी। महनीयाः प्राचीना महर्षयः कर्मोपासनाज्ञानराज्येषु सामाजिकेष्वधिकारनिर्णयेषु च पार्थक्यमधिकाराणां निर्दिष्टवन्तः। वर्ण-आश्रम-पुरुष-नारी-प्रवृत्ति-निवृत्त्यादीनामधिकारा विभिन्ना एव स्वाभाविकाः प्रकृतिसिद्धाश्च । या च मानवजातिरधिकारभेदं प्राकृतिकमुल्लङ्घ्य स्वभावधर्मं तिरस्करोति, नूनं सा तेनैव स्वकृतदुष्कृतेन निपतन्ती कालकवलिता भवतीति जागतिक इतिहास ऊर्ध्वबाहुर्विरौति ।

एकदा कश्चन जापानदेशीयो विद्वान् यूरोपे वक्तृताप्रदानावसरे यूरोपीयान् सम्बोध्य प्रोवाच 'द्विसहस्रवर्षेभ्यः पूर्वं यदा वयं जापानीयाः संसारेण सह शान्तिमूलकं व्यवहारमकुर्म, सूक्ष्मकलाविद्यायां प्रवीणा आस्म, तदानीमस्माकं गणनाऽसभ्यजातिष्वभूत्, यदा प्रभृति जात्यन्तरेणास्माभिः संग्रामः प्रारब्धो लक्षशो नरहत्या कृता, तदाप्रभृति यूरोपवासिभिर्भवद्भिर्वयं सभ्येषु परिगणिता'' इति ।

प्रोफेसर हक्सूले महोदयः पाश्चात्यां पद्धतिमालोचयन् व्याजहार—''सर्वोच्चकोटेराधुनिकसभ्यताया अभ्यन्तरे न मया चिरजीवनलक्ष्यम्, उचितायाः समुन्नतेरादर्शो वा निभाल्यते; यदि विद्यमानसभ्यताया ज्ञानलाभस्य वा प्रकृतौ बलात्कारः, अर्थकामवृद्धिद्वारा स्वकीयाभाव-लालसा–विलासिता-प्रवर्द्धनेनेव लक्ष्यम्, येन साधारणजनता शारीरिक्या नैतिक्याश्चावनतेः पराकाष्ठामासादयति, तर्हि मया निःसंकोचमुदीर्यते यत् तादृश एको धूमकेतुरुदीयात् येन नूनमेवाधुनिकसभ्यतायाः समूलनाशः स्यात् ।

डाक्टर ए० आर० वालेसमहोदयो जगाद—''गुड़क-बारूद-वृष्टिः, जीवहननम्, देशान्तरेषु जात्यन्तरेषु च निष्ठुरं निरङ्कुशमाधिपत्यम्, नैतिकावनतेः पराकाष्ठा, कष्टप्रदानपूर्वकमन्यासां जातीनां दासत्वशृङ्खलया बन्धनमित्यादि किल पाश्चात्यसभ्यताया उद्देश्यम्'' इति ।

मेरी करेली महोदयोऽब्रवीत्— × ''सभ्यतेत्यति महान् शब्दः । स्वीयमभिमानमहङ्कारं वा चरितार्थयितुम्, अन्येषां सन्निधाने दम्भं दर्शयितुं च शब्दोऽसावतीव मनोहरो मधुरश्च । वयं सभ्या इत्यभिमन्यामहे- यथाऽस्माकं खृस्तमतावलम्बिताया अहंकारः । परमेतत् सर्वं केवलं दम्भमात्रमेव । वस्तुतो वयमसभ्या एव। आस्माकीनं जीवनं पूर्णरूपेण असभ्यतामयमेव । जातीयः पक्षपातः, जात्यन्तरेण द्वेषद्रोहाचरणम्, धनलोभः, ईर्ष्या, पाशविकी विजाति–दलन-वृत्तिरित्यादयो भावो अस्माकमसभ्यत्वे बलवत् प्रमाणम् ।'' इति ।

पूर्वं सङ्कुचितो मनस्वी लार्ड मेकाले महोदयो—

यो हि भारतस्य प्रधानशासकः सम्राट्प्रतिनिधिरासीत्-उक्तवान्-"आङ्गलशिक्षाद्वारा भारते तादृशो मानवसमाजः प्रकटितः स्यात् या रुधिरेण वर्णेन च हिन्दुः, परन्तु आचारेण विचारेण अहिन्दुरेवेति"।

विजयिनी जातिर्यदा कामप्यपरां जातिमात्मसात्करोति, तदा निजशासनसुधारशिक्षाद्युपायैर्विजितजातेर्जातीयविशेषतां प्रणाशयितुं चेष्टते। नैतेन विना जितजातिः पूर्णरूपेण तदधीनतामङ्गीकरोति। इमामेव कूटनीतिमनुसृत्य विजयिनी जातिर्विजितजातेः सर्वप्रथमं शिक्षासूत्रमेव स्वहस्तगतं विदधाति, क्रमतश्च पराजिताया जातेरखिलं विशेषत्वं विनाशयति।

भाषया साकं भावस्य महिष्ठः सम्बन्धः। जातीयस्य भावस्य समूलमुन्मूलनार्थं तदीयाया भाषाया प्रणाशनम्, मृतभाषात्व-ख्यापनं वा नितान्तमावश्यकं भवति। अत एव विजेत्री जातिः शिक्षाद्वारा पराजितजातेर्भाषां मृतां विधाय स्वीयभाषाप्रभावं विस्तारयति। यदा च रोमनजातिः सिलिसियादेशं निजाधीनमकार्षीत्, तदा तं पूर्णरूपेण पराधीनं कर्तुं सिलिसियनभाषां विनाश्य नवनवान् अनेकान् स्वभाषाविद्यालयान् उद्घाट्य च स्वीयां लैटिनीं गिरं प्रचारितवतीति नाप्रत्यक्षमितिवृत्तविदां विपश्चिताम्।

जातेः प्राचीन इतिहासो जातीय-मौलिक-भाव-परिपोषकः। विजयिनी जातिः पराजितजातेरितिहासं विगुणय्य स्वकपोलकल्पितं शिक्षयित्वा च शिक्षार्थिनां नवयुवकानामधिमानसं स्वदेशीय-प्राचीन-महापुरुषान् प्रति श्रद्धामुत्पादयति। स्थूलशरीरं हि सूक्ष्मस्यैव देहस्य विस्तारमात्रम्। स्थूलशरीरभाववेषादयः सूक्ष्मे कारणे च शरीरे भावान्तरमुत्पादयन्त्येव। वेषाचारादीनां स्थूलशरीरेणैव सम्बन्धः। वेषाचारादौ समुत्पन्नेन भावान्तरेण, अर्थात् स्वीयं वेषमाचारमपहाय विजातीयवेषाचारग्रहणेन, विजातीयो भावो ध्रुवमेव मनोदुर्गमधिकरोति। अतो हि शिक्षानुशासनेन विजयिनी जातिर्विजिताया भाववेषाचारादीन्, जातिगतान् संस्कारान्, सामाजिकीं रीतिं, जीवनलक्ष्यं चेत्यादि प्रणाशयति। पथिभ्रष्टा पराजिता च जातिर्विजयिन्यामात्मसमर्पणमेव स्वोन्नतिमभिमन्यते! कालान्तरे पराजितजातेः सत्तानाशो भवतीति बहुत्र विदितमेव तद्विदां सुधियाम्। तस्मात् जातीयजीवनध्वंसिकायामस्यां घोरदुर्गतौ स्वीयविशेषता—संरक्षणं सर्वेषां कर्त्तव्यम्। अध्यापको मैक्समूलरमहोदय एकत्र व्याजहार-—"या जातिः स्वकीयमतीतगौरवं विस्मरति, सा निजजातीयचरित्रावलम्बनं परित्यजति। यदा च जर्मनजातिरवनतिकूपे राजनीतिके निमज्जतिस्म तदा सा नावलोक्योपायान्तरं, स्वीयेऽतीत इतिहासे ध्यानमदात्, तेनैव च भविष्यन्त्या जातीयसमुन्नतेराशा तदन्तःकरणे प्रतिष्ठिताऽभवत्"।

Put new wine in the old bottle the bottle will burst पुरातने पात्रे नवीनासवस्थापनेन पात्रमेव नश्यति। अतः प्राचीनसंस्कारशृङ्खलिताया जातेर्न नूतनसंस्कारसंयोगेन, प्रत्युत प्राचीनसंस्कारप्रवर्त्तनेनैव समुन्नतिः सम्भाव्यते। नहि नूतनशिक्षासरण्यां, विशेषतः पाश्चात्यायां दोषाविष्करणमेव मदीयमुद्देश्यम्। तत्र सन्ति संख्यातीता उपादेया गुणा विषयाश्च। किन्तु पराधीनेऽत्र भारते न ते विषया दासत्वशृङ्खलानिगडितहस्तपादानां भारतीयविद्यार्थिनां कर्णगोचरीक्रियन्तेऽधिकारवद्भिः। कारणमस्य सुस्पष्ट-

मेव। भारतं यावत् पराधीनं, न तावत् शिक्षाविधानेऽनुकूलं परिवर्त्तनं भवितुमर्हतीति बलवान् मे विश्वासः। तथापि विविधभाषाशिक्षापारदृश्वानः श्रीमन्तः सर्वेऽपि शिक्षाध्यक्षाः प्रचालयिष्यमाणनूतनशिक्षापद्धतौ यथासाध्यं पाश्चात्यशिक्षागुणानवश्यं स्वीकुर्वन्तः शिक्षाप्रणालीं परिष्कुर्वन्तु।

आम्रबीजे भाविन आम्रवृक्षस्य निखिलमेवोपादनं निहितमास्ते। तदेव रसादिना परिपोष्य महाम्रवृक्षरूपेण परिणतं क्रियते। तेन द्रुमान्तरोत्पत्तिर्न रसालतः परं हि द्रुमान्तरस्यैवोन्नतिर्लोकैरवधार्यते। अतः शिक्षापरिष्कृतिपरायणैः शिक्षाध्यक्षैस्तथा प्रयतनीयं येन प्राचीना जातीया भावा न विलुप्येरन् इति।

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।

—श्रीविन्ध्येश्वरीप्रसादशास्त्री



# कविचक्रवर्त्ती !!!

अस्ता ध्वस्ता समस्ता निगम-निगदिता
सुप्रशस्ताः क्रियास्ताः,
दीना हीना मलीना विपदमुपगता
देववाणी नवीना
धन्येऽनन्ये वदान्ये निधनमुपगते
काव्य-माणिक्य-कोशे
शुक्ले देवीप्रसादे, निधनमुपगतं
किन्न हा! देशजातम्।

व्यर्था कालीपदार्चा निगमगत-
मतस्यापि चर्चास्त्यनर्था,
अन्येषां तर्हि केषामिह खलु कथया
सर्वसौभाग्यराशौ
आकाशे काशिकायाः सुरजतकिरणै-
र्भासमाने समाने
विज्ञे तस्मिन् गते हा सकलमपि गतं
दुःखमेकं नु शिष्टम्॥

—ईशदत्त पाण्डेयः, 'श्रीशः'

कविचक्रवर्त्ति-स्मृतिदिवसे पठितेयं कविता ( सम्पादकः। )

# आयुर्वेदः, धर्मानुष्ठानञ्च ।

श्री पं० शिवकुमार स्वामी, आयुर्वेदाचार्यः ।

[ अवशिष्टांशः ]

सर्वास्वप्यायुर्वेद—संहितासु स्वास्थ्य—संरक्षणाय यत् स्वस्थवृत्तं समाम्नायते तदपि अस्माकं मानवानां नित्यो धार्मिक एव विधिः । यथा च भगवता मनुना, अन्यैश्चास्माकमार्यधर्मशास्त्रकारैर्येये नियमाः ये ये च विधयो नित्या नैमित्तिकाश्च व्याख्याताः, तत्सर्वमायुर्वेदानुकूलमेवेति परिशीलनीयम् सुधीधौरेयैः । यथा ब्राह्मे-मुहूर्ते समुत्थानम् सर्वधर्मशास्त्रकाराणामायुर्वेदानुसारेणैव ब्रह्मचारिणां गृहस्थानां सर्वेऽपि धर्मास्तदनुकूला एव ।

एवमन्नपानविधिष्वपि प्रत्यहं किं किं भोक्तव्यं पेयञ्च ? ऋतुषु किं किमन्नपानं सेवनीयम्, कीदृक् वस्त्रं परिधातव्यमिति सर्वे नित्या नैमित्तिकाश्च नियमा धर्मानुकूला एव ।

अत्र विषये स्वयमेव प्राह भगवान् पुनर्वसुरात्रेयः— वाय्वादीनां भूतानां विकृतौ समष्टिरोगाणाञ्च प्रजननं भवति । यथाः—

सर्वेषामप्यग्निवेश ! वाय्वादीनां वैगुण्यमुत्पद्यते यत् तस्य मूलमधर्मः । तन्मूलञ्च सत्कर्म पूर्वकृतम् । तयोर्योनिः प्रज्ञापराध एव । यदा वै देश नगर—निगम—जनपद–प्रधाना धर्ममुत्क्रम्याधर्मेण प्रजां प्रवर्त्तयन्ति; तदाश्रितोपाश्रिताः पौरजानपदा व्यवहारोपजीविनश्च तमधर्ममभिवर्धयन्ति । ततः सोऽधर्मः प्रसभं धर्ममन्तर्धत्ते । ततस्तेऽन्तर्हितधर्माणो देवताभिरपि त्यज्यन्ते । तेषां तथान्तर्हितधर्माणामधर्म—प्रधानानामपक्रान्तदेवतानामृतवो व्यापद्यन्ते । तेनापो यथा कालं देवो वर्षति न वा वर्षति, विकृतं वा वर्षति । वाता न सम्यगभिवान्ति क्षितिर्व्यापद्यते, सलिलान्युपशुष्यन्ति । ओषधयः स्वं भावं परिहायापद्यन्ते विकृतिम् । तत उद्ध्वंसन्ते जनपदाः ।"

इत्यादिना जनपदोद्ध्वंसस्याधर्म एव हेतुर्भवतीति भगवता पुनर्वसुना प्रतिपादितम् । स चाधर्मः प्रज्ञापराधादेव । समष्टिरोगा व्यष्टिरोगाश्चाधर्मफलस्वरूपाः समुत्पद्यन्ते । तेषामधर्मभूतानां रोगाणां विनाशाय तत्प्रतीकारोपाया एव धर्मत्वेन प्रतिपादिता आयुर्वेद इति न प्रमाणान्तरापेक्षामालम्बत अयं विषयः ।

यथा हि प्रज्ञापराध—जनितस्य ब्रह्महननादिरूपस्य-प्रायश्चित्तविधानाय प्रवृत्तं धर्मशास्त्रं मानवानां नित्यान्नैमित्तिकांश्च नियमानुपदिशति आत्मशुद्धये । तथैव प्रज्ञापराध जनितानामाहार—विहारासन—व्यवाय–व्यायामादीनामतियोग–हीनयोग––मिथ्यायोगानां सेवनेन समुत्पन्नानां, अतिसाहस—ग्रहदशादिभिश्चापन्नानामधर्मरूपाणां भिन्नभिन्न–स्वरूपाणां रोगाणां प्रशमाय नित्यान्नैमित्तिकांश्च नियमानुपदर्शयन्नायुर्वेदः कायशुद्धयै प्रवृत्त इति सर्वत्रादिसिद्धान्तितोऽयमर्थः ।

एतावता इदमायातं यत् यथा वेदे स्वात्मशुद्धयै स्वात्मसंरक्षणाय, परिवर्द्धनाय च नित्यनैमित्तिकानां धार्मिकनियमानामुपदेशः क्रियते; स एव च धर्मशास्त्र–नाम्नाऽभिधीयते लोके, तथैव च वेदे शरीर—शुद्धयर्थं तद्रक्षणार्थं तदुपबृंहणार्थञ्चेन्द्रियमनसामपि विशुध्यर्थञ्च ये नियमा व्याख्याताः, त एवायुर्वेदनाम्ना प्रसिद्धा विधिवाक्यत्वेन साक्षाद् धर्मस्वरूपा एवेति ।

यथा जनपदोद्ध्वंसनीये महामारीप्रभृति समष्टि–रोगाणामुत्पत्तावधर्मस्य कारणत्वं व्याख्यातम्, तथैव च शस्त्रप्रभवस्यापि जनपदोद्ध्वंसस्याधर्महेतुत्वं भवति । यथाः—

"येऽतिप्रवृद्धलोभक्रोधमानास्ते दुर्बलानवमत्यात्मस्वजनपरोपघाताय शस्त्रेण परस्परमभिक्राम-

न्ति । परान् वा अभिक्रामन्ति । परैर्वाभिक्रम्यन्ते, रक्षोगणादिभिर्विविधभूतसंघैस्तमधर्ममन्यद् वाप्यपचारान्तरमुपलभ्याभिहन्यन्ते ।"

साम्प्रतं निखिलेऽपि भूमण्डले धनलुब्धा राजानो दुर्बलानामुपरि दारुणमत्याचरन्ति । प्रत्यहं जोघुष्यते संघर्षघण्टाघोषः । अत्राऽपि जनपदोद्ध्वंसे प्रत्यक्षं कारणम्—धर्म एव तदर्थमधर्मशमनाय भगवानायुर्वेदः सद्वृत्तं न केवलं नित्यनियमत्वेन, प्रत्युत स्वाभाविकनियमत्वेनोल्लिखति । यथाऽऽह तत्र भगवान् वाग्भटः—

सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।
सुखं च न विना धर्मात् तस्माद्धर्मपरो भवेत् ।

इत्यादिना सुखमूलस्य धर्मस्यैव प्रतिपादनादायुर्वेदविहितानां नियमानां धार्मिकत्वमेव व्याख्यातम् । दिनचर्याध्याये चायुषः संरक्षणाय परिवर्द्धनाय च सर्वप्राधान्येन सद्वृत्तानुष्ठानमेव वरिष्ठमिति प्रतिपादयति । यथाः—

भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः ।
हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृते ॥
सम्भिन्नालापव्यापादमभिध्यादृग्विपर्ययम् ।
पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥
अवृत्तिव्याधिशोकार्त्ताननुवर्तेत शक्तितः ।
आत्मवत् सततं पश्येदपि कीटपिपीलिकम् ॥
अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन् ।
विमुखान्नार्थिनः कुर्यात् नावमन्येत नाक्षिपेत् ॥
उपकारप्रधानः स्यादपकारपरेऽप्यरौ ।
सम्पद्विपत्स्वेकमना हेतावीर्ष्येत् फले न तु ॥
काले हितं मितं ब्रूयादविसंवादि पेशलम् ।
पूर्वाभिभाषी सुमुखः सुशीलः करुणामृदुः ॥
नैकः सुखी न सर्वत्र विश्रब्धो न च शङ्कितः ।
न कश्चिदात्मनः शत्रुंचात्मानं कस्यचिद् रिपुम् ॥
प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः ।
अन्यस्याशयमालक्ष्य यो यथा परितुष्यति ।
तं तथैवानुवर्तेत पराराधन—पण्डितः ॥

इत्यादिकमुपदेशजातं धर्मनियमत्वेन समाम्नात[म्] किम्बहुना । भगवान् पुनर्वसुरात्रेयोऽपि चिकित्साश[ास्त्र]मारभमाणो रसायनपादे सर्वप्रधानं प्रथमत आचाररस[ाय]नमेव स्वास्थ्य-रक्षायै प्रथममादिदेश । एवञ्च—

स्नानशीलः सुसुरभिः सुवेषोऽनुल्वणोज्वलः ।
धारयेत् सततं रत्न-सिद्धमन्त्र-महौषधीः ।
आर्द्रसन्तानता त्यागः कायवाक् चेतसां दमः ।
स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम् ॥

इत्यादिना धार्मिकनियमानायुर्वेदनियमांश्च ताव[त्] सम्मेलयन् वाग्भटः समुपसंहरतेः—

इत्याचारः समासेन यं प्राप्नोति समाचरन् ।
आयुरारोग्यमैश्वर्यं यशो लोकांश्च शाश्वतान् ॥

एवं हि आर्षग्रन्थान् परिहाय रसतन्त्रादि ग्रन्था[न]वावलोकयतामस्माकं विशुद्धं धर्म—स्वरूपात्मकत्वमायु[र्वे]दस्य प्रतिभाति । सर्वत्रैव लौकिकायुर्वेद—ग्रन्थेषु केवल[ं] चिकित्साविधानमेवावलोक्यते । परं प्रधानायुर्वेदसंहिताया[ं] चरकप्रतिसंस्कृतायामग्निवेश—संहितायाञ्च मैत्रीकरुणा[]परायणैर्महर्षिभिः सर्वप्रथमं त एव नियमाः व्याख्यात[ा] ये खलु स्वस्थस्य स्वास्थ्य-संरक्षणपराः नित्यनियमा[ः] सन्ति । तदनन्तरं सति प्रज्ञापराधे समुल्लसतां रोगाणां प्रशमाय नैमित्तिकनियमरूपा तच्चिकित्सा च प्रकटीकृता । अत एवोक्तमायुर्वेदसंहिता—प्रारम्भ एव—

"स्वस्थातुरपरायणमिति ।

स्वास्थस्य-संरक्षणम् , आतुरस्य च रोगप्रशमनमि[त्ये]तद्द्वयमेवास्य वेदस्योद्देश्यं समाम्नातम् । तदेव नित्य[]नैमित्तिक धर्मविधित्वेनास्माभिः समुपादीयते, समाद्रियते, समाचर्यते च । एतावता निश्चिनुमो यदायुर्वेद—शास्त्रस्य प्रथममेतदेव प्रयोजनं यत् रोगाणां प्रादुर्भाव एव माभूदिति, सति सम्भवे तत्प्रशमोपायाः, इति च ।

नैतावदेव; अपित्वायुर्वेदस्य मुख्यं लक्ष्यं परमपुरुषार्थ एव । स च मोक्षरूपः । मोक्षस्तु धर्मविध्यनुष्ठानैक

लभ्यः । तच्च धर्मसाधनं साक्षादप्यायुर्वेदतो लभ्यते परम्परया च । साक्षान्मोक्षप्राप्तिस्तु—रस-दर्शनकारैर्महता प्रपञ्चेन प्रपञ्चिता रसेश्वर–रसहृदय–रसार्णवादि ग्रन्थेषु सोपपत्तिकम् । उक्तञ्च सोमनाथाचार्य्य-पादैः–

'षड्दर्शनेऽपि मुक्तिस्तु कथिता पिण्ड-पातने ।
करामलकवत् साऽपि प्रत्यक्षा नोपलभ्यते ॥
तस्मात्तं रक्षयेद्देहं रसैश्चैव रसायनैः ।'

इत्यादिकमुपक्रम्य षड्दर्शन–प्रतिपादितस्यापवर्गस्य भ्रममात्रत्वमुपपाद्य पारदस्यैव साक्षात् ब्रह्मस्वरूपत्वमपवर्ग –प्रदत्वञ्च प्रतिपादितम् । यथा—

'एकोऽसौ रसराजः शरीरमजरामरं कुरुते ।'
'संसारस्य परं पारं दत्तेऽसौ पारदः स्मृतः ॥ः'

एवञ्च भगवता चरकेणाऽपि शरीरसाधनापेक्षितरसायनस्य परमपदप्रापकत्वं नैकशः कण्ठरवेण सुस्पष्टं प्रकटीकृतम् । यथा–

न केवलं दीर्घमिहायुरश्नुते
रसायनं यो विधिवन्निषेवते ॥
गतिं स देवर्षिनिषेवितां शुभां
प्रपद्यते ब्रह्म तथैति चाक्षरम् ॥

अन्यच्चः—

ऋषयो वालखिल्याद्यास्तथा चान्ये तपोधनाः ।
रसायनप्रयोगेण वभूवुरमितायुषः ॥
प्राणकामाः पुरा जीर्णाश्च्यवनाद्या महर्षयः ।
रसायनैः शिवैरेतैर्वभूवुरमितायुषः ॥
ब्राह्मं तपो ब्रह्मचर्यमध्यात्मध्यानमेव च ।
दीर्घायुषो यथा कामं संभृत्य त्रिदिवं गताः ॥

इत्यादिना साक्षात् परम्परया वा धर्मप्रतिपादकस्य भगवन्निःश्वासभूतस्य भगवत आयुर्वेदस्य सर्वथा नित्य-नैमित्तिकधर्मविधिप्रतिपादकत्वमेवेति विरमामो मुधा बुधानां समययापनेन ।

यद्यप्यस्मिन् विषये सन्ति बहूनि प्रमाणानि वक्तव्यरूचावशिष्यते महत्तरम्, तथापि स्थालीपुलाकन्यायेन दिङ्मात्रमुदाहृत्य विपश्चिदपश्चिमेषु विद्वद्धुरीणेषु सादरं सविनयञ्च विरम्यते ।

सर्वे कुशलिनः सन्तु,
सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु,
मा कश्चिद्दुःखभाग्भवेत् ॥

निवन्धोऽयमखिलकर्णाटकसप्तमायुर्वेदसम्मेलनावसरे ( २७-१२-३४ ) पठितश्च ।



# कविचक्रवर्ती

कविः —आयुर्वेदाचार्यः श्रीशिवकुमारस्वामी,

सौभाग्यलब्धामलकाव्यरत्न-
कान्तिं प्रसार्याखिलभूमिभागे ।
स्वर्गेऽपि विस्तारयितुं गतः किं
देव्याज्ञयासौ कविचक्रवर्ती ? ॥ १ ॥

देव्याः प्रसादादवतीर्य काश्यां
साहित्यशास्त्राधिगमप्रभावात् ।
प्रौढां समज्ञामधिगत्य लीनो
दुर्भाग्यतो नः कविचक्रवर्ती । २ ॥

विद्वत्प्रकाण्डावलिभव्यचित्त-
स्तम्भाश्रिते ज्ञानसुधा-विलिप्ते ।
साहित्यसम्मेलनरम्यहर्म्ये
विद्युत्प्रदीपः कविचक्रवर्ती ॥ ३ ॥

नानारसोद्भासितकाव्यपुष्प-
संलुब्धगुञ्जद्बुधद्विरेफैः ।
दिव्यस्तरुः कालधनञ्जयेन
दग्धः किमाहो कविचक्रवर्ती ! ॥४॥

३

# 'होलिका।'

श्रीमदीशदत्त पाण्डेयः, "श्रीशः", कविरत्नम्।

( १ )

अशेष—सुरसंयतः सपदि सस्पृहं प्रेक्षिता,
कलिन्दतनयातटे गहनकेलिकुञ्जे मुदा।
रसार्द्रतर-चित्तयोर्ललित-राधिका-कृष्णयो—
र्महामदनमण्डिता मदमयी जयेद् 'होलिका'।

( २ )

तदेव जगतीतलं प्रिय! तदेव वृन्दावनं,
पवित्रसलिला नदी तव च सैव सूर्यात्मजा।
हरे! कथय पूर्ववत् क्वणितवेणुनैव त्वया,
कथं न क्रियते पुनः पुनरहो रहोहोलिका॥

( ३ )

किमेतदिति सम्भ्रमान्नगरवासिभिर्वीक्षिता,
सितासिफलोपम—स्फुटकराग्रपातोत्कटा।
हिरण्यकशिपोरुरो रुधिररञ्जनेनारुणा,
सरोषनृहरेर्हरेर्जयति भीषणा "होलिका"॥

( ४ )

भयङ्कर—रणाङ्गणे भुवि निपात्य दुश्शासनं,
झटित्यपिविधाय तन्नवशिलाभवक्षःक्षतिम्।
भयानकतयाञ्जलौ भरितरक्तमास्वादतः,
स्मृता भवति वा न वा कथय देश! हे 'होलिका'॥

( ५ )

क्षुधातुर—तरा नरा करुण—रोदने हा! रताः,
तदीयहितचिन्तनैर्व्यपगतोऽपि नारीजनः।
अनान्नवसनादिके कलिविपद्भिरालुण्ठते,
सखे! कथय भारते भवतु चेत् कथं 'होलिका'॥



इयं 'होलिका'—समस्यापूर्त्तिः कविचक्रवर्त्तिस्मृतिदिवसे कविसम्मेलने पठिता। (सम्पादकः।)

# भारत वैभवम्।

श्रीगोपाल शास्त्री त्रिपाठी, दर्शनकेशरी, साहित्याचार्यः, न्यायतीर्थः, व्याकरण-शास्त्री।

( क्रमागतम् )

मरुभूमेरस्य मध्यभागे मुञ्जवान्नाम पर्व्वतः। यस्य दुर्गमा पर्व्वतश्रेणी राजस्थानं बहुधा क्षपितविपक्षेभ्योऽपि राजन्यवर्गेभ्यः सङ्करे सङ्किरन्तीभ्यो विपत्तियः सञ्जुगोप। अत्र पदे पदे आर्य्य-महिला आत्मनोऽक्षुण्णं सतीत्वं चितारोहणादिना ररक्षुरिति लोकप्रसिद्धा ख्यातिः। अत्रत्यं प्रत्येकमेव स्थानं कस्यापि वीरपुरुषस्यादर्शचरित्रेणैवाङ्कितं विद्यते। राणा कुम्भः; साङ्गः, वावलः, समरसिंहश्चेति महाराजाः सर्वेऽस्यैव क्रोडे चिक्रीडुः।

आर्य्यजातेः स्वातन्त्र्यपाठपाठको महाराजः प्रतापसिंहश्चात्रैव भारतीयक्षात्रधर्मरक्षायै सहस्रशो यवनसेना हल्दीघाटीस्थे युद्धाग्नौ स्वाहयाञ्चकार। चेतकनाम्नो निजाश्वस्योपरि आरोहमाश्रितवतो यस्य वीरस्यालोकशब्द आचन्द्रदिवाकरौ जेगीयमानः स्थास्यति। इदमेव राजस्थानं कदाचन यौधेयानां मालवानाञ्च शरणदानेन त्राणमकरोत्। अत्रत्या वीरा योद्धारः स्वतन्त्रतायै सप्राणदानं योद्धुञ्जानन्ति। उपस्थिते समयेऽवश्यन्ते स्वात्मानं मातृमन्दिरेऽर्पयितुं हावयितुं चोद्यता भवन्ति। यस्मिन्नहनि राजस्थानात् क्षात्रधर्म्मापगतिर्भाविनी, तदानीमेव मरुस्थलमिदं रसातलं प्रवेक्ष्यतीति निश्चितं विद्वाङ्कुर्वन्तु।

अस्मिन्नेव राजस्थाने विराट्नगरमप्यस्ति। यत्र पाण्डवकुलसन्तानवीजं परीक्षितं गर्भे दधानाया उत्तरादेव्या जनुरभवत्। अस्यैव दक्षिणभागे शिशुपालवधनामकं काव्यरत्नं विरचितवतो महाकवेः श्रीमाघस्य जन्मस्थानं श्रीमालनगरं विद्यते। अत्यत्रानां षट्त्रिंशत्कुलोत्पन्नानां क्षत्रियाणां पृथक्वर्णनमसम्भवमेव। इहैव स्थितां पद्मिनी-दुर्गावत्योर्जन्मभूमिं के भारतीया श्रद्धानतशिरस्का न प्रणमन्ति? इहत्याया एव भक्तिस्रोतस्विनी-प्रवाहिकायाः श्रीमीरादेव्या नाम स्मारं स्मारं भारतीया आर्य्यमहिला अद्यापि आनन्दविह्वला भवन्ति।

यमुनाया वामदिशि ब्रह्मर्षि-देशो विद्यते यत्र परम पवित्रसलिलाया भगवत्या भागीरथ्यास्तटे पाञ्चालानां राजधानी विद्यते। मथुरा, माया, अयोध्या, काशी, कौशाम्बी, श्रावस्ती-इत्यादयः प्रसिद्धा नगर्य्योऽप्यत्रैव सन्निविष्टाः सन्ति। राज्ञः शूरसेनस्य राजधानी भगवतः पूर्णावतारस्य आनन्दकन्दस्य श्रीकृष्णचन्द्रस्य लीलावतरणक्षेत्रम् मथुरा इहैव वरीवर्त्ति।

अत्रैवायोध्यायां मर्य्यादापुरुषोत्तमावतारस्य श्री भगवतः रामचन्द्रस्याविर्भावः समजनि। अधुनापि श्रीरामचन्द्रप्रेम्णा सरयूनदी न विजहाति साकेतम्। अवध प्रदेशोऽयमतीव रमणीयः, इत एवानतिदूरे श्रीमत आदिकवेर्वाल्मीकेराश्रमो विद्यते, यत्र आदिकाव्यस्य वाल्मीकीयरामायणस्य ग्रन्थनमभवत्। धन्येयमवधभूमिर्यत्र तुलसीदासोऽपि काव्यमानसहंसराजोऽवततार। येनैकाकिनैव हिन्दीभाषायां अद्वितीयं गौरवमातन्य जगद्दुर्लभं यशो लेभे।

प्रयागे गङ्गायमुनयोः सितासितयोः सरितोः सङ्गमोऽप्यवर्णनीय एव यत्र मुग्धा कालिदासलेखनी क्रिय-

"समुद्रपत्न्योर्जलसन्निपाते
पूतात्मनामत्र किलाभिषेकात्।
तत्त्वावबोधेन विनापि भूय-
स्तनुत्यजां नास्ति शरीरबन्धः।"

अस्यैव तीर्थराजस्य सविधे वत्सराजस्योदयनस्य कौशाम्बी राजधानी विद्यतेस्म। अयं हि वासवदत्तादयित उदयनो बहूनां भारतीयसंस्कृतोपन्यासानां नाटकानाञ्च प्रधाननायकत्वमधिजगाम। सुबन्धुः, भासः, हर्षश्च बहुधाऽस्य यशोगानं कुर्वन्तः स्वलेखनीम्पवित्रयामासुः।

इतो जह्नुकन्यावामतटे अतिपवित्रम् शिवत्रिशूलमध्युषितम् अविमुक्तवाराणसीक्षेत्रं सन्निधत्ते। यदीयो ज्ञानगरिमा, विद्याविलासश्च बहुकालतो जगति प्रसिद्धिमधिश्रितौ विद्येते। इहैव जैनतीर्थङ्करः श्रीपार्श्वनाथोऽपि जन्म जग्राह। अत्रैव शारीरकभाष्यरचयिता अद्वैत स्रोतःप्रवाहकः श्रीशङ्कराचार्य्यो ज्ञानप्रकर्षमधिगत्य

"वक्त्रमासाद्य यमेव नित्या
सरस्वतीस्वार्थसमन्विताभूत्।
निरस्तदुस्तर्ककलङ्कपङ्का
नमामि तं शङ्करमर्चिताङ्घ्रिम्"

इति सर्वज्ञात्मयतेरुक्तेर्विषयतामाससाद।

भामतीप्रभृति ग्रन्थराशीन्निर्मितवतां श्रीवाचस्पतिमिश्राणां अद्वैतसिद्धिसदृशाद्वितीयग्रन्थरत्नं ग्रथ्नतां मधुसूदनसरस्वतीनाञ्चावासभूतेयमेव पुरी श्रेष्ठनगरी काशी अस्ति, इहैव कुल्लूकभट्टोऽपि मन्वर्थं स्वटीकया दीपयामास। पण्डितराजो जगन्नाथः, गोस्वामी तुलसीदासश्चैहैव गङ्गातटे सविनश्वरं कलेवरं विहायामरपदमध्युषतुः। व्याकरणविद्योपयोगिनी सिद्धान्तकौमुदीश्चात्रैव वैयाकरण, वावदूकः श्रीभट्टोजीदीक्षितः—कृष्णदीक्षितदीक्षितः प्रणिनाय। अद्वितीयप्रतिभाशाली अप्पय—दीक्षितोऽपीहैव सिद्धान्तलेशं लिलेख। किम्वर्णनीया जित्वरी पुरी, इह तु अनादित एव ज्ञानसूर्य उदित्योदि धरातलाऽन्धकारं शकलयामास। इहत्ययोरेव वापू शास्त्रिशिवकुमारशास्त्रिणोर्यशांसि अधुनापि जगति गीयन्त एव। साम्प्रतमपि आर्य्यसभ्यतायाः पुनरु रकं राष्ट्रशक्तिसमेधकं शिक्षादर्शशिक्षकं श्रीकाशीवि पीठनामकं राष्ट्रियशिक्षामन्दिरं प्रतिष्ठापितम्विद्यते, य सौरभेण भारतमेव नहि; किन्तु अखिलं जगतीम लमेवाप्यायितं स्यादिति सम्भावये। अस्यैवोत्तर पुरा धर्मचक्रप्रवर्तनमहाविहारः सारनाथ-क्षेत्रं विद्य यतो भगवान् बुद्धः सत्यचतुष्टयं मानवसमाजहि सर्वप्रथममुपदिदेश। यत्र संसारमसारं विस्मृत्य सर्वो संसारः, एकदा महतौत्सुक्येन प्रणिधानं चकार। द णस्यां दिशि भगवत्या भागीरथ्यास्तटे श्रीमद्भिर्महा नोभिः श्रीमालवीयमहोदयैः प्रतिष्ठापितो हिन्दुविश्व विद्यालयोऽपि आर्य्यगौरवमुन्निनीषुर्बद्धपरिकरः।

"विजयाय हि निर्याहि प्रतपन् रश्मिमानिव।
मानं विधम शत्रूणां धर्मो जयतु नः सदा"

इति निनदन्विराजतेतराम्। किम्बहुना,

"वाराणसी निविसते न वसुन्धरायां
तत्रस्थितिर्मखभुजां भुवने निवासः।
तत्तीर्थमुक्तवपुषामत एव मुक्तिः
स्वर्गात् परं पदमुदेतु मुदे तु कीदृक्"

इत्यादिभिः संस्तुतमहिम्नोऽस्य नगरस्य वर्णे यावदपि क्रियेत तावदल्पमेव स्यादिति विरम्यते।

कोशलतः कियद्दूरे उत्तरस्यां दिशि शाक्यानां रा धानी कपिलवस्तु नामकं नगरं विद्यते। अस्यैव लुम्बिनी नामके रम्योद्याने मायादेवीकुक्षितो भगवान्बुद्धोऽवत

तार, अद्यापि रोमिनदेवीग्रामे महाराजस्याशोकदेवस्य स्तूपा एतस्य जागरूकाणि प्रमाणानि सन्ति । अत्रैव जेतवनमस्ति यत् अनाथपिण्डकेन नगरश्रेष्ठिना कार्षापणाच्छन्नं कृत्वा सौगतसङ्घाय वितीर्णम् । अस्मिन्प्रदेशे बहूनि गणराज्यान्यासन् येषां केवलं नामान्येव श्रूयन्ते ।

इतो नातिदूरे विहारप्रान्तमस्ति । यत्र प्रतिपदं भूगर्भविदारणेन भग्नभग्ना बौद्ध-मूर्तयः आसाद्यन्ते । इहैव मिथिलायां जनकनन्दिन्या भगवत्याः सीताया आविर्भावः । इहैव विदेहा राजानोऽभवन्; येभ्यः शुकदेवसदृशा अपि ज्ञानिनो ब्राह्मणा ज्ञानं शिक्षितवन्तः ।

इहैव याज्ञवल्क्येन महर्षिणा स्वस्मृतिः प्रणिन्ये । यस्याष्टीकाम् कल्याणस्थो धर्मशास्त्रकोविदो विज्ञानेश्वरभट्टो मिताक्षरानामिकामातन्य हिन्दुधर्म-विधानं नियन्त्रितवान् । इहैव मैत्रेयी नाम आर्य्यविदुषी "येनाहं नामृता स्याम् किमहन्तेन कुर्य्यामिति" शाश्वतिकं सत्यसुधैश्चुकूज । अस्मिन्नेव भूभागे लिच्छवीनां गणराज्यान्यासन् । येषां गौरवं 'लिच्छवीदौहित्रः' इति स्वात्मनो विरुदावलीं लिखन् महाराजो गुप्तसम्राट् चन्द्रगुप्तोऽपि प्राचीकशत् ।

अत्रैव गिरिव्रजनगरी विद्यते या महाभारतकाले जरासन्धस्य महाभूभुजो राजधानी बभूव । यत्र भगवान् श्रीकृष्णः राजकुमारं सहदेवमभिषिषेच । तत्कालीनदुर्गस्य प्रस्तरमयं प्राचीरमद्यापि दर्शकानां नयनान्याकर्षयच्चेतांसि चमत्करोति । अस्यैव गिरिव्रजस्याभ्यासे राजगृहम्विराजते । यस्याभितो वैभार-विपुल-तपोवन-शैलगिरि-रत्नगिरि-संज्ञकानि पञ्चगिरिशिखराणि भारतमानमुन्नमयन्ति । अस्यैव नगरस्य दक्षिण पूर्वयोरन्तराले स्थिते रत्नगिरौ एकस्यां गुहायां ज्ञानपिपासुना गौतमेन दुष्करं तपश्चक्रे । स्थानस्यास्य प्रत्येकं रजःकणं पवित्रतमम्मानवानां पाणिपल्लवं पविता । एतस्यैवान्तिके नालन्द-विश्वविद्यालयस्य भग्नावशेषोऽवलोक्यते । अत्रायुतमन्तेवासिनां सङ्घीभूय एककालावच्छेदेनाधीतेस्म । तस्मिन्काले नालन्दमहाविहारीयार्यभिक्षुकसङ्घतः प्रशंसापत्राधिगमोऽद्वितीययोग्यताचिह्नं विज्ञायतेस्म ।

वैदिककाले कीकट प्रमगण्डेति नाम्नाख्यातेऽस्मिन्मगध-प्रदेशे पाटलिपुत्रं नगरमस्ति । यत्राष्टौ शतानि वर्षाणि सर्वेऽपि भारतवर्षसामन्ताः करसमर्पणाय समागताः शारदीं कौमुदीं महोत्सवेन समेधयन्तिस्म । स्वयं सम्राट् उदयनमहोदयः शिशुनागवंशविभूषकः, अस्य नगरस्य प्रतिष्ठासमकारयत ।

इहत्यैरेव सम्राड्भिर्भारतधरा राजन्वती जेगीयतेस्म । अस्य पाटलिपुत्रस्योभयतो वलयाकारा महती अतलस्पर्शा परिखा आसीत्, एतद्रक्षार्थं क्षत्रियजातिक काष्ठनिर्मित-बृहत्परिमाणवता प्राचीरेण परिवेष्टनं कृतमासीत । यत्र चतुःषष्टिः गमागममार्गा आसन् । यत्र सर्वत्रैव गोपुरेषु तोरणान्यासन् । नगराभ्यन्तरे सप्तसप्तत्युत्तर पञ्चशतानि महावातायनान्यभूवन् । चन्द्रगुप्तमौर्य्यस्य राजप्रासादे सुवर्णलतासु रजतपक्षिणश्चित्रिता मानवमनांसि हरन्तिस्म । एवमस्य नगरस्य विभूतिमवलोक्य यूनानी, राजदूतो हर्षाप्यायितोन्ननर्त ।

यस्य नीत्युपदेष्टा चाणक्यो ब्राह्मणोऽभूत् । किं वाच्यं तस्य राज्ञः साम्राज्यप्रबन्धकौशलम् । अस्मिन्नेव पाटलिपुत्रे देवानाम्प्रियस्य प्रियदर्शिनो महाराजस्याशोकवर्म्मणो जन्म । बौद्धसंघे गृहीतदीक्षस्य यस्य सुयशःसौरभम् ब्रह्मदेशादारभ्यागान्धारम् , काश्मीर

तथासिंहलद्वीपम् विस्तीर्णं समजनि। यस्याद्भुतप्रजा-वात्सल्यमद्यापि शाहवाजगढ़ीतिप्रख्यातप्रदेशाज्जूना-गढ़राज्यं यावत, तथाधौलीजौगढ़त आसिद्धपुरमामहि-शूरराज्यम् उपलभ्यमानैः शिलालेखैरेव प्रख्याप्यते। यो महाराजः संघभिक्षून्सम्प्रेष्य जम्बूद्वीपस्थासभ्य-जातिष्वपि तथागतस्याहिंसाधर्ममुपदिदेश। तस्य वि-शालकीर्त्तेर्महाराजाशोकस्य सर्वजाति-सर्वप्राणि-सर्व-द्वीप-प्रेमाणं कोऽनुगच्छेत् ?

अस्मिन्नेव पाटलिपुत्रे महाराजः पुष्यमित्रः, परम भागवतो महाराजः समुद्रगुप्तः, महाराज आदित्यसेनश्च असकृदश्वमेधयज्ञान्वितन्य;

"पृथिव्यै समुद्रपर्य्यन्ताया एकराडिति"

वैदिकीं प्रतिज्ञां पूरयामासुः। विद्यापीठेऽस्मिन्पाटलिपुत्र एव वर्षोपवर्ष—पाणिनिपिङ्गलाचार्य्यव्याडि—वररुचि-पतञ्जलि प्रभृतयः विविधशास्त्रप्रणेतारो विद्वांसः शलाकापरीक्षामुत्तीर्य्य सर्वत्र यशोराशिं वितेनुः। आर्य्य भटो ज्योतिषाचार्य्य इहैव जनुर्लब्ध्वा त्रिंशद्वर्षवयस्क एव आर्य्यभटीय-नामकं ग्रन्थरत्नं ग्रन्थित्वा सूर्यमभित अचलाया अपि पृथिव्या भ्रमणं प्रमाणितवान्।

इहैव विहारप्रदेशे पापपुञ्जमसहमाना सा भगवती भूमिरिदानीं कलिकलुषितान्तःकरणानां शास्त्रश्रद्धाशून्यान्तःकरणानां भ्रान्तानां भ्रमविघाताय भ्रमन्ती सती, स्वीयमचलात्वधर्ममपि विजहती, हाहाकारं कुर्वतां तेषां पुरतः क्षणमात्रमेव चला भूत्वा शस्यश्यामलापि मरुस्थला सम्पद्यमाना, विहारं विनाऽहारं मोदफलपुर-ममोदफलधुरं मुङ्गेरं मुद्गरेरं कृतवती।

[ क्रमशः ]

## वसन्तभूपतिः



विमल-चन्द्रसमुल्लसिताननो
ललितमाधविमालविभूषितः।
मलयमारुतवारणवाहनः
सरस-कोमल-सारस-लोचनः॥ १॥
मधुरसौरभमञ्जरिवीजितो
भ्रमर—कोकिल—चारण—कीर्तितः।
मकरकेतनदिग्विजयी सखा
समुपयाति नवो मधुभूपतिः॥ २॥



## वसन्तमल्लः



नवलकिंशुक—वस्त्रसमावृतः
कुसुमपुञ्जपरागपरागितः।
कनक चम्पक— कुड्मलकुण्डलो
रुचिरपाटलिपुष्पगदाधरः॥ १॥
अलिपिकावलिशिष्यसमूहितो
द्विजकुलाकलनादसमाहृतः।
विशति केलिपरो वसुधाङ्गणे
विषमवाणसुहृन्मधुमल्लकः॥ २॥

**विनायक राव भट्टः**
**सबपोस्टमास्टर (छत्रपुर)**

# किं प्रह्लाद ऐतिहासिकव्यक्तिर्नासीत् ?

प्रो० पं० दीनानाथशास्त्री, मुलतानस्थः ।

कर्णाकर्णिकया मया न्यशामि, यद्—गतदिवसेषु पाश्चात्य-संस्कृतिसंस्कृतो विविधोपाधिव्याधिपरीत ~ पञ्चनदीयविश्वविद्यालयत ~ प्राप्तपुरस्कार ~ कश्चित् 'सर्दारसाहिब:' स्थानीये 'इमर्सनकालेजे' वक्तृतायै समुपातिष्ठत ॐ । तत्र तेन स्ववक्तव्ये 'प्रह्लाद ऐतिहासिकव्यक्तिर्नासीद्' इति समुपोद्बलयितुमसफलचेष्टाऽक्रियत । तेन प्रह्लादकथाया रूपकत्वे आलङ्कारिकत्वे वा बलवद् बलम्प्रत्तम्' तस्य वास्तविकता चाऽपलपिता । निशम्यैतद् बलवद्—विषत्तिनिषत्तिमहमवहम् † । परं 'करः खलु निवार्य्यते प्रहरतो न वक्तुर्मुखम्' इत्याकलय्य तान्तस्वान्ततयाऽस्य ‡ विचिचारयिषामो यत् किं प्रह्लाद ऐतिहासिकव्यक्तिर्नासीत ? ।

प्रथमं वयं रूपकबद्धबुद्धिं वक्तृमहोदयं पिपृच्छिषामो + यत्—तेन प्रह्लादस्य नाम कुऽतोवाकर्णि ? यदि कथ्येत—पुराणेभ्यः ; तर्ह्यस्माकमेष प्रश्नो भविष्यति, किं स पुराणानि प्रमाणानि मनुते ? यदि न, तर्हि तु प्रह्लादस्य वैयक्तिकतामपोहितुं वक्तृताप्रयासस्तदीयो वैयर्थ्यमाचकलत् । यत् पुस्तकं स मन्यत एव न; तत्रत्यकथायां स स्वकल्पितव्यवस्थां कर्त्तुमेव कथमधिकृतोऽभूत । यदि स पुराणप्रामाण्यं मत्वैव तां व्यवस्थामबध्नात् ; तर्ह्यसौ वाग्मी × प्रष्टव्यो यत्—पुराणेषु प्रह्लादकथा कस्मिन् स्थले रूपकरूपा वर्णिता ? कदाचित् स पाश्चात्यसमालोचना एतद्विषयेऽधीत्य स्वकीयमपि तादृक्—सिद्धान्तमतिष्ठिपत् ।

स्मर्त्तव्यं तेन महोदयेन, यत्—पुराणस्य को भवति विषयः, श्रूयताम्—'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशाऽनुचरितञ्चेति पुराणं पञ्चलक्षणम्' ब्रह्माण्डपुराणे १।१।३७, वायुपुराणे ४।१०, मत्स्यपुराणे ५३।५६, कूर्म्मपुराणे १।१।१२, शिवपुराणे ५।१।३७ गरुडपुराणे १।२१५।१४, भविष्यपुराणे १।२।४, वाराहपुराणे २।४, शुक्रनीतौ ४।९३

तत्र प्रष्टव्योऽसौ, यत्—प्रह्लादचरितं स एषां कतमस्मिन्नन्तर्भावयति ? कियतीमपि क्लिष्टकल्पनामसौ कथन्न कुर्वीत; अन्ततः ~ प्रह्लादनिरूपणं वंशे वंशाऽनुचरित एव चाऽन्तर्भावयिष्यति । तद्, वंशास्तच्चरित्राणि च पुराणवर्णितानि किं रूपकरूपाणि ? कल्पितानि ? आलङ्कारिकाणि वा ? यद्यभिधीयेत, आम्—तर्हि कृपयैतद् वाच्यं स्याद्, यद्—हिन्दुजात्या ~ प्राचीनेतिहास ~ कस्मिन् पुस्तके ? यस्याऽपि पुस्तकस्य नाम

ॐ समुपातिष्ठत—अत्र तङ् ।

† विषत्तिनिषत्तिः—विषादोपसाद इत्यर्थः ।

‡ विचिचारयिषामः । सन्नन्तः प्रयोगः 'अस्मदो द्वयोश्च' इति बहुवचनान्तं 'वयम्' इत्यस्य[illegible] ।

+ पिपृच्छिषामः—सन् 'किरश्च पञ्चभ्य' इतीट् ।

× वाग्मी—'वाचोग्मिनिः' 'चोः कुः' जश्त्वञ्च, अतो गकारद्वयी । गतलेखे १६४ पृष्ठे 'वाग्मिता' इत्येकगकारवान् पाठः प्रामादिको मुद्रितः ।

गृह्येत, किं स इतिहास आलङ्कारिकताव्यपदेश्यो न निर्म्मातुं शक्यते ? प्रष्टव्योऽसौ, यत्–स नन्दनन्दनं श्रीकृष्णचन्द्रं, जानकीजानिं श्रीरामचन्द्रं वा ऐतिहासिकव्यक्तीः* मन्यते ? यद्येवम्, तर्हि तावालङ्कारिकौ कुतो न, प्रह्लादश्च कुत आलङ्कारिकः ? यथा तेन प्रह्लादस्य प्रसह्यतामूलकोऽर्थो विहितः स्यात् ; तथा किं रामस्य कृष्णस्य वा तादृगर्था न कर्त्तुं शक्याः ? तत् पुन ॰ प्रह्लादचरित एवेदमकाण्डताण्डवं कैमर्थिकम् ? यदि स सर्द्दारमहोदयो रामं कृष्णञ्चाऽपि पौराणिकैतिहासिक व्यक्त्यन्तराण्यपि च रूपितानि मन्वीत; तर्हि हिन्दुजात्या इतिहास ॰ किं 'ग्रन्थसाहिब' तो गवेषणीयः स्यात् ?

मदीयस्त्वयं विचारो यद्–वक्तृमहोदय ॰ † पुराणान्येव नाऽद्राक्षीत् । यद्यद्रक्ष्यत् ; तर्हि 'प्रह्लाद' इति लकारघटितं नाम न कथयित्वा 'प्रहाद' इति रेफघटितमकथयिष्यत् ; यत इदमीयं प्राचीनं नाम प्रहाद इति । तस्य च वंशनिरूपणं श्रीमद्भागवतपुराणे वैशद्येन वर्णितम् । श्रीभागवतपुराणस्य सप्तमस्कन्धे तुरीयाऽध्यायो द्रष्टव्यः स्यात् , तदीयोऽन्यतमश्लोकोऽयम्—'प्रहादोऽभून्महाँस्तेषाम्' भाग० ७।४।३० अर्थात्—हिरण्यकशिपोर्बहुषु पुत्त्रेषु प्रहादो ज्येष्ठ आसामास । अधुना वक्तव्यं वक्तृमहाभागेन, यदा किल तद्वंशचरितं स्पष्टं निर्द्दिष्टम् ; तर्हि तेन किमा स कल्पित ॰ कल्पितः । वक्त्रा कदाचिद् भगव गीतायानामधेयं श्रुतम्भवेत् । तां सनातनधर्मा आर्य्यसमाजिका वा, हिन्दवो वा इङ्गलेण्डीया सर्व्वं एव प्रमाणीभूतां मन्वते, तदीयो ※ ध्वनि समस्तसंस्तुतौ प्रसृतः; तत्प्रमाणमप्यत्र समुपस्था दशमाऽध्याये भगवता नन्दनन्दनेन स्वविभूतिव व्यतिकरेऽभिदधे—'प्रहादश्चाऽस्मि दैत्यानाम्' १०। अर्थाद्–दैत्येषु प्रहादो मद्विभूतिरासीत् । एतस्मादपि किं प्रमाणमिष्यते । वक्तृमहोदयो यं कल्पितं मनु भगवाँस्तं स्वविभूतिं दैत्यजातीयव्यक्तिविशेषञ्चाऽऽ ष्टे । अधुना वयं वक्तृमहोदयं प्रमाणीभूतमत्र कुर्य्या भगवन्तं कृष्णचन्द्रं वा ? एतदुत्तरदायित्वं वयं वक् महोदय एव न्यस्यामः ।

वाल्मीकिरामायणमपि प्रमाणभूतपुस्तकम्; तत्रा प्रहादवर्णनं दृश्यते; यथा—'सन्ततिश्च प्रभावश्च वा रावणस्य वा । प्रहादबलिवृत्रघ्नकुबेरवरुणोपम युद्धकाण्डे ७६।७२ अत्र प्रहादस्य दृष्टान्तो द दृष्टान्तः खलु प्रसिद्धस्य सतो वा कस्यचिद्दीयते; न क कल्पितवस्तुनः—इति प्रेक्षावतां न परोक्षम् ।

अथर्व्ववेदेऽपि तन्मूलं स्पष्टं निर्द्दिष्टम्—"सो क्रामत्, साऽसुरानागच्छत्;तामसुरा उपाह्वयन्त माय हीति । तस्या विरोचनः प्राहादिर्वत्स आसीत्" अ ८।१३।१—२ मन्त्रेऽत्र दैत्याऽपरपर्य्यायोऽसुरशब्द दृश्यते; तदनु प्रोक्तम्—'प्राहादिर्विरोचनः, अस्याऽर्थः प्रहादपुत्रो विरोचनः । पाणिनीया विदुर्यद्–'अ इञ्' ४।१।९५ इतिसूत्रमपत्याऽधिकारेऽस्ति, ते

* ऐतिहासिकव्यक्ती इति द्विवचनम् ।

† पुराणविषयेऽद्यत्वे जनानामनल्पाश्शङ्का भवन्ति; अस्माभिस्तन्निराशाय 'वेदपुराणयोरेकवाक्यता' इत्यध्यर्द्धशतपृष्ठात्मको महानिबन्धः सज्जीकृतो विद्यते । अत्र पौराणिक्योऽश्लीलता अवैदिकता असम्भवता वैदिकमन्त्रैः समाहिता भविष्यन्ति । अयं निबन्धः प्रारभ्यते । सनातनधर्म्मभिरसाववश्यं द्रष्टव्यः ।

※ ध्वनिशब्दः पुंसि भवति ।

प्रह्लादिशब्दो निष्पद्यतेऽपत्यैर्थे। अस्यैव प्रह्लादपुत्रविरोचनस्य यन्मूलं वेदे प्राप्तम्, पुराणे स्पष्टवर्णनम्, ※ तत्तनुजनुर्महाबलि—बलिपार्श्वे वामनभगवानुपतस्थे—इत्येतस्याऽपि पुराणेषु स्पष्टं वर्णनम्। एतावत्यां वंशपरम्परायां स्पष्टायामपि किं प्रह्लादो रूपितो मन्तुं शक्यते ?

वक्तृमहोदय एतदपि व्यपदेष्टुमीष्टे, यत्-पुराणे क्वचित् क्वचिद् आलंकारिकता नास्ति किम् ? वयं तत्रेत्थमुत्तरयामो यत्—तत्राऽऽलङ्कारिकताऽपि वर्त्तते; परं तत्र तद्रहस्यभेदः क्रियते; यथा भागवतपुराणे ४।२९ पुरञ्जनोपाख्यानमेव गृह्यताम्; तदिदमवश्यमेव कृत्रिमम्। एतदेवाऽत्र प्रकरणम् यदेतदन्ते भागवतकृता स्वयमेतदीयं संघटनं विवरणञ्च कृतम्; परं प्रह्लादकथायां काऽपि तद्रूपणं न निरूपितम्, प्रत्युत तत्र धाराबाहिकरूपेण तद्वंशस्तच्चरित्रञ्च विवृतम्। तद् वक्तृमहोदय ऽकस्मिन्नाधारे प्रह्लादमनैतिहासिकव्यक्तिं सिषाधयिषति ? सोऽत्र पुराणप्रमाणमेव ददातु; यतो यदा प्रह्लादकथां पुराणमेव वक्ति; तर्हि तदीयमेव प्रमाणमत्रेष्यते; तदीया कपोलकल्पना कथमत्र प्रामाण्यं बिभ्रीत। स एतदपि वक्तुमनलं यत्–पुराणान्यप्रमाणानि। यदा खलु स पौराणिकीमेव कथामालम्ब्य तत्राऽऽलङ्कारिकतामुद्रां मुमुद्रयिष्यति; तदा तेन पुराणानां प्रामाण्यं मतमिति स्पष्टम्; अन्यथा–स तत्कथामस्पर्क्ष्यदेव न।

प्रह्लादस्य च सम्बन्धो मूलत्राणेन वर्त्तते; तदीयमेव प्राचीनं नाम 'प्रह्लादपुरी'ति। अमुष्यैव प्रह्लादस्य नगरीमागत्य वक्तृपुङ्गवेन प्रह्लादं रूपितं निरूपयितुं कृत्रिमयुक्ति ऽपुराणाऽनभिज्ञाऽऽङ्गलमहाविद्यालयच्छात्राणामत्रत्यजनतायाश्च समक्षं विन्यस्य दुष्प्रभावारोपणस्य-यद् दुस्साहसिक्यं व्यधीयत; तद् गर्ह्याऽर्हमेव। तेन धार्म्मिकाणां सचेतसां चेतसां नितान्ततान्तता समजनि। वयं पञ्चनदीयविश्वविद्यालयमप्युपलभामहे, येनेदृग्—वक्तार ऽपारितोषिकेण पुरष्कृतः। कोऽधिकारोऽदःसदःसदस्यदाम, यदस्मत्त ऽप्राप्तद्रव्यं ते तस्मै वक्त्रे पारितोषिकत्वेन दद्युर्य आस्माकीनजातीयेतिहासमपि विनिनाशयिषेत् †। वयमीदृग्वक्तुर्घोरं विरोधं कुर्म्महे। अद्य स प्रह्लादं कृत्रिममाख्यत् ‡ अन्यदाऽऽस्माकीनवेदान् कृत्रिमान् साधयेत्।

वयमेतादृक्विषयज्ञानज्ञापने विलम्बमवलम्बमानानां पण्डिताऽऽखण्डलमण्डलानामपि ईदृग्विधदुष्टतावेष्टितेषु चेष्टितेषु ध्यानमाक्रष्टुं तान् प्रार्थयामहे, यद् भवन्तो विकटं कालं निकटं ज्ञात्वा स्वधार्म्मिकविषयेषु श्लथश्लथतां मुक्त्वा, सर्व्वाङ्गीणामभिज्ञतां परिचितिञ्च स्वयं स्वशिष्यान् स्वसन्ततीश्च कारयन्तु। पाश्चात्याऽनुचरतां चरतां वाचंयमतायै प्रतिग्रामञ्च गामं गामं ※ तत्र पौरस्त्यसंस्कृतिप्रचारं कारंकारञ्च स्वकर्त्तव्यधुरां निरुह्य खलदल-दलनलग्ना भवन्तु, अन्यथा स समयो निकृष्टाऽदृष्टवशात् सपदि निकटे आयास्यन् वर्त्तते; यदा भवज्जाति ऽपण्डितकल्प-कल्पकल्पितैरीदृग्विधैराक्रमणैराक्रान्ता स्वसत्तां न चिरायैव प्रणाशयेत्, तच्चिह्नमात्रमपि च पुनर्न दृश्येत। खलु मुखरतां कृत्वेति॥

———

※ तनुजनुश्शब्दस्सकारान्तः।

† निनाशयिषेत्। सनि लिङि रूपम्।

‡ आख्यत्। आङुपसृष्टस्य चक्षिङः ख्याञादेशे लुङो रूपम्।

※ गामं गामम्। अत्र 'नोदात्तोपदेशस्ये'ति वृद्धिनिषेधस्तु न; अस्याऽनुदात्तत्वात्।

पण्डितराज श्री १०८ स्नेहिरामशास्त्रिणां स्मारिकाया—

[ संसार में सबसे सस्ती ]

# श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः—

त्वर्यताम् ! अभिनवा प्रतिपत्तिः !! अक्षुण्णोऽयं परैः पन्थाः समर्घतायाः !!!

राजसंस्करणम् ! विलोक्यताम् !! जीर्णोद्धारः शेखर-भूषणयोः !!!

१. वैयाकरणभूषणसारः—दर्पणेन, काशिकया, श्रीगुरुप्रसादशास्त्रिकृतया विषमस्थलटिप्पण्या च विराजितः। २)

२. रघुवंशकाव्यम् [ २-५ सर्गाः ] श्रीगुरुप्रसादशास्त्रिकृतयाऽतिमहत्या परीक्षोपयोगिन्या सरलया'ऽभिनवराजलक्ष्म्या'ऽलङ्कृतं, भाषाटीकोपेतञ्च, ... ... ॥=)

३. अभिज्ञानशाकुन्तलम्—परीक्षोपयोगिन्या परमसरलया श्रीगुरुप्रसादशास्त्रिकृतया, अभिनव राजलक्ष्मी' टीकया विराजितम्, १)

४. मूलरामायणम् [ टीकात्रयोपेतम् ] नागेशभट्टकृतया टीकया, 'अभिनवराजलक्ष्म्या' 'भाषा-टीकया' च विलसितम्, =)॥

५. पञ्चतन्त्रस्य—अपरीक्षितकारकम्, श्रीगुरुप्रसादशास्त्रिकृतया 'अभिनवराजलक्ष्मी' टीकया विराजितम्, =)॥

६. लघुकौमुदी-श्रीगुरुप्रसादशास्त्रिकृतया 'अभिनवराजलक्ष्म्या' युता अतीव चमत्कारिणी—मुद्र्यते।

७. सिद्धान्तकौमुदी—[ स्त्रीप्रत्ययान्ता ] 'अभिनवराजलक्ष्मी' युता— मुद्र्यते।

---

१. लघुशब्देन्दुशेखरस्य-[ टीकाषट्कोपेतस्य—] अव्ययीभावान्तो भागः। नागेशभट्टशिष्यवैद्यनाथविरचितयाऽतिप्रामाणिकया— भैरवमिश्रकृतटीकातोऽपि चतुर्गुणितया मूलपङ्क्तिलापनैकप्रवणया १ चिदस्थिमालया, २ काशिकपरिष्कारसर्वस्वायमानया दण्डिभट्टकृत-'चन्द्रिक' या, ३ प्राचीनया 'ज्योत्स्ना'ख्यया विवेचनया, ४. सदाशिवभट्टीयेन तिलकेन, ५. 'विषमी'नाम्ना प्रसिद्धया विवेचनया, ६. श्रीगुरुप्रसादशास्त्रिकृतया चमत्कारकारिण्या 'वरवर्णिन्या' च टिप्पण्या-समलङ्कृतः--सुन्दरमसृणतरपत्रेषु मुद्र्यते, द्रागेव त्रिचतुरैर्मासैः लोचनगोचरतामेष्यति।

सर्वविधपुस्तकप्राप्तिसङ्केतः—

मैनेजर—

**भार्गव पुस्तकालय, गायघाट, बनारस सिटी।**

प्रकाशकः—श्रीगौरीनाथ पाठकः, सुप्रभात-कार्यालयः, बनारस सिटी।



मुद्रक—श्रीबालकृष्ण शास्त्री, ज्योतिषप्रकाश प्रेस, विश्वेश्वरगंज, काशी।

The Suprabhatam — Registered. NO.A. 1348.

वार्षिकमूल्यम्—२) — छात्रेभ्यः—१)

संस्कृत-साहित्य-समाजस्य मासिक-मुखपत्रम्




तिमिरततिमुदस्यद् भेदतारा विलुम्पन्, नयदधिसुरभापाभाषि जागर्तिमुच्चैः ।
विबुधविहगवादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः "सुप्रभातम्" ॥

एकादशेऽब्दे } वैशाखी पूर्णिमा, १९९२ { द्वितीया संख्या

सम्पादकौ :—

श्रीकेदारनाथशर्मा (सारस्वतः) श्रीविन्ध्येश्वरी प्रसाद शास्त्री च

२।५।३५

सम्पादक महोदयाः ।

आगामिनि रजतजयन्ति महोत्सवे भवतां पत्रस्य 'विशेषोऽङ्कः प्रकाशमेष्यतीति ज्ञात्वा मे महानानन्दः सम्भूतः ॥ आशासे चास्य पठनेन समाजे राजभक्तेः प्रचारोऽवश्यं भविष्यतीति ॥

भवतामनुगृहीतः,

ए, जी, शिरेफ् ।

(कमिश्नर–बनारस)

प्राप्तिस्थानम्:—

व्यवस्थापकः—सुप्रभात–कार्यालयः, काशी ।

## विषयसूची।



## सुप्रभात-नियमाः।

१—संस्कृत-साहित्य-समाजस्य मुखपत्रमिदं प्रतिमा[se] प्रकाश्यते।

२—अस्य साधारणं वार्षिकमूल्यं मुद्राद्वयम्। छात्रे[भ्यः]भ्यः—एकामुद्रा, वैदेशिकेभ्यश्च चतस्रो मु[द्राः] गृह्यन्ते।

३—समाज-सदस्येभ्यो विना मूल्यं वितीर्यते। ते [च] त्रिविधाः—सहायकाः, अनुग्राहकाः, माननीयाः संरक्षकाश्चेति। यैस्तु सदस्य-शुल्कं क्रमशः ३) १०) २५) १००) प्रदेयम्।

४—वार्षिकमूल्यं सर्वथाग्रिममेव देयम्। एकाङ्कस्य आणकत्रयम्।

५—यथासमयं पत्रालाभे कार्यालयो नूनं सूचनीयः तत्रापि पत्रालये ( पोस्ट आफिस ) प्रथममन्वे[ष]णमावश्यकम्।

६—चिटिका ( टिकट ) प्रेषकै राजेष्टितपत्रद्वार[ा] चिटिकाः प्रेषणीयाः। अन्यथा कार्यालयो नोत्त[र]दायी स्यात्।

७—द्रव्यप्रेषकैः, धनादेश-( मनिआर्डर ) पत्र[स्य] समाचारलेखन-स्थाने (कूपन) स्वीयः पूर्णसङ्के[तः] सुस्पष्टैराङ्गलाक्षरैर्देवनागराक्षरैर्वा नूनं लेखनीयः।

८—पत्रोत्तरमभिलषद्भिः स्वपत्रेण सह चिटिका नू[नं] प्रेषणीया। स्वीया ग्राहकसंख्या चावश्यं लेखनीया अन्यथा पत्रमत्राबलोकितमेव न स्यात्।

९—व्यवस्थासम्बन्धी पत्रव्यवहारः—व्यवस्थापकना[म्]ना, सम्पादकीयश्च सम्पादकनाम्ना विधेयः। सर्व[वि]विधोऽपि पत्रव्यवहारः—"सुप्रभात-कार्यालयः, काशी" ( Benares City. ) इत्यनेन सङ्केतेन विधेयः।

१०—विज्ञापन-नियमाः पत्रं संप्रेष्य ज्ञातव्याः।

* सम्राट्पञ्चमजयोर्जः, सम्राज्ञीमेरी *





एकादशोऽब्दः | वैशाख-पूर्णिमा, विक्रमसंवत्सरः १९९२ | द्वितीया संख्या

## श्रीमत्सार्वभौम-चक्रवर्त्ति-सम्राट्-श्री १०८ श्रीपञ्चमजार्ज-महोदय-रजत-जयन्ती-महोत्सवाभिनन्दनपत्रमिदम् ।

( श्रीकृष्णगदराज्य-पण्डित-पण्डितराज-महामहाध्यापक-महामान्य-महामहोपदेशक-पञ्चाम्बुभूषण-सांख्यरत्न-विद्यानिधि-विद्यासागर-बलाकिरामशास्त्रिणः )

जयतु जयतु सम्राट् पञ्चमो जार्जनामा,
जयतु जयतु नित्यं तस्य पत्नी च पुत्रः ।
जयतु जयतु शश्वद्भारतं तत्सु-गुप्तं,
जयतु जयतु तेन त्रात एवार्य्य-धर्मः ॥ १ ॥

ग्वेंषां निजधर्मकर्ममतिदो विद्या-प्रचारोत्सुको,
ोकोद्धारपरो विशेषसुखदो निःशेषशान्तिप्रियः ।
ङ्लेण्डेश्वर-सार्वभौमनृपतिः श्रीभारताधीश्वरः,
ीमान् पंचम[illegible] सौख्यभाक्॥२॥

दीनान् रक्षयितुं नृपान्नमयितुं पातुं धरां दुर्धराम्,
दुष्टान् मर्दयितुं बलेन सुजनान् त्रातुं दृढप्रक्रमः ।
साधून् सेवयितुं प्रजाः शुभयितुं नित्यं समुत्कण्ठितः,
सम्राट् पञ्चमजार्ज ईशकृपया जीव्याच्चिरं सौख्यभाक्॥३॥

संपत्तिः प्रथतां यशः प्रसरतां धर्मः सदा वर्द्धताम्,
कल्याणं भवतात् प्रजा प्रणमताच्छत्रुक्षयो जायताम् ।
राज्यं विस्तृणुयात्तत्र प्रतिदिनं लक्ष्मीपतिः सर्वदा,
सम्राट् पञ्चमजार्ज ! जीव [illegible] प्रजाः ।४

यद्यप्यनेकेऽत्र पुरा बभूवू-
राजाधिराजा बहु सुप्रसिद्धाः ।
परन्न कोऽप्याप तुलां तवैव
यतस्त्वयाऽकारि जगद्विचित्रम् ॥५॥

विद्यालयाश्चापि चिकित्सकालयाः,
स्वच्छाश्च मार्गाः सुदृढाः सुसेतवः ।
कोशाश्च पत्राणि गृहाणि मुद्रणम्,
रैलं विमानं च तडित्प्रचारणम् ॥६॥

इत्यादि यद्यन्नहि चिन्तितं पुरा,
संभावितं नैव कदापि केनचित् ।
राज्ये तवैवाद्य सुचारुरूपतः,
प्रत्यक्षतामेति तदेव सर्वतः ॥ ७ ॥

तवैव राज्ये बहुधा समुन्नतिं,
संप्राप्य सर्वे विविधां समन्ततः ।
कलासु विद्यासु विलक्षणाक्षणाः,
सुशान्ति निर्भीति सुखानि भुञ्जते ॥ ८ ॥

सम्राण् ! महाराज ! समानदृष्टे !,
वैषम्यभावो नहि ते सुनीतौ ।
त्वत्सन्निधौ हिन्दुमहम्मदीय-
क्रिश्चिन्नराणान्नहि कोऽपि भेदः ॥९॥

भूकम्प-दुर्भिक्ष-जलप्रवाहैः,
प्रजाविपत्तौ करुणार्द्रचित्ततः ।
प्रदायसाहाय्यमुदारतस्त्वया,
दयालुताऽदर्शि निजस्य चेतसः ॥१०॥

अतो वयं श्रीपरमात्मनोऽनिशम्,
समर्थनाम् स्वच्छहृदा प्रकुर्महे ।
प्रभुत्व--संतान--सुराज्य--सम्पदाम्,
तवायुषश्चापि विवृद्धये सदा ॥११॥

सम्राट् ! व्यतीता किल पंचविंशतिः
संवत्सराणान्तव राज्यकालतः ।
तस्माद्वयं रौप्यजयन्तिकोत्सवे,
वर्द्धापनं ते वितराम आत्मना ॥१२॥

प्राप्तो यथा रौप्यजयन्तिकोत्सवो,
भूयोऽपि भूयाद्भगवत्प्रसादः ।
इत्थं हि सौवर्णजयन्तिकोत्सवः,
पुनश्च हीराख्यजयन्तिकोत्सवः ॥१३॥

क्रीडन्ति गायन्ति हसन्ति मोदतो,
नराश्च नार्य्यःशिशवश्च वृद्धाः ।
ग्रामेष्वरण्येषु पुरेषु सर्वतः,
सम्राड् भवद्रौप्यजयन्तिकोत्सवे ॥१४॥

सर्वत्र दीपावलि रात्रिखेलनम्,
दीनोपकाराय सहायतार्पणम् ।
प्रसन्नचित्ताभिरनेकधाऽपि ते,
प्रजाभिरद्य क्रियते महोत्सवः ॥१५॥

सम्राड्रौप्यजयन्ती,
समावहन्ती प्रजाजनानन्दनम् ।
भगवत्कृपया स्याताम्,
स्वर्ण-हीरक-जयंत्यौ चापि ॥ १६ ॥

बुद्धौ लाभे कीर्तौ राज्ये, मत्यां स्यात्ते शश्वद् वृद्धिः ।
एषामाद्यैर्वर्णैर्नाम्नो भक्त्या, सन्त्वाशीर्वादा मे ॥ १७ ॥

# सम्पादकीयम्

**रजत-जयन्ती-महोत्सवः**

वैशाखमासस्य शुक्लद्वितीयायां इङ्गलैण्ड नगरे ब्रिटिशसाम्राज्यान्तर्गतेषु सर्वेषु देशेषु च भारत-सम्राजः श्रीपञ्चमजयोर्जस्य राजसिंहासनाधिरोहण-पञ्चविंशतिवर्षपूर्तिप्रयुक्तो महोत्सवः सुमहता समारम्भेण सम्पन्नः। पाश्चात्यदेशीय-प्रथानुसारं पञ्चविंशतितमवर्षपूर्त्तौ रजतजयन्ती (Silver Jubble) पञ्चाशतवर्षपूर्त्तौ सुवर्णजयन्ती (Golden Jubble) षष्टिवर्षपूर्त्तौ च हीरक-जयन्ती भवति। तदस्मिन् मई मासस्य ६—७ दिवसयोः सर्वत्र वृटिशसाम्राज्ये रजत–जयन्ती-महोत्सवः सम्पन्नः। तदत्र वयमपि सम्राजश्चिर-जीवित्वं कल्याणञ्च कामयन्तो भारतदेशाधिपतेः सादरमभिनन्दनं कुर्म्मः।

यद्यपि साम्प्रतं कियतः कालात् भारतीयजनतायां शासनविषयको महान् संक्षोभः, असन्तोषश्च प्रचलति; परं न तत्र राज्ञः कोऽपि सम्बन्धः। यतस्त्रिविधा हि नाम राजानो राजनीतिशास्त्रकारैरुक्ताः—स्वायत्तसिद्धिमन्तः, सचिवायत्तसिद्धयः, उभयायत्तसिद्धयश्च। तद्वृटिश-साम्राज्यं सचिवायत्त-सिद्धिमत्विद्यते। अतोऽत्रत्येन संक्षोभेन न कश्चन व्यक्तिगतः सम्बन्धः सम्राज इति। अन्यच्च भारतीया वृटिशसाम्राज्याधीनं स्वीयं स्वातन्त्र्यम् (Dominien States) समभिलषन्ति। यतो न चिरस्थरस्वतन्त्र

भारतं स्वयं शासनं कर्त्तुं समर्थमितिकेचित्। अतो वृटिश-साम्राज्यस्य संरक्षणं नितरामावश्यकमेव; परं देशस्यान्तरिकं स्वातन्त्र्यमेव प्रार्थयन्ते बहुसंख्यका भारतीयाः। नैतावता सम्राजः केनचित् विरोधः; प्रत्युत तस्य सम्मानमेवास्माकं कर्त्तव्यम्।

अन्यदपि अस्माकं संस्कृतज्ञानां वृटिश–साम्राज्येन सह महिष्ठो घनिष्ठश्च सम्बन्धः। यवनराजस्य काले शीतदिवसेषु संस्कृतपुस्तक–प्रज्वालनेन स्नानागारेषु तापः प्रदीयते स्म। ब्राह्मणानां विदुषाञ्च हस्तिपादतलेन सम्मर्दः क्रियतेस्म। मन्दिराणां, रमणीनां बालानामुपरि नृशंसैः क्रूरतापूर्णो जघन्यो व्यवहारः क्रियते स्मेति प्रवादः। साम्प्रतमेतेषां राज्ये संस्कृत-साहित्यस्योद्धारो यदि नाभविष्यत्-तदा न जाने कियतां महत्त्वपूर्णग्रन्थानां नामापि नाश्रोष्यत। भारतवर्षे पुरातत्त्वविभाग–महाविद्यालय–पुस्तकालय-सङ्ग्रहालयस्थापन-वृत्तिप्रदानादिभिः कार्यैः वृटिशसाम्राज्येन यः खलु भूयानुपकारो विहितस्तदर्थं वयं संस्कृतज्ञा नितरां कृतज्ञाः स्मः। सा च कृतज्ञताऽस्माभिरपि सोत्साहं सोल्लासं सस्नेहञ्च प्रकटीक्रियते श्रीमद्राजराजेश्वरपञ्चमजयोर्जमहोदयं प्रति। एतेषां साशीर्वादं दीर्घायुष्ट्वं नैरोग्यञ्चाशंसामहे श्रीमतः काशी-विश्वेश्वरात्।

संस्कृतज्ञैरेतेषां जीवनचरित्रमपि सर्वथा मननीयम् यतः प्रबलप्रतापशालिनो विश्वशिरोमणेर्वृटि

शसाम्राज्यस्याधिपतेः जीवनं कीदृशं सरलं पवित्रं कर्ममयमनुकरणीयञ्च विद्यते ।

\+ \+ \+

## योरोपीय-विद्वांसः संस्कृत-वाङ्मयञ्च ।

भारतवर्षे यतो वृटिशसाम्राज्यस्य संस्थापनमभूत्तत एव यवनराज्यपीड़िता भारतीयाः स्वीयं सर्वं विस्मृत्य यत्र-तत्र गृह-कोणेषु हस्तलिखित-पुस्तकानां संरक्षणं विधाय तूष्णीं स्थिता आसन् । दिवंगतेषु तेषु विद्वत्सु तद्वंश्याः केचन मूर्खाः, केचन दरिद्राः, केचनाकर्मण्याः, पुस्तक-संग्रहं व्यर्थतां नयन्तिस्म । परं भारतवर्षे समागतैराङ्गलाधिकारिभिः सर्वप्रथमं तेषामेव गवेषणं प्रारब्धम् । तदानींकाले शर्मण्यदेशीया अप्यधिकारिण आसन्, अतस्तैरन्वेषयद्भिर्भूयसां ग्रन्थानामुपलब्धिः कृता, भूयाँसश्च ग्रन्थाः शर्मण्य ( जर्मन ) देशीये राजकीये पुस्तकालये, बहवश्च लन्दननगरस्थ—राजकीये-पुस्तकालये प्रेषिताः । फ्रान्सनगरेऽपि सन्ति बहवो ग्रन्थाः । अत्रापि तेषामेवाधिकारिणां समुद्योगेन कलिकान्तानगर्यां एसियाटिक-सोसाइटी ( Asiatic Society ) नाम्नी संस्था, मोहमय्याञ्च तस्याः शाखा संस्थापिता । एवमेव मद्रास-विद्यालय-पुस्तकालये, पंजाबविश्वविद्यालयीयपुस्तकालये, काशीस्थ-राजकीय-संस्कृत-महाविद्यालये च प्राचीन-संस्कृत-पुस्तकानां महान् संग्रहः केवलं योरोपीय-विदुषामेवोत्साहेन सञ्जातः । नो चेत्; पुस्तकानां का नाम दुरवस्थाऽभविष्यत्, भगवानेवाज्ञास्यत् ।

एवमेव संस्कृत-पुस्तकानां प्रकाशनकार्यमपि यूरोपीयैरेव विद्वद्भिः सर्वप्रथमं प्रारब्धम् । भारते ऋग्वेदस्य मुद्रितं पुस्तकं [illegible] सर्वप्रथमं मोक्षमूलरेण ( Maxmuller ) तस्याध्ययनं प्रकाशनं च कृत बहूनां गृहस्थसूत्राणां श्रौतसूत्राणां आर्यभटीयप्र महत्वपूर्णग्रन्थानां च प्रथमं प्रकाशनं योरोपीयैरेव वि द्भिर्महता परिश्रमेण सम्पादितम् । एवमेव आफ्रे ( Afrect ) नाम्ना विदुषा भारतीय-संस्कृत-ग्रन्थ महत् सूचीपत्रलेखनमेव सम्पादितम् । उक्तञ्च केना "यत्सूचीपत्र एव प्रतिदिनममले शास्त्रसारांशयुक्ते कुर्वन्नभ्यासलीलां भवति मतिमतामग्रणीर्बालिशोऽपि

कलकत्तानगरस्थ-प्रधानन्यायालयाधिपतिना श्रीम विल्सन-महोदयेन संस्कृतभाषामधीत्य विष्णुपुराण आङ्गलानुवादो विहितः । तस्य संस्कृतश्लो अप्यस्माभिर्दृष्टाः । प्रोफेसर विलफ़ार्न-पीटर्सन-जेको प्रभृतिभिरांगलविद्वद्भिर्दक्षिणभारते भूयसां ग्रन्थाना द्धारः संस्कृतानुवादः प्रकाशनञ्च विहितम्, बूल ( Buhler) स्टाइन-प्रभृतिभिश्च विद्वद्भिः काश्मीरप्र प्रतिग्रामं, प्रति खर्वटम्, प्रतिगृहञ्च भ्रामं भ्रामं पुस् कानां संग्रहः सूचीपत्रञ्च सम्पादितम् । एवमेवान्यै तदानीन्तनैर्विद्वद्भिः प्रचुर-परिश्रमद्वारा भारतीय-संस्कृ वाङ्मयस्योद्धारे प्रबलः प्रयत्नो विहित आसीत् । नो भारतीयानां भूयसां ग्रन्थानां लोप एवाभविष्यत् ।

साम्प्रतमपि मुग्धानलाचार्य ( Mecdonel कीथ-वेबर-प्रभृतयः, ल्यूडर प्रभृतयश्च विद्वांसः संस्कृ साहित्येतिहासलेखनं विधाय महदुपकारं कृतवन्तः यद्यपि तेषामितिहासविषयेऽस्माकं विद्यते महान् मत भेदः । परन्तु तेषां कार्य्यं नितरां श्लाघनीयं प्रशंसनी यञ्च विद्यते ।

पुरातत्त्वविषयेऽपि तेषां इण्डियन-एणिक्वेरी-रायल-

एसियाटिक-सोसाइटी-जर्नल, एसियाटिक सोसाइटी आफ़ बंगालजर्नल,-एसियाटिक सोसाइटीआफ़ बाम्बे ब्रांच-जर्नल प्रभृति पत्राणि * महत्कार्यं कुर्वन्ति । प्राचीन-तक्षशिला-नालन्दा-सारनाथ-बुद्धगया-प्रभृति—स्थानेषु खननेनापि बहूनि पुरातत्त्व-साधनानि समुपलब्धानि, यानि भारतस्य प्राचीनगौरव--निदर्शकाणि सन्ति । अन्येषाञ्च बहूनां संस्कृतग्रन्थानामाङ्गलानुवादैश्च भारतीयं यशःसौरभं दिग्दिगन्तेषु प्रख्यापितमाङ्गलविद्वद्भिरिति नातितिरोहितं संस्कृतज्ञानाम् । साम्प्रतमपि वैदेशिकैस्तैर्महती संस्कृत-वाङ्मय-सेवा सम्पाद्यत एव । अत्र प्रसङ्गतो भारतीयानामपि पुरातत्त्वान्वेषिणां राजेन्द्रलालमित्र-भाण्डारकर-हरप्रसादशास्त्री—भाऊदाजी--दुर्गाप्रसादद्विवेद-रामावतार शर्म्मप्रभृति भारतीय-विदुषामपि संस्मरणं नितरामावश्यकमेव ।

पुरा यवनराज्यकाले यत्र संस्कृत-पुस्तकानामग्निदाहोऽभवत्, संस्कृतपुस्तकालयानाञ्च षण्मासं यावद्दाहो बभूव, तत्सत्यश्चेत् तस्य दुःशासनस्यापेक्षया वृटिशसाम्राज्येन तद्विपरीतमस्माकं वाङ्मयस्य गौरवस्य च वृद्धिः सम्पादिता इति वयं नितरामुपकृताः स्वाभाविक-कृतज्ञाः संस्कृतज्ञाः पञ्चमजयोर्जस्य महाराजस्य चिरजीवित्वं कामयन्तस्तेषां संस्कृतप्रेम सम्भावयामः ।

———

## वल्लभसम्प्रदायः, सुप्रभातञ्च ।

सुप्रभातस्य कस्मिन्नपि विगताङ्के वल्लभसम्प्रदायस्येतिहास इतिशीर्षको लेखः प्रकाशित आसीत् । तत्र श्रीमता विदुषा लेखकेन केवलमितिहास-परिचयार्थः वल्लभसम्प्रदायस्येतिहासो भाषयानूद्य संस्कृते प्रकाशित आसीत् । स इतिहासः प्रामाणिको नवेति तत्सम्प्रदायचर्य्यानभिज्ञा वयं न जानीमः । साम्प्रदायिक-धार्मिक-सामाजिकेतिहासपरिचयाय छात्राणां संस्कृतज्ञानाञ्च यदा कदाचित् प्रकाश्यन्ते तादृशाः लेखाः । परं साम्प्रदायिकाः प्रायः संकुचितक्षेत्र एव तिष्ठन्ति । प्रायः सर्वेष्वपि सम्प्रदायेषु यथासम्भवं दोषाः गुणाश्च सन्त्येव; परं साम्प्रदायिका गुणानेव प्रकटीकर्तुमीहन्ते, न दोषान् । यतस्तेषां भक्ता विभक्ता न भवेयुरिति । भवतु । नैतेनास्माकं किमपि प्रयोजनम् । अस्माकं दृष्टौ सर्वेऽपि सम्प्रदायाचार्य्या सममेव सम्माननीयाः सन्ति । साम्प्रतं सम्प्रदायेषु सन्तु नाम दोषाः, न तेनाचार्य्याणां कोऽपि सम्बन्धः । अत एवास्माभिः प्रकाशितमितिहासं विलोक्य काशीस्थ-वल्लभसम्प्रदायाचार्याः श्रीगोपालमन्दिर-मठाधीश्वराः सुप्रभाते नितान्तं रुष्टाः सन्ति । तैः पत्रमपि प्रेषितम्—यद्भवद्भिरस्माकमाचार्य्यस्य मानहानिः कृता, अप्रामाणिक इतिहासः प्रकाशितः । अतो भवतामुपरि न्यायालये किं न मानहानि-प्रयुक्तोऽभियोगः सञ्चाल्येत" इति ।

तदत्र वयं वल्लभसम्प्रदायाचार्य्यमहोदयेभ्यः सप्रणयं सादरञ्च निवेदयामो यत्ते मा रुष्टा भवन्तु । परं तस्य लेखस्य खण्डनं वास्तविकं प्रामाणिकञ्चेतिहासं सुप्रभाते प्रकाश्य वातावरण-शोधनं नियमतः कुर्वन्तु । अभियोग-सञ्चालनेन तु द्रव्यहानिर्भविष्यत्येव, सहैव मानहानिरपि न न्यूना स्यात् । यत उभय

( * साम्प्रतमेतेषु कानि कानि पत्राणि प्रचलन्तीति न जानीमः—सम्पादकः )

पक्षतः प्रमाणसंग्रहे वल्लभसम्प्रदायस्य निगूढतरमन्यदपि रहस्यं सकललोकसमक्षं समागतं स्यात्। विवादे जय-पराजयावपि सन्दिग्धावेव। एतत्तु जानन्त्येव ते यत् नवशिक्षिता जनता साम्प्रदायिकमाडम्बरं विरुणद्धि। सर्वत्रापि सम्प्रदायेषु यत्किमपि दौर्वल्यं विद्यत एव। इति बुद्धेः फलमनाग्रह इति न्यायानुसारं स्वीयमितिहासं प्रकाश्य जनतायाः भ्रमशोधनं कुर्वन्तु। मा व्यर्थं व्ययीकुर्वन्तु भक्तानां सरलानां धनं न्यायालयेषु। यदि धनमधिकं स्यात्तदा सत्कार्ये व्ययीकुर्वन्तु। गोपालमन्दिरे संस्कृत-पाठालयं पुस्तकालयं वा स्थापयन्तु। किमेतेन,व्यर्थविभीषिका-प्रदानेन, चापल्येन वा? सुप्रभातं न कस्यापि द्वेषं कामयते तत् सत्यमार्गमवलम्ब्य विजयतेतमाम्।

× × ×

## श्रीबलाकिरामशास्त्रिणामभिनन्दनम्।

वैशाखकृष्ण-पञ्चम्यां रात्रावष्टवादनसमये सुप्रभातकार्यालये भारतप्रसिद्धविदुषां व्याख्यान-वाचस्पतीनां पण्डितराज-बलाकीरामशास्त्रिमहोदयानां स्वागताभिनन्दनोत्सवः समजनि। इमे खलु शास्त्रिपादा वाराणस्यां सम्मिलिते निखिल भारत-वर्षीय-सारस्वतब्राह्मण-महासम्मेलने सभापति-पदमलङ्कर्त्तुं समागता आसन्।

भाग्यवशादत्र समागतानामेतेषां विद्वद्धुर्य्याणां स्वागत—सौभाग्यं संस्कृत-साहित्य-समाज—सदस्यैरपि सम्प्राप्तम्। इमे सप्ततिवर्षवयस्का अपि युवका इव कार्य्यं कुर्वन्ति। एतेषां वाराणस्यां घनिष्ठतरः सम्बन्धो वरीवर्त्ति। यत इमे कैलाश-वासिनां महामहोपाध्याय—गौतमावतार—कैलाश-चन्द्र शिरोमणि भट्टाचार्य्याणाम्, महामहोपाध्याय पण्डित सम्राट् शिवकुमार शास्त्रिणाम्, महामहोपाध्याय—राममिश्रशास्त्रिमहोदयानाञ्च शिष्याः सन्ति। एभिर्नवद्वीपे न्यायपञ्चानन—महामहोपाध्याय श्रीकृष्णनाथ भट्टाचार्य्याणांसविधे न्याय-साङ्ख्य—शास्त्रे अप्यधीते। ततः प्रभृत्येव सनातनधर्म्म—सेवायां सन्नद्धा इमे अजमेरस्थ—मेयो कालेज नाम्नि राजकुमाराणां महाविद्यालये धर्माचार्य्यपदमधिरूढा आसन्। तदनन्तरं भरतपुरराज्ये राजपण्डितपदमलङ्कुर्वन्तः साम्प्रतं कियतः कालात् किशनगढ़राज्ये संस्कृतशिक्षा—निरीक्षकाः राजपण्डिताश्च सन्ति। इमे स्वीये जीवने सहस्रशः सनातनधर्मसभासु सम्मेलनेषु च व्याख्यानं दत्वा महतीं सेवामकुर्वन्। साम्प्रतमपि सर्वत्रैव सनातनधर्म-महासम्मेलनेषु युवकानामिव सोत्साहं भागं गृह्णन्ति। अखिलभारतीय--संस्कृत—साहित्य-सम्मेलनस्य संस्थापकेष्वन्यतमास्तन्मन्त्रिणश्चासन्। एतेषामुल्लेखनीयमनुकरणीयञ्च विद्यते यदिमे सनातनधर्मोपदेशकानामिव न केवलं मौखिका उपदेष्टारः, प्रत्युत क्रियारूपेणापि सनातनधर्मस्वरूपाः सन्ति। यथा वदन्ति तथैवाचरन्तीति संस्कृत-साहित्य--समाजस्य सिद्धान्तानुसारं श्रद्धास्पदा धर्मोपदेशकाः सन्ति। एतादृशानेव धर्म्मनेतॄनभिलषति सादरमभिनन्दति च समाजो ये मनसा वचसा, कर्म्मणा च धार्म्मिकाःस्युः। तदेतेषु "कः सनातनधर्मित्त्वं" समालोक्य परं मोमुद्यमाना वयमेतानादर्शविदुषः सश्रद्धं सभाजयामः। अभिनन्दनपत्रस्योत्तरे शास्त्रिपादैः सार्द्धहोरां यावत् संस्कृते प्रभावपूर्णमविरलञ्च भाषणं प्रदत्तं येनविद्वन्मण्डलं चकितचकितेवाऽभवत्। अभिनन्दनपत्रञ्चान्यत्र प्रकाशितम्। संक्षिप्तं भाषणमपि प्रकाशितम्

# सम्राट् पंचमजयोर्जः।

श्रीमान् देवीनारायणवर्मा, बी०ए०एल्-एल्० बी, एडवोकेट



ब्रह्माण्डच्छत्रदण्डः, शतधृतिभवनाम्भोरुहो नालदण्डः,
क्षोणी-नौ-कूपदण्डः, क्षरदमरसरित्-पट्टिका-केतुदण्डः।
ज्योतिश्चक्राक्षदण्डस्त्रिभुवन-विजयस्तम्भदण्डोऽङ्घ्रिदण्डः,
श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः॥

\+ \+ \+ \+

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात्॥

अद्य खलु सम्राजः श्रीपञ्चमजयोर्जस्य रजतजुबिलीमहोत्सवोः सर्वत्रैव ब्रिटिशसाम्राज्ये वर्त्तते। ब्रिटिशसाम्राज्यस्य विभिन्नभूभागेषु, विद्वन्मण्डलीषु, महापुरुषेषु, महाराजेषु, राजसु, प्रजासु, छात्रेषु, महिलासु सर्वत्रैवानन्दस्य पारावार-कल्लोल-परम्परा दरीदृश्यते। जार्जमहोदयस्य गुणान् भारतीया न कदाचिदपि विस्मरिष्यन्ति। अयं खलु नितरां सज्जनः, महासत्त्वः, वदान्यो विनीतः, विनेता प्रजानाम्, सम्भावयिता बुधानाम्, प्रभावयिता राजपुरुषाणाम्, उत्साहयिता मन्त्रिमण्डलानाम्, प्रोत्साहयिता शिक्षितानाम्, सानुरागो गुणेषु, अतिनिपुणो राजकार्य्येषु, अतिचतुरः समुद्रपोतनाविकविद्यासु, निष्णातः कृषिकर्मकलासु, सुदक्षो नीतिविद्यासु, राज्यकार्य्याणां प्रत्यवेक्षिता, अभ्युत्थानशीलः, प्रजापदां सद्यःप्रतिकर्त्ता, षाड्गुण्यप्रयोगनिपुणो, पूर्णप्रतापी, पुत्रपौत्रसम्पत्तिसमन्वितश्च विजयतेतमाम् निखिलभूमण्डले।

राजमहिषी च सम्राज्ञी मेरी-महोदया परम पतिप्रेम-परायणा, दयावती, शीलवती, दयादाक्षिण्य सौन्दर्यादिगुणेष्वप्रतिमा, छायेवानुगामिनी चक्रवर्त्तिनः।

अस्य चक्रवर्त्तिमहोदयस्य जन्म पञ्चषष्ट्यधिकाष्टादशशततमेशवीये वत्सरे जूनमासस्य तृतीयदिवसे समभूत्। अयं महाराजो हानोरवंश—समुद्भवः। अस्य हानोरवंशस्य पूर्वपुरुषो महाराजः प्रथमजयोर्जः, शर्मण्य (जर्मन) देशादागत्य इंगलेण्डदेशे राज्यं चकार। तदानीं हानोरवंशीया आँग्लभाषानभिज्ञा आसन्। तेषां कृते उभयभाषाभिज्ञो महामात्यः (Prime menistar) तिष्ठतिस्म। सैव प्रथाऽद्यापि प्रचलति।

अयं राजवंशो योरपदेशे नितरां माननीयः प्रतिष्ठितश्च विद्यते। अस्यैव वंशस्य महाराज्ञी विक्टोरिया भारतवर्षस्य प्रथमा सम्राज्ञी बभूव। सैव महाराजाधिराजस्य पञ्चमजयोर्जमहोदयस्य पितामही। तस्या रजत-सुवर्ण—हीरकजयन्त्यो यथाक्रमं भारते समभवन्। यस्या एवेयं घोषणासीत् यत् भारते कस्यापि धर्म—बाधा कदापि न भवेत्। स्व-स्वधर्माचरणे सर्वेऽपि-स्वतन्त्रा भविष्यन्ति—इति।

१९०१ खिस्ताब्दस्य जनवरीमासे सा महाराज्ञी सकलमपि प्रजाजनं शोकसागरे निमज्जयन्ती पञ्चतामवाप।

तदनन्तरं तस्याः श्रीमत्यास्तनूजन्मानः प्रतिभाशालिनः सप्तम एडवर्डमहोदयाः सम्राट्पदमलञ्चक्रुः। सोऽपि महापुरुषः १९१० तमे खिष्टाब्दे षष्ठ्यां तिथौ प्रजावर्गं राजपरिवारञ्च दुःखितञ्चकार।

तदन्तरञ्च १९११ खिष्टाब्दे दिसम्बरमासस्य द्वादश्यां तिथौ सम्राट् पञ्चमजयोर्जः हस्तिनापुरेति

प्रसिद्धे देहलीनगरे राज्येऽभिषिक्तः प्रजाः समनन्दयत्। १९०५तमे च खिष्टाब्दे यदायं महाराजो युवराज आसीत्, तदाप्ययं भारतभ्रमणं विधातुं समागत आसीत्। इह तेन विविधदेशानामवलोकनं कृतं भारतीयेभ्यो दर्शनञ्च प्रदत्तमासीत्।

साम्राज्याभिषेकावसरे श्रीमता सम्राजा प्रजाहिताय भारतीयेभ्यो वहवोऽधिकाराः प्रदत्ता आसन्। देहलीनगरञ्च राजधानीकृतम्। वंगभङ्गस्यापि भङ्गः कृतः। शिक्षासमुन्नत्यै च वहुतरं धनं प्रदत्तम्।

१९१४ खिष्टाब्दतः १९१८ पर्यन्तं योरोपीयं महायुद्धमभवत्। तस्मिन्नतिभयङ्करे युद्धे वहवो देशाः प्रलयं गताः, वहवो विपरिणतिं प्राप्ताः। जर्मन-रूस तुर्की—प्रभृतिदेशानान्तु कायाकल्प एव समजनि। तत्रत्या महाराजा अपि पदच्युता अभवन्। वहूनां क्षुद्रराष्ट्राणां जन्मान्तराण्यभवन्। परमस्माकं विजयिनां चक्रवर्त्तिजयोर्जमहोदयानामुदय उत्तरोत्तरमुन्नतिमेव प्राप्तः। तत्राप्यनेन युद्धे मृतानां भारतीय वीराणाम् स्मृतिरक्षायै, सन्ततिरक्षायै च महान् प्रयत्नो विहितः, क्षतानाञ्च चिकित्सादिप्रवन्धोऽपि सुमहान् कृतं आसीत्।

विगतमहायुद्धे प्रमाणीकृतं जयोर्जमहोदयेन यत् व्रिटिश—साम्राज्यान्तर्गतानां विभिन्नदेशानां दूरस्थितानामपि हृदयमेकमेव। विपत्तावपि तेषां हृदयं विदीर्णं न जातम्। उक्तमेव केनापि कविना

"व्रिटानिया! राज्यं कुरु, व्रिटानिया समुद्रो परिराज्यं करोति, न खलु न खलु कदाप्ययं राजवंशो दासत्वमेष्यति" इति।

भारतशासन—विषयेऽपि शनैः शनैः कार्य्यं भवति। भारतवासिनः, अधिकरान् प्राप्नुवन्ति; परमेतादृशः सुधारः केवलं वालकानां मोदकप्रदानमिवास्ति, नतु बुभुक्षितस्य बुभुक्षा-निवारणार्थम्। अस्माकं मनसि महानयं खेदो यत् अद्यापि "औपनिवेशिकं स्वाराज्यं" ( Dominian States ) प्राप्तम्। इदानीं तु तस्य नामापि तिरोभूतम् परमत्र नास्माकं सम्राजस्तत्र कोऽपि दोषः उक्तमेव यत् नृपाः राज्यंकुर्वन्ति. नतु शासनम् ( Kings Ragain but do not Rooll ) महाराजस्यास्य व्यक्तिगता सहानुभूतिर्विद्यत एव भारतीयैः सह। अस्य हृदये भारतीयानां कृते महाननुरागो विद्यते। धन्यवादार्हाः खलु तस्य मनोभावाः। विजयतामयं सम्राट्।

सुप्रभातमस्तु सर्वेषाम्।

---

## समस्यापूर्त्तयः।

श्री नारायणपति त्रिपाठी

---

वाग्देवतापादसरोजसेवी
विद्याविनोदी कवितविलासी।
देवीप्रसादः 'कविचक्रवर्त्ती'
कैलाशवासी भवतु प्रसन्नः ॥ १ ॥
न तादृशः सम्प्रति कोऽपि विद्वान्
साहित्यविद्याव्यसनीह दृष्टः।
यो भारतीभारतदेशभाषा—
सुवर्णगन्धार्चितवाक्प्रतिष्ठः ॥ २ ॥
विपदज्ञानविद्वेषकुरीतिकुलदाहिका
पालिका धर्मवृत्तीनां मुदा भवतु होलिका ॥ ३ ॥
सरसानां कवीनां वा-विलासस्तत्र जायते।
"जनीमहे" "सुप्रभातं," "होलिका" दिमहोत्सवम् ॥ ४ ॥

# श्रीजर्योर्जचरित्रम्।

श्रीमान् पं० वीरमणि उपाध्यायः, एम० ए०, एल्-एल्० बी०, साहित्याचार्य्यः,



श्रीपरमानन्दपरमात्मपरमप्रसादादद्य महाराजमण्डलमहनीयानामनवद्यविद्याविद्योतितान्तःकरणानामवाधाबाधिताऽविरतावगीतचिरतसकलकरणानां कमनीयकीर्तिनिकरनिकेतनानां निखिलप्रजाजनहृदयनित्यनेदिष्ठानां शौर्यगाम्भीर्यदया-वात्सल्यादिगुणगणदिगन्तविश्रान्तविश्रुतानाम्प्रभापटलपरीतविभाविभावसंभावितवदनानां सितच्छत्रादिसकलराजचिह्नसमवेतानामधिकवयोऽप्यगमेऽपि तेजःपुञ्जप्रसराऽप्रसह्यप्रमुदितमुखमण्डलानामनल्पकल्पकल्पनाकलितकौशलकीलितविख्यातवैदग्ध्यानां श्री विद्या-श्री-ख्यातिपरिसंख्यातपञ्चमजर्योर्जमहोदयानाम्पञ्चविंशतिसंवत्सरविततशासनसन्तानितराजकमहोत्सवोऽयं सर्वतश्चकास्ति। सकलप्रजाजनमनस्सु नवान् भावान्राजभक्तिभरितान्प्रवर्त्तयति च। नूनमद्य के नाम नहि हर्षप्रकर्षपरिपूरितान्तःकरणाः, प्रेमपीयूषप्रवर्धितराजभक्तिभरितभावकदम्बकोरकित हृदयाश्च अस्मभ्यमप्यधिकधन्यास्ते आनन्दनिर्भरनिर्झरनिपातप्लावितहृदयभुवश्च ये दुर्घटकूटकोटिघटनापाटवप्रकटितनीतिनैपुण्यैर्नित्यनववस्तुनिकरनिर्माणप्रमाणितवैज्ञानिकवैशद्यैरनवरतसेवितसरस्वतीपादपाथोजप्रभूतयशोराजिराजितैश्च समाकुलायां संसदि राज्यासनमण्डपे समधिरूढम्, सर्वजनाधिरूढं पञ्चविंशतिवर्ष विततराज्यमहोत्सवाधिष्ठातारं सकलनयन-महोत्सवाधिष्ठातारं सपरिवारमभिमुखीभूतं हारयष्ट्यग्रग्रथितरत्नमयूखचयचुम्बितसौवर्णसमवचितरचितमुकुटभूषितं श्रीक्षितिपालमहोदयमन्तःसमारूढप्रीतिरसनिःस्यन्दविस्तारितेन प्रतिक्षणं कुतूहलोत्तानितेन लोचनयुगलेनाश्चर्यरसातिरेकहृष्टहृदयोऽमुमवलोकयन्ति; यदर्थमद्य समर्थैः स्वभवनेष्वादररचितनृत्यगीतवादित्राराधनानि, राजपुरुषैः शतघ्नीशब्दाऽनुवृत्तनिनादितानि क्रियन्ते, निशायां राजभवनेष्वन्यनगरवेश्मसु च प्रकृष्टप्रभाभासितदीपमालाः प्रतन्यन्ते, अस्माकन्तु गीर्वाणवाणीसमाराधनैकधनानामिमानि कतिपयपदान्येव अमन्दानन्दसमुद्भूतपुष्पाञ्जलयोऽयोविधानापेक्षिताऽन्यानवधानरीतिश्च।

अहमप्यात्मानमलब्धसाक्षात्कारोप्येतावतैव धन्यं मन्ये यदभवमद्यभूमौ राजराजेश्वरराजतजयन्तीसमृद्धमहोत्सवसाक्षात्कारसम्भूतानन्दराशेः। एतादृशे कालेऽस्मन्मनोनीतसम्राट्प्रवरमहोदयानां प्राक्तनं चरितं समुद्बुद्धसंस्कारवलानीतं चेतसि समुदीर्णं भवति यत्स्मारं स्मारं विवक्षाकौतूहलापनोदनायैव संस्कृतप्रणयिभ्यः पाठकेभ्योऽनुक्रमुपेक्षितुं न प्रभवामि। अशासे मद्वचने दत्तावधानाः श्रोष्यन्ति व्याजिहीर्षितमग्रे पण्डितप्रवरा मदनुजिघृक्षया संस्कृतच्छात्राश्च शिक्षालाभायाऽनल्पफललाभाय।

श्रीसमाड्भूषणपञ्चमजार्जमहोदयानां जन्म १९२२ वैक्रमाब्देऽभूत् एतेषां ज्यायसो भ्रातुश्च राजकुमारश्रीअलवर्टविक्टरमहोदयस्य केवलं सप्तदशमासैरूर्ध्वमितः। एतेषां माता महाराज्ञी श्रीमती एलेक्जेन्ड्रेति नाम्ना विख्याता विद्याविनयसम्पत्सम्पन्ना सकलकल्याणगुणैः ...

रीकृतसुकृतसुकृत्यसम्पन्नसुजनराशिः, स्त्रीजनललामभूता ललनाभूषणोचितशीलसौभाग्यशालिनी असाधारणबुद्धिविवेकविचक्षणा चासीत्, ज्येष्ठत्वात्प्रथमराजकुमारस्य सम्भावितराज्याधिकारित्वेऽपि सर्वजनैरधिकमाद्रियमाणत्वेऽपि मातोभावपि समानमेव विकचराजीवसदृशं दृशं स्नेहजुषं विक्षिपन्ती, पर्यालोचयत्सममंस्त च। अतएव भ्रातरौ नितरां समानमानभाजौ परस्परमस्निह्यताम्। तयोः कृतेऽल्पकालायतवियोगोऽप्यसोढव्य आसीत्। सत्यमेतादृशभ्रातृपारस्परिकस्नेहः सर्वेषामप्यादरणीयोऽनुकरणीयश्च। बाल्येऽप्येतावुत्कृष्टविनयसम्पन्नावभूतां; पानुरूपशिल्पशीलविद्याज्ञानकौशलार्जनरतौ च ए[...] गुरुजनाज्ञामन्तरेण न किमपि कार्यमकुर्व्वाताम्, स[...] दादर्कस्वादूनि कर्माण्येव पित्रादिष्टान्युपक्रममा[...]नेतराणि।

( क्रमशः )



# भारत-वैभवम् ।

श्रीगोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्यः, न्यायतीर्थः, व्याकरणशास्त्री।



( क्रमागतः )

इहैव मिथिलायां गङ्गेशोपाध्यायरघुनाथशिरोमणि-मथुरानाथ-गदाधर-जगदीश-प्रभृतिभिस्तार्किकैर्नव्यन्यायनिर्माणेन संस्कृत-साहित्ये युगान्तरमुपस्थापितम्। अत्रैव विहारप्रदेशे शोणनदतीरस्थ-प्रीतिकूटग्रामे बाणभट्टः कविसम्राट् गृहीतजनिः कादम्बरीरचनया संस्कृतसाहित्यं समृद्धिमच्चकार। यस्य विषये—

"वाणेन हृदिलग्नेन यन्मन्दोऽपि पद-क्रमः।
प्रायःकविकुरङ्गाणां चापलन्तत्र कारणम्।

इति सूक्तिर्जागर्ति। अस्मिन्नेव प्रदेशे मिथिलायां कविकोकिलो विद्यापतिटक्कुरः समजनि; यस्य कवितासमादरः प्रान्तत्रयेऽपि समानरूप एवास्ति। विहारस्य दक्षिणात उत्कलकलिङ्गदेशौ स्तः। याभ्यां सह पौरस्त्यद्वीपानां सहस्रवर्षं यावद् व्यापारसम्बन्धो भवतिस्म। कलिङ्गस्थचैत्रवंशसमुद्भवो महाराजो मेघवाहनः स्वराज्यमापश्चिमसागरं वितस्तार। एतस्यैव पूर्वतो वंगदेशो विद्यते, [illegible] भूमिः सर्वदा इन्द्रदेवकृपापात्रीभूता "देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः। स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्' इति[...]माद् देवमातृकेति गीयते। वंगीयसाहित्यविस्तारोऽवर्णनीय एव। यत्र भक्तशिरोमणिः चैतन्यमहाप्रभुरवततार किम्[...]लिमस्तदीयमहिमातिशयः। इहैव कविवरो जयदेवः स्वीं विपञ्चीं वादितवान; यस्य विषये 'वाचः पल्लवयत्युमापतिध[...] सन्दर्भशुद्धिं गिरां जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः, इति भणितिः। एतत्समसमयसम्भूतो धोयीकविरपि स्वमहिम्ना अद्वितीय एवाभवत्। यस्य कृते उपर्युक्त कविताया अवशिष्टांश एवमस्ति। "श्रृंगारोत्तरसत्प्रमेयरचनैराचार्य्यगोवर्द्धन-स्पर्द्धीकोऽपि न विश्रुतः श्रुतधरो धोयी कविक्ष्मापतिः। इहैव नादिरसाह हुसेनशाहादिराज्यसमये विद्यापनिकृत्तिवास-चण्डीदासमालाधरप्रभृतयो भगवद्भक्तिमयानि काव्यानि कल्पयाम्बभूवुः। धर्मशास्त्र-धुरन्धरधार्मिकजीमूतवाहनो हि वंगाल एव दायभागना[...]

ग्रन्थं विरचितवान्। आपादपद्मप्रणताः कलमा इव ते रघुम्। फलैः सम्वर्द्धयामासुरुत्खातप्रतिरोपिताः। इति वंगालीयान् पादपद्मप्रणतान् कलमान् कालिदासेतरः को वर्णयितुमर्हति। वंग एव पौण्ड्र-सुवर्णकुण्डनगरयोरनुपमेयानि दुकूलवस्त्राणि निर्मीयन्तेस्म। कर्ण-सुवर्णनगरसमीपे नागकेसर-लिकुच-वकुल-वटवृक्षेषु कोशकीटाः पाल्यन्तेस्म। यतः कौशेयानि अधिकमात्रया निःसरन्तिस्म। एषां सम्बन्धः दशपुरस्थांशुकव्यवसायिभिः सहासीद्यत्रेमे स्वकौशेयानि वस्त्राणि विक्रीणन्तिस्म। अस्यैव कर्ण-सुवर्णस्याभ्याशे रक्तमृत्तिका-स्थानं विद्यते। यदीयस्य पोताधिपतेर्महानाविकस्य बुद्धगुप्तस्य शिलालेखो मलयनाम्नः प्रायोद्वीपस्य वैलोजलीस्थानेऽधुनाप्युपलभ्यत एव।।

इह वंगे प्रतिगृहं शक्तिदेव्या उपासना वोभूयते। अत्रैव श्रीवङ्किमचन्द्रस्य तन्त्रीनादतो वन्देमातरमिति नादो निःसृत्य सर्वं भारतं निनादितवान्। काव्य-कलायाः, साहित्य-सुषमायाः, नाटकस्य विज्ञानस्य च जननीयं वंगभूमिरनुपमा। अस्या एवैशान्यकोणे नवद्वीपनगरी, याम् श्रीचैतन्यमहाप्रभुः स्वजन्मनालङ्कार। इयम्पुरी द्वितीया तक्षशिलैव। अत्रैवाधीत्य तार्किकशिरोमणयो नव्यन्यायविस्तारम्विदधुः। अधुनापि कामरूपदेशः प्रकृतिदेव्याः प्रियवत्सलो, वभ्रुवाहनस्य राज्ञो राजधानी, कामाक्षादेव्या निवासभूमिर्भारतशिर उन्नमयत्येव।

मध्यभारते सर्वमान्यो मालवप्रदेशोऽस्ति। यत्र अवन्ती नाम राजनगरी। चर्मण्वती—शिप्रा-गम्भीरा वेत्रवती-सिन्धुप्रभृतयः प्रख्याताः सरितः प्रतिदिनं स्वोपहारं यमस्वसुः क्रोडे समर्पयन्ति। उत्तरमालवस्येयमुज्जयिनी राजपुरी दक्षिणमालवस्य तु माहिष्मती प्रधाना पुरी बभूव। उज्जयिन्यां सर्वदेशगा व्यापारप्रधानपथा उपलभ्यन्तेस्म। प्रथमः सौवीरतोऽवन्तिकां यावत्। द्वितीयः प्रतिष्ठानतः, अवन्तीं विदिशाञ्च गच्छन् कौशाम्बीतः,साकेतं श्रावस्तीञ्च याति स्म। ततःकुशीनगरं, पाटलिपुत्रं, राजगृहं यावत् संवद्ध आसीत्। तृतीयश्चावन्तीतः काशीं व्रजन् चम्पां ताम्रलिप्तीञ्च समायततिस्म। चतुर्थस्तु प्रसिद्धः पन्था अवन्तीं गान्धारदेशेन संयोजयति स्म। अस्यामेव श्रीविशालाया-म्विशालायां प्रद्योतानां राज्यमासीत्। इहैव ज्यौतिषविद्यायाः समुन्नतिः समजनि। पञ्चसिद्धान्त-प्रवर्त्तकः श्रीवराहमिहिर इमामेवाध्युवास। भारतवर्षस्य तदानीं संस्कृतकेन्द्रत्वमियमेव पुरी प्राप। यत्र कालिदासःस्थित्वा मेघं दूतं प्रेषितवान्। सा नगरी स्वर्गस्य कान्तिमत्खण्ड एवेत्यत्र किं विमर्शनीयम्। इहैव शिप्रातीरे प्रतिष्ठिते महाकालमन्दिरे महाभारतस्य कथा प्रतिदिनं भवतिस्म। कदाचिदियं हूणराजानामपि राजधानी बभूव। प्रबल-प्रतापी क्षत्रपो राजा विक्रमस्य द्वितीयशताब्द्यामिहैव स्थित्वा शशास धराम्। मालवप्रदेश एव पुष्यमित्राणां गणराज्यमासीत्। यैः गुप्तवंशीयानामपि श्रीः सन्दिग्धा समपादि। एषु एव समुदितवत्सु पुष्यमित्रेषु निजपराक्रमं सन्निवेशितुं महाराजस्कन्दगुप्तः भिटारीनगरपार्श्वे स्थण्डिलशायी सन् तपश्चचार। यश्च समराङ्गणे विक्रान्तैर्हूणराजैः सह संयुध्य पृथ्वीं कम्पायमानां प्रकुर्वन् हूणान् जिगाय। तेनैव महात्मना असंख्येयान् म्लेच्छान् विमर्दयता पुनरपि भारतभूरार्य्यधर्मे प्रतिष्ठापिता। तस्यापि जनेन्द्रस्य, हूणहननकेशरिण इयमेव पुण्यपुरी निवासभूः।

अस्या अवन्तिकाया दक्षिणस्यां दिशि सा महाप्रसिद्धा धारा धरातललामभूता नगरी, यत्र विद्वद्धुरीणो राजा भोजो बभूव। यस्याऽधुनापि नतमस्तकैः पाश्चात्यैर्वैदुष्यशो जेगीयते। सरस्वतीकण्ठाभरणप्रणेता यो भोजराजः, कस्मिन्विषये स्वीयां लेखनीं न चालितवान्। धन्येयं मालवभूर्यत्रैवमादृशनृपतय उत्पन्नाः। आभिरेव पुरीभिर्भारवमातृभूरुन्नतमस्तका आसूर्य्यचन्द्रंस्थास्यति। मध्यभारतस्य पूर्वभागे बुन्देलखण्डे विदिशानाम नगरी अस्ति।

अयं प्रदेशो दशार्णशब्देन गीयते । यत्र साँची-भारहुतयोः स्तूपाः सन्ति । येषां शिल्पकला अधुनाऽपि भारत गौरवं व्यञ्जयन्ति । इमे स्तूपाः न केनचन राज्ञा निर्मापिताः । किन्तु तत्रत्यैः पौरजानपदैः स्वगणान्नेन (चन्दा) निर्मापिता भारहुतस्तूपे भदन्त-कश्यपगोत्र-मध्यम-दुन्दुभिसार-गोतीपुत्रादीनाम् अस्थीनि अद्यापि द्वाविंशतिशताब्दी पश्चात् तथैव सुरक्षितानि उपलभ्यन्ते । इमे महात्मानौ युद्धदुन्दुभिस्थाने धर्मभेरीघोषं निनादितवतो महाराजस्य अशोकस्य आज्ञया हिमालयप्रान्ते तथागतधर्मप्रचारं कृतवन्तः । अत्रेदानीं हिन्दीभाषा सम्यक् पुष्पिता फलिता च भवति । अत्रैव चम्पकरायपुत्रः छत्रशालोऽपि स्वालौकिकपुरुषार्थेन हिन्दूराज्यं प्रतिष्ठापितवान् ।

मध्यभारतस्य दक्षिणप्रदेशे विन्ध्यपारियात्र-पर्वतयोर्मध्ये रेवानदी प्रवहति । अत्र पर्वतवनखण्डेषु अधुनापि प्राक्तनी सभ्यता प्रचलति । महाकान्तारं दण्डकारण्यमिहैव विद्यते ।

इहैव शून्ये जनस्थाने कनकमृगतृष्णांधितधिया भगवता मर्यादापुरुषोत्तमेन रामचन्द्रेणापि उदश्रु प्रलपता भ्रान्तम् अस्यैव दक्षिणे भागे विदर्भदेशोऽस्ति । यत्र दमयन्तीन्दुमतीसदृशाः स्त्रीधौर्या बभूवुः । महाकविर्भवभूतिः सप्तम्यां शताब्द्यां पद्मपुरग्रामे कश्यपगोत्रीयब्राह्मण-कुलं स्वजन्मनालङ्कृत्य अमुमेव प्रदेशं शोभयामास । किं वाच्यं शब्दब्रह्मप्रत्यक्षितवतस्तस्य महाकवेर्विषये यस्य वाणी उत्तररामचरितरूपेण परिणता अशेषाणि सुकविमनांसि विमोहयति ।

अचल-पुरग्रामे कौशिकगोत्रोत्पन्नो भारविः, दण्डी च बभूवतुः । ययोरर्थ-गौरवं पदलालित्यं च सर्व-कविप्रसिद्धमेवास्ति । मध्यप्रान्त एव रामगिर्याश्रमः मालक्षेत्रं आम्रकूटश्च विद्यन्ते । अत्रत्य-छत्तीसगढ़ीय इतिहासो राजस्थानस्यैव एकः खण्डो ज्ञेयः । अस्यैव दक्षिणतो यत्र

गंगा-गोदावरि-तुङ्गभद्रा-कृष्णादिनदीनां सम्मर्दे महाकान्तारप्रदेशोऽस्ति । यत्र कदाचन वन्यानां प्राणिनां घोषः श्रूयतेस्म । इहैव सातवाहनराज्यविस्तारः समजनि । इह अधुनापि प्राचीन-संस्कृत साहित्यग्रन्था अनेके उपलभ्यन्ते । अस्योत्तर-पश्चिम-कोणे अजन्तानाम्नी गुहा अस्ति । या राष्ट्रिय-शिल्पशालेति निगद्यते । मौर्य-गुप्त-चालुक्य-पल्लवप्रभृतयो महाराजाः स्वसम्पत्तिभिर्यां साधु समर्धयामासुः । वित्तपालादयः, तक्षका अस्या एव गुहाया अलङ्करणे स्वकौशलं प्रदर्शयामासुः ।

इतः पश्चिमदिशि उत्तरतो दक्षिणं यावत् महाराष्ट्रदेशोऽस्ति । यस्योत्तरतःसिन्धुसौवीरदेशौ स्तः । यदीयः शल्यो राजा कुरुक्षेत्रयुद्धे कर्णसारथित्वमुपेत्य पाण्डवानुपचकार । क्षेत्रमिदं सिन्धुनद्याः साधुकृपाकटाक्षपालितंविद्यते । इह कस्मिंश्चित् समये अम्बष्ठाःक्षत्रियास्तथा मुचुकर्णिप्रभृतयो गणराजा आसन् । ये च सिकन्दरखड्गं निरुध्य अन्ताराष्ट्रियविधानस्यान्तिमांसीमां दर्शयामासुः । इहत्या दण्डनीतौ परमनिष्णाता भवन्तिस्म । मुचुकर्णिसंघराज्ये बहवः सुवर्णाकरा आसन् । इमे स्वास्थ्यसम्भृतं कायं धर्मवत् परिपाल्य शतायुषो भवन्तिस्म । स्वतन्त्रताया उपासकेऽस्मिन् जनपदे कदर्य्याणां दासानाञ्च नामापि न श्रूयतेस्म । अत्रैव सिन्धुतीरे पाटलनगरमासीत् । यस्य व्यापारः पाश्चात्यदेशेन सह समवर्द्धत । इह सौवीरप्रान्ते राजा दहिरो देशाभिमानमदमत्तः स्वात्मानं हावयामास । विक्रमस्य सप्तमे शतके सिन्धुतीरे सुखासीनो देवलो महर्षिः समाजव्यूहकं समयानुकूलमतिगम्भीरं धर्मशास्त्रं स्वनाम्नैव प्रख्यापयामास । यस्य देवलस्मृतिरितिनाम । येन च्युतसंस्काराणां पुनर्हिन्दुधर्म्मप्रवेशायोद्घाटितन्द्वारं विद्यते । अस्मिन्नेव प्रान्ते अमरकोल सम्राट् अकबरः (अकबर) जन्म लेभे । इह सिन्धुतीरस्थे परायां धरायां साधु वेदान्त-सूफीधर्मः पल्लवितोऽभवत् । इह

सप्तदशशतके शाहलतीफनामकः कश्चन महापुरुषः सालो नाम पुस्तकं लिखित्वा सर्वपुरुषान्तःस्थितात्मना मैक्यं निदर्शयन्नद्वैतमतमेवाविश्चकार । सचलः, स्वामी, दलपत-प्रभृतयश्च तन्मतमेव प्रतिगृहं प्रसारयामासुः । यद्यपि सिन्धु-प्रदेशोऽयमेकस्मिन् कोणे गुप्तोऽस्ति । तथापि एतदीयहृदयनादो भारतहृदयनादः । एतदन्तिक एव आनर्त-सुराष्ट्रलाटप्रदेशाः सन्ति । साबरमती-मही-नर्मदा-पयोष्णी-प्रभृतयो महानद्यः प्रवहन्त्यो धरातलं शस्यश्यामलमुर्वरितं विदधति ।

सरस्वती नदी तीरे अणहिलनगरं विद्यते, यत्र कलिकालाचार्य्यस्य कुमारपालस्य सचिवः पाहिनीपुत्रः श्रीहेमचन्द्रोऽनेकानि ग्रन्थरत्नानि विरचयाम्बभूव । यस्य प्रसादभोक्तारो ब्राह्मणा जैनाश्च समा एव आसन् । अस्मिन्पत्तनेऽधुनापि जैनग्रन्थरत्नानि सुरक्षितानि हस्तलिखितान्येव प्राप्यन्ते । श्रीहेमचन्द्राचार्य्यस्य सर्वाण्येव पुस्तकागाराण्येव खरतरगच्छभित्तौ निगूढानि सन्ति । अत्र सर्वेषामेव विदुषां दृष्टिराशया संलग्नास्ति । सौराष्ट्र एव वलभी राजनगरी जागर्ति । यत्र स्थित्वा गुप्तनरेशानामेका शाखा बहुकालं धरातलं शशास । अस्य नातिदूरे पालिताना-शत्रुञ्जयनामके तीर्थे स्तः । यत्र सहस्रश आर्हताः प्रतिवर्षं तीर्थयात्रया आयान्ति, यान्ति च । अस्यैव गौरवं धनेश्वरो महाकविः शत्रुञ्जयमाहात्म्यनामके ग्रन्थे निबबन्ध । सौराष्ट्रस्य सर्वप्रसिद्धा पुरातनी पुरी द्वारावती यत्र विक्रमतः चतुर्दश शताब्दीपूर्वमेव पूर्णपुमान् भगवान् श्रीकृष्णः सात्वत—दाशार्हान्धक—वृष्णिप्रभृतियादवान् शासनसूत्राणि शिक्षितवान् । येषां मुद्राश्चक्राङ्किता वृष्णिसङ्घस्य त्रातरस्य' इत्यादि शब्दैरुपलक्षिता यत्र तत्रोपलभ्यन्ते । तत्कालीनं द्वारावतीन्द्रप्रस्थयोः सम्बन्धं को विद्वान् न वेत्ति ।

इहैव सौराष्ट्रे समुद्रतीरे प्रभासतीर्थं विद्यते यत्र मदोद्ग्राणां यादवानां विनाशः । अयमेव प्रभासः सोमनाथतीर्थत्वेनाधुनाविश्रुतोऽस्ति । यत्र "मज्जेत् त्रयी दण्डनीतौ हतायाम्, सर्वे धर्माः प्रक्षयेयुर्विरुद्धाः । सर्वे धर्माश्चाश्रमाणां हताःस्युः, क्षात्रे नष्टे राजधर्मे पुराणे । इति

शाश्वतिकस्य सत्यस्य यवनविध्वंसकद्दस्ततः प्रत्यक्षमेवानुभवमार्य्यजातिश्चकार । इयं सा गुर्जरभूमिः यदीया व्यापार-कुशला वणिजो महापोतैः समुद्रमपि तीर्त्वा द्वीपद्वीपान्तरं गत्वा वाणिज्यकौशलादनन्तधनराशीन् स्वदेशे आनयन्तिस्म । अस्मिन्नेव गुर्जर प्रान्ते पोरबन्दरमोरवी नामादि स्थानं विद्यते । इहैव.प्रान्ते दयानन्द-सरस्वतीसदृशा ब्रह्मचारिणो मोहनदासगान्धिसदृशाश्च सत्याग्रहिणो महात्मानो भवन्ति । अस्यामेव पुण्यभूमौ नरसीमेहता अक्खा प्रभृतयो भक्तशिरोमणयो जायन्ते । इहैव रैवतक [ गिरनार ] पर्वते सुदर्शनसरो विद्यते यत् मौर्यसम्राट् चन्द्रगुप्तः स्वस्थानिक-पुष्यगुप्तनामकवैश्यद्वारा निर्मापितवान् । तस्य पौत्रेणाशोकदेवेन स्वप्रादेशिकं तुषास्फमादिश्य च. पयस्वत्यो ( नहर ) निर्मापयाञ्चक्रिरे अत्र । सुदर्शननामा तडागः समग्रमपि सौराष्ट्रमदेवमातृकञ्चकार । कियतः कालात् तटाकोऽयं प्रचण्डवृष्ट्या भिन्नोऽभवत्, यस्य पुनरुद्धाराय उज्जयनीस्थो राजा रुद्रदमनः स्वमन्त्रिमण्डले नास्वीकृते द्रव्यव्यये स्वीयकोशेन जीर्णोद्धारं कारयामास । ( गिरनार ) रैवतकस्थः शिलालेखः राष्ट्रविधानस्योज्ज्वलं जागरूकं प्रमाणं विद्यते । एतस्य दाक्षिणात्यो महाराष्ट्रदेशः । यत्र सह्यपर्वतमालाः प्रभूताः सन्ति । विदर्भस्य पश्चिमभागः कुन्तलशब्देनोच्यते । यत्र प्राकृतकवी राजशेखरो जन्म लब्ध्वा कुन्तलराजकुमार्याः कर्पूरमञ्जर्य्याश्चरित्रं वर्णितवान् । महाराष्ट्रस्य मध्यभागे भीमानद्याः दक्षिणे तीरे पण्ढरपुरमस्ति यत्र ज्ञानेश्वरो महाराजः स्वजन्मना ज्ञानेश्वरी-निर्माणेन च मानवानत्युपकृतवान् । इहैव मुक्तादेव्या गर्भतः चोखामेलानाम भक्तराजो स्वजनुर्जग्राह । बहवो भक्तशिरोमणयोऽत्रप्रान्ते समजनिषत । एकनाथो नामदेवोऽन्ये च महात्मानोऽत्र जनिं लेभिरे । कविवरो मोरोपन्तः साधुस्तुकारामश्च स्व-काव्यामृतेन साधु महाराष्ट्रानानन्दितवन्तः ।　　　　[ क्रमशः ]

# संस्कृत–भाषा, वैदेशिका विद्वांसश्च ।

श्रीमान् विन्ध्येश्वरी प्रसाद शास्त्री



इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥

भाषा नाम मनोभावव्यञ्जको वर्णात्मकः शब्दः सा किल शब्दरूपा भाषा सर्वशुक्ला कापि देवीव कमपि दिव्यालोकं वितरति· इत्यतः सरस्वती देवीत्युच्यते। देवीयं कापि मणिदीपिकेव मधुरया निरञ्जनया आलोकशक्त्या गृहगतान् पदार्थानिव मनोगतान् भावान् प्रकाशयति । यदि संसारे सरस्वती देवी नाऽस्थास्यत, तदा पशव इव मानवा अपि मोहान्धतमसे न्यमङ्क्ष्यन् ।

जगतीतलेऽत्र प्रचारविषयीभूतास्वपि बहुविधासु भाषासु सुरसरस्वत्येव सर्वतः प्राचीना सर्वासां जननी गरीयसी चेति सर्वेऽपि निष्पक्षपातबुद्धयः सुधियः स्वीचक्रुः। तथाहि—

मैक्समूलर-महोदयः स्वीये Science of Language नामधेयपुस्तके लिखितवान्–"पृथिव्यामत्र सर्वभाषापेक्षया देवभाषैव सर्वतो गरीयसी "। अध्यापको वोय सहिबो नैजे Edinburgh Review पत्रे लिलेख–"कदाचन पृथिव्यामत्र संस्कृतभाषैव सभ्यभाषाऽऽसीत। ग्रीक–लैटिनभाषापेक्षयाऽपि सुरगवी पूर्णा, प्रचुरशब्दावलीसंवलिता, समधिकभावप्रभावप्रकाशिका सुन्दरपूर्णावयवपरिपूर्णा चेत्यत्र न सन्देहलेशोऽपि" इति। जर्मनीवास्तव्यः श्लेजेलमहोदयः स्वीये History of Literature नामके ग्रन्थे स्वीचकार–" पूर्णत्वाद् विशुद्धत्वाच्च तस्याः संस्कृतभाषेति नाम"। अध्यापकः टेलरसाहिब: The genaral of Royal Asiatic society नामके मासिके स्वीकृतवान् -"सर्वतो भावेन परिपूर्णा गरिष्ठा चेयं संस्कृतवाणी हिन्दूनां सर्वोत्कृष्ट--सभ्यतायाः परिचायिका, अत्र तादृशानि दर्शनशास्त्राणि सन्ति; येषां सन्निधौ पिथागोरस-प्लेटो प्रभृतिदार्शनिकपण्डितानां ग्रन्थाः साधारणाः प्रतीयन्ते"। अध्यापको हिरेन महाशयः Historical Reasarches नामके स्वग्रन्थे व्याजहार–"संस्कृतभाषाया अध्ययनेन निश्चीयते यत् एतादृशी भाषा यत्र देशे प्रदुर्भूता, तत्रत्या मानवाः सभ्यताशिखरं समारूढा इत्यत्र नाणीयस्यप्यत्युक्तिः। प्राचीना जेन्दभाषा संस्कृतभाषात एव निरगात्"। पोकक पण्डितः स्वकीये greece in India नामके पुस्तके व्याहार्षीत–" ग्रीकभाषा संस्कृतभाषात एव प्रादुर्भावमुपगता"। माननीय डुवोमहोदयः Bible in India ग्रन्थे स्वीकृतवान्–"यूरोपस्य सर्वासां भाषाणां जननी संस्कृतभाषैवेत्यादि "।

भूतपूर्वो भारतशासको वारेन हेस्टिंग्स्महोदयो हिन्दुधर्मशास्त्रनियमानुसारं भारतवर्षस्य शासनं विधातुं वाराणसीतो विपश्चित्प्रकाण्डान् आनाय्य तेषां द्वारा निबन्धमेकं विरचयितवान्। आङ्गलभाषानूदितं निबन्धमिममालोक्य पाश्चात्याः पण्डिताः परां प्रसन्नतां प्रापुः।

१७९१ ख्रिस्ताब्दे महाकविकालिदासविरचितस्य शाकुन्तलनाटकस्य आङ्गलानुवादे प्रकाशिते तत्रत्यमनीषिमानसेषु साधु समासादितं [illegible]। ततः प्रभृ

ति यूरोपीयाः सुरगवीं समाद्रियन्ते सपरिश्रममधीयते च। संस्कृताध्ययनकाले यूरोपीयपण्डितानामधिमानसं पणिनि-मुनिविरचितायाः अष्टाध्याय्याः प्रभावो नितरां बद्धमूलो बभूव। संस्कृतसाहित्ये सन्ति बहूनि व्याकरण पुस्तकानि, परन्तु अष्टाध्यायी सर्वाण्यतीत्य वर्त्तते। अष्टाध्यायीमवलोक्यैव पाश्चात्या मनीषिणो निजां भाषां रूश्चक्रुः। यूरोपीयभाषाविज्ञानपरिवृद्धये पाणिनीय व्याकरणेन महदुपकृतमिति पेरिस-विश्वविद्यालयभाषा विज्ञानप्रधानाध्यापको मययो महोदयः सुस्पष्टं स्वीकुरुते च।

" पृथिव्यामत्र सर्वभाषापेक्षया बिबुधभारती एव सर्वतःपूर्णा वर्त्तते, लौकिक्योऽन्याः सर्वा भाषाः संस्कृतभाषात एव प्रादुर्बभूवुः, कस्मिंश्चित् समये संसारेऽस्मिन् एकमात्रभाषा देववाण्येवासीत्, पूर्णत्वेन अङ्गीकृता लैटिनग्रीकप्रभृतयो वाण्योऽपूर्णा एव वर्त्तन्ते। संस्कृतभाषापेक्षया, पाणिनिव्याकरणवत् पूर्णं नान्यद् व्याकरणं जगतीतले कुत्रापि, संस्कृतलिपिरेव सर्वतो गरीयसी पूर्णा च, जागतिक्यः सर्वा एव लिपयस्तत एव प्रादुरभूवन्, पृथिव्यामनन्यसदृशं हि संस्कृतस्यालंकारशास्त्रम्" इत्यादि सप्रमाणं मेनिरे स्वस्वग्रन्थेषु माननीया महाध्यापका मैक्समूलरफ्रेड्रिकसैगल--सरजौनउड्रूफ-ब्रफेप्रभृतयो विद्वांसः।

रेखागणितस्य (Geometry) सर्वतः पूर्वं प्राकट्यं संस्कृतभाषायामेव समभूदिति सरजौन उड्रूफमहोदयो मन्यतेस्म। संस्कृतभाषाभाषिण आर्या एव सर्वप्रथमं बीजगणितमाविश्चक्रुरिति डाक्टर के० जोरी महोदयः स्वीचकार। अङ्कगणितस्य प्राथमिकं प्राकट्यं संस्कृतभाषायामेवाभूदिति डाक्टर मार्गनमहोदयो निश्चिकाय। फलितस्य गणितस्य च ज्यौतिषस्य आविष्कर्त्तारः संस्कृत भाषाभाषिण आर्या एवेति कोलब्रुकमहोदयः सबहुप्रमाणमङ्गीचकार। एवं हि पदार्थविद्याशास्त्राणि च सर्वतः प्रथममार्य—महर्षय एव संस्कृतभाषायां प्रकाशयामासुरिति बहवः पाश्चात्या मनीषिण आमनन्ति।

पाश्चात्येन ह्वियोक्रट्स् नामकेन वैद्यप्रवरेण चरकाचार्योक्ता वैद्यविषया अनूदिताः। नास्तिक् (Ynostic) नामकं क्रैस्तवमतं सांख्यमतमूलकमेव। आक्स् (Aux) इति लैटिनभाषायां परिह्रियमाणं भारतीयज्योतिश्शास्त्रप्रसिद्धम्-'उच्च' इति पदमवबोधयति।

वैदेशिको माननीयो मुग्धानलः (मैग्डोनल—Macdonell) एकत्र स्थाने व्याहरति—

The intellectual debt of Europe to sanskrit Literature has thus been undeniably Great; it may perhaps becomegreater still in the years that are to come.

अर्थात्-यूरोपदेशेन धार्यमाणं संस्कृतग्रन्थानां बौद्धम् ऋणम् अधिकम्; तच्च आगामिषु संवत्सरेषु समधिकं भवेत्।

उपनिषदो हि जीवतो मम यथा समाश्वासनानि समभवन्, तथैव उत्क्रान्तजीवितस्यापि भविष्यन्तीति शोपेनहार नामकः पाश्चात्यवेदान्ती व्याजहार।

एम्पिडाक्सल—तेलस्—प्रभृतयः पाश्चात्याः पण्डिताः तत्वविज्ञानाय भारतदेशं प्रतस्थिर इति गिरीश (Greece) देश-वृद्धा वदन्ति। सर विलियमजोन्स-हेनीतामस-कोलब्रूक्—अलक्जेन्डर-हामिलटन्—प्रभृतयः पण्डिता विंशतिवत्सरान् भारते कृतावसथाः संस्कृत मधीत्य स्वजन्मसाफल्यमधिजग्मुः। पेरिशनगर्यां

कारायां निवेशितो हामिलटन् नामको विद्वान् कारास्थ एव बहून् बहून् पाश्चात्यपण्डितान् संस्कृतमध्यापयत् ।

'शाहजहाँ' नामकस्य नृपतेः पुत्रो दाराशिकोहः संस्कृतसाहित्यस्य परः प्रणयीति श्रूयते । तदीयाज्ञयैव पारस्यभाषायामुपनिषदामनुवादो बभूव । एकोनविंशशतकस्य प्रारम्भकाले पारस्यभाषानूदितोपनिषदां काचन मञ्जिका फ्रांसदेश-राजधानीं पेरिसनगरीं प्राप्ता । तत्रत्य एको विद्वान् 'डूपरो' नामधेयः, तस्या लैटिनभाषायामनुवादं कृतवान् । अनुवादकस्यैतस्य अन्तःकरणे उपनिषदाम् एवं प्रभावो जागरूकोऽभूत् यदसौ जीवनसहचरीं विलासितां विहाय भोगविलास—केन्द्रस्थाने पेरिसेऽपि भारतीयसंन्यासिवत् तस्थौ । उपनिषदां लैटिनभाषानुवादं जर्मनदेशस्य प्रसिद्धो दार्शनिको विद्वान् शोपेनहरोऽधीतवान् । इति ।

---

## समस्यापूर्त्तयः ।



येनोदमेपि तव भारति ! सुप्रभातं
नास्त्येव सोऽद्य वत सत्कविचक्रवर्ती ॥
पञ्चानने न सति तद्ध्वनिपूरितेना—
प्याकृष्यते न गजता तु महावनेन ॥ १ ॥

मातर्भारति ! वाङ्मयेश्वरि ! भवत्पादाब्जनिर्णेजनं
पायं पायमपायहारि सुरभि स्वादूदकं तत्क्षणात् ॥
जायन्ते सुधियः कवीन्द्रमहिता, वैमुख्यभाजस्त्वयि
प्रायोऽन्ये कवयो भवन्ति यदि वा ते के न जानीमहे ॥ २ ॥

जगत्त्रितयपालिका क्षितिधरेशितुर्बालिका
हृदि स्फुरतु कालिका विमलरीतिविस्तारिका ॥
विहाय जगदम्बिकाश्रयणमत्र ये कामुका—
श्चरन्ति भुवि तत्कृते समुपयाति सा होलिका ॥ ३ ॥

साहित्याचार्य्य श्रीनारायणशास्त्रीखिस्ते—

---

## " जानीमहे "

( वाणीवन्दनम् )

केचिद् भजन्तु जगदम्बामहो सदवलम्बाकृतिं शिवमयीं
स्निग्धा नु केऽपि सुविदग्धा गणेशगुणमुग्धा अशेषकतया।
ध्येयं वदन्तु श्रुतिगेयं समुल्लसदजेयं सुरैरपि मुदा
प्राणीकृतं ह्यमरवाणीपदं शरणमेकन्नु जानीमहे ॥ १ ॥

( २ )

चासावदस्खलितमाया पतिर्भवतु कस्मै क्षमाया रतिः
पायात्कमप्यलमपायादहोलसदुमायाधवोऽभवभवः ॥
प्रेमाम्बुसिक्तनवहेमासने सकलक्षेमाय तां भगवतीं
त्यक्त्वा वयं क्वचन किंचित्किमर्थमिति किंचिन्न जानीमहे

( ३ )

प्रातःस्तवेन तव मेधामयो भवति वेधा विधानचतुरः
शर्वस्त्वदीयनुतिखर्वस्तनोति दिवि गर्वं जगत्त्रयपतिः ।
हीने शिशौ मयि मलीने दया सुमतिदीने भविष्यति न चेत्
लोके कथं जननि ! शोकेना वीम(?)इति किंचिन्न जानीमहे

ईशदत्त पाण्डेयः
'श्रीशः'

---

## संस्कृत-शीक्षा-कला-शाला

श्रीकेदारनाथ शर्म्मा सारस्वतः।

संस्कृते शिक्षणकलामहाविद्यालयस्य ( Teachers Training College of Sanskrit ) साम्प्रतं महती आवश्यकता वरीवर्त्ति। उच्चकक्षाशिक्षणम्, यथा-कथमपि वा माध्यमिकं शिक्षणन्तु कथं कथमपि सन्तोषजनकं भवति, यतश्छात्रास्तत्र प्रायः प्रबुद्धाः, व्युत्पन्नाश्च भवन्ति। परं संस्कृतस्य प्रारम्भिकं शिक्षणं नितरां दुरवस्थं दुर्बलञ्च विद्यते। प्रारम्भिकशिक्षणमेव वस्तुतः शिक्षणम्। तत्राव्युत्पन्ना एव सन्तिष्ठन्ते छात्राः। साम्प्रतिकपरीक्षाप्रणाल्या पठनेन वास्तविकः पदार्थबोधो न भवति! न ज्ञानाय पठ्यते विद्यार्थिभिः, प्रत्युत परीक्षार्थं पठ्यते। अहो! महान् व्यामोहो वा, गड्डलिका—प्रवाहो वा, बुद्धि-भ्रंशो वा, शिक्षार्थिनाम्, यत्ते वास्तविकीं ज्ञानलिप्सां विहाय, तत्वज्ञानं दूरीकृत्य केवलं परीक्षोत्तरणमात्र लक्ष्याः पठन्ति। परीक्षा तु पठनानुसारिणी, न परीक्षाधी-नं पठनम्। वयन्तु स्मारं स्मारमिमां दिशं विदीर्ण—हृदयाः, विलुलित—धैर्य्याः, किंकर्तव्य-विमूढा भवामो यदीयमेव दशा स्थास्यति चेत् स्वल्पतर एव काले संस्कृतस्य पाण्डित्यं सर्वथा विनश्यतीति।

संस्कृतस्याध्ययनं तावद्द्विविधम्। प्रथमन्तु प्राचीन परिपाट्या, अपरञ्च नवीन—परिपाट्या। प्राचीनपरि-पाटीपठनन्तु तदासीत् यत् सिद्धान्तकौमुदी—निर्मा-णात् प्राक्, नव्यन्याय शास्त्र—निर्माणात् प्राग्वाऽऽसीत् ततः प्रथमं व्याकरणे अष्टाध्यायी—महाभाष्य-काशिका प्रभृति ग्रन्थान्, साहित्ये च लघुत्रयी—बृहत्त्रयी—प्रभृतीनधीत्य तदनन्तरं यथाभीप्सितेषु वेद—धर्म-शास्त्र—दर्शन—पुराण—ज्यौतिषायुर्वेद—प्रभृतिशास्त्रेषु यथा भीप्सितं विषयमादाय छात्राः पठन्तिस्म। ज्योर्तिविदा-मायुर्वेदविदां दार्शनिकानाञ्च प्राचीनविदुषां व्याकरण साहित्ययोः प्रगाढ़तरं ज्ञानं तेषां ग्रन्थावलोकनेन स्फुटं प्रतीयत एव।

नवीन प्रणाल्यां खलु लघुकौमुदीमारभ्य शेखरान्त-मध्ययनम्, साहित्ये, रघुवंशमारभ्य काव्यप्रकाशान्तम् न्याये च तर्क-संग्रहमारभ्य गादाधरी—सामान्यनिरुक्ति पर्यन्तम्। शेखराध्यायिन आजीवनं तत्रैव, गादाधरी-पाठकाः समग्रं जीवनं तत्रैव यापयन्ति—

मध्ययुगे वैयाकरणा रघुवंश तर्क संग्रह ज्ञानशून्याः नैयायिकाश्च लघु-रघुज्ञानशून्या आसन्। एतद्धि शास्त्रा-र्थीय मेकदेशीयं पाण्डित्यमासीत्। नास्माकमत्र विरो-धः। एकस्यैव ग्रन्थस्य भवतु, परं सम्यग्ज्ञानं भवतु इत्येवास्माकं तात्पर्य्यम्। परमिदानीन्तूभयमपि विनष्ट प्रायम्। न्याय-व्याकरणयोरेव पठनं भवति। अन्येषां वेद-दर्शन-धर्मशास्त्र-ज्योतिष-आयुर्वेदादीनान्तु पाण्डित्यं गादाधरी-शेखर-पण्डिता मन्यन्ते एव नहि, यतस्ते वाद वितण्डादिषु न प्रगल्भा भवन्ति; यतस्तत् सन्यासिभिः, मूर्खैर्वा पठ्यते परमिदानीन्तु शेखर-गादाधरी-पाठनमपि विलुप्तप्रायमेव। प्राचीनाः पण्डिताः 'इको यणचि' इति सूत्र पठनकाल एव तत्रत्य शेखर-भाष्यादिकं पाठयन्ति बालकम्। हिन्दीभाषाज्ञानाभावात् स्वीयं भावं बाल-कानां हृदयङ्गमं कर्तुं न पारयन्ते। बालकाश्चाप्रबुद्धाः केवलं विविध-धूर्त-व्यापारिभिः प्रकाशिताः टीकाः घोषं घोषं परीक्षोत्तरणं कुर्वन्ति। एवमेव शेखर-मनोरमादि पठनावसरेऽपि लिखितान् परिष्कारान् घोषं घोषं

परीक्षां ददति। वास्तविकं ज्ञानं न भवति। यतस्तेषां मौलिकशक्तिरेव निर्जीवा जायते। एवमेकस्मिन्नेव विषये द्वादशवर्षमधीत्यापि तद्विषयज्ञा न भवन्ति, अन्य शास्त्राणान्तु कथैव का, इति व्युत्पादयित्री, लोकद्वय साधिनी, सर्वतोमुखी, प्रणाली नवीनैः परिष्कार-पण्डितैर्नाशिता, सापि नवीना प्रणाली परीक्षया विनष्टा इति उभयमपि विनष्टं केवलं प्रमाणपत्रमेवावशिष्यते। इदानीं प्रमाणपत्राण्यप्यप्रामाणिक्यान्येव सञ्जातानि।

विगतवत्सरेषु काशीस्थराजकीय-संस्कृतविद्यालये वेद-व्याकरणादीनां स्थानं रिक्तमासीत् तदानीमनेकैः परीक्षाप्रमाणपत्राणि, महतां साहाय्यपत्राणि ( सिफारिश ) प्रेषितानि। तदानीं सति समाने प्रमाणपत्रे योग्यतानिर्धारणाय अध्यक्षमहोदयैः सर्वेषामपि वाचिकी परीक्षा गृहीता। स्वयमेव परीक्षाध्यक्षैः परीक्षाप्रमाणपत्रे ष्वप्रामाण्यमाशङ्कितम्। इयं हि दुर्दशा तदैव सुव्यवस्थिता भविष्यति यदा प्राथमिकं शिक्षणं सम्यग् भविष्यति, शिक्षकाश्च शिक्षणकलाममंज्ञा भविष्यन्ति। तदर्थं-संस्कृतेऽप्यध्यापनकलाशिक्षणाय तत्तद्विषयकविशिष्ट ज्ञान-सम्पादनाय च शिक्षणकलाशाला नूनं स्थापनीया। अत्र विषये पुनरपि वयं विवेचयिष्यामः।

---

## द्वैतवेदान्त-पाठन-व्यवस्था।

प्रायो नेदं सजवनिकं सुरसरस्वतीसमुपजुषमाणानां यत् श्री१०८प०प० सर्वतन्त्रस्वतन्त्रैः विद्वदम्भोरुहाहस्करायमाणैर्नैसर्गिकीमपि परिपन्थितां विहाय श्री-सरस्वतीभ्यामहमहमिकया संसेवितैः वदान्यवृन्द गणनाधिष्ठितकनिष्ठिकैः श्री मद्भुत्तरादिमठाधिप-सत्यध्यानतीर्थैः राजकीय-संस्कृत-पाठशालायां ( क्विंसकालेज ) द्वैतवेदान्त-पाठनाय पण्डितनृसिंहाचार्यान्नियोज्य, लोकैस्स्वापतेयत्र त्पालितं स्वापतेयमनल्पं व्ययीक्रियत इति।

किम्वदन्तीमिमां श्रावंश्रावं द्वित्रैर्विद्यार्थिभिः 'दूरस्थः पर्वतो रम्य' इत्युक्तिमनादृत्य 'सिद्धमन्नं परित्यज्य' इतीममेव न्यायमनुसृत्य हायनमेकं द्वैतवेदान्त-पठनेन हापयित्वा परीक्षायामनुत्तीर्यानुतप्तम्, पुनरस्मिंश्च हायने यत्पूर्वमभ्यस्यन्त आसन् तदेव वरं मेनिरे। अथाहं पुनरिदमविचार्य वृथा यापितवान् यावदद्धमेकं द्वैत-वेदान्त-पठनेनेति भवत्स्वप्येवमुत्सुको द्वैत-वेदान्त पिपठिषायां माभूदिति प्रकाशतां निनीषते इमां सूचनां यतोहि।

अस्मिन् वत्सरे सर्वे मिलित्वा चत्वारो विद्यार्थिन आसन्। त्रयः प्रथमे खण्डे, एकश्च द्वितीये। प्रथमखण्डे पाठ्यग्रन्था इमेः–प्रमाणपद्धतिः, वादावलिः, तत्त्वोद्योतः। द्वितीये च तत्वप्रकाशिकाख्यो बृहद्ग्रन्थः। नैते ग्रन्थाः पाठिताः। वादावलिस्तु परीक्षातः प्राक् पञ्चसु दिनेषु पाठिता। क्षुर-प्रतीक्ष्ण-धिषणा मनीषिणोऽपि शिष्या. पञ्चाहस्सु शतपृष्ठात्मिकां तर्ककर्कशां वादावलिं पठित्वा परीक्षायामासन्नायां युद्धकाले शस्त्राभ्यास-इतिवत् कथं नामोपहासास्पदत्वं न व्रजेयुः। नहि परीक्षामुत्तितीर्षुभिर्विद्यार्थिभिः 'आत्मा वारे श्रोतव्यः' इति केवलं श्रावणः प्रत्यक्ष इष्यते। यद्यागः छात्राणाम् एवाग्रे चिकीर्ष्यते, तर्हि तादृशच्छात्रेभ्यः स्वायत्तवृत्तिप्रदापनं स्वीयच्छात्रत्वाङ्गीकारश्च कथम्?

एतद्विषये साम्प्रतिकप्रिन्सिपलमहोदया अपि पाठनसम्यग्व्यवस्थापनद्वारा दयनीया विद्यार्थिन इत्यभ्यर्थिताः।

हनूमद्घट्टम्, काशी। } जितेन्द्रियाचार्यः

# बुलाकीराम शास्त्रिणां भाषणम्।

अयि श्रीमन्तोऽत्रभवन्तो भगवन्तो महामहिम महानुभावाः !

धन्योऽयं दिवसो यदद्य श्रीमतां कृपया गीर्वाणवाण्याः सनातनधर्मस्य ब्राह्मणजातेश्च समुद्धरणपरायणानां श्रीवाराणसीय विद्वद्धुर्य्याणां प्रतिनिधिभूतः संस्कृत-साहित्यसमाजस्तथा सुप्रभातकार्यालयश्चापि मया दृष्टः।

यद्यपि नास्मि पंडितः किन्तु विद्यार्थी, पंडितास्तु मदीयाः स्वर्गीयाः पूज्यपादाः प्रातःस्मरणीयाः सुगृहीत नामधेयाः श्रीगुरुचरणाः महामहोपाध्याय पंडित श्री गुरुप्रसादपाण्डेयाः, महामहोपाध्याय पंडितशिरोमणि श्रीकैलाशचन्द्रभट्टाचार्यमहोदयाः, महामहोपाध्याय पं० स्वामि श्रीराममिश्र शास्त्रिणः, महामहोपाध्याय पंडित राज श्रीशिवकुमारमिश्र शास्त्रिणः, वर्तमानाश्च महामहोपाध्याय न्यायपंचानन श्रीकृष्णनाथ भट्टाचार्य्य प्रभृतय एव।

तथापि गीर्वाणवाण्याः सनातनधर्मस्य ब्राह्मणजातेश्च तुच्छातितुच्छक्षुद्रातिक्षुद्रसेवकाय महामाशातीतं स्वप्नेऽपि न संभावितं श्रीमतां शुभाशीर्वादात्मकं स्वागताभिनंदनपत्रमिदम् श्रीमद्भिः केवलं सहजोदारतया परमकृपालुतया च ब्राह्मणजातिप्रेम्णैव प्रदत्तमिति श्रीमदाज्ञां सुमनोमालामिव सधन्यवादं शिरसि धारयामि।

वस्तुतस्तु श्रीमतां यथार्थं यथोचितं च धन्यवादमपि कर्तुं न शक्नोमि यत एतादृशाः शब्दा एव स्मृतिपथन्नायांति यैर्वास्तविकं हार्दिकं कृतज्ञताभावं प्रकटी कर्त्तुं समुत्सहे।

अन्तःकरणस्यान्तःकरणमेव साक्षीतिभावगम्यमेवासंख्याकं पुनर्धन्यवाद मंगीकृत्यानुगृह्यताम् वशंवद इत्यभ्यर्थये।

श्रीमन्तः ? साम्प्रतं विकरालेऽस्मिन् कलिकाले संस्कृतभाषायाः सनातनधर्मस्य ब्राह्मणजातेश्च दुर्दशां दुरवस्थां च विलोक्य कस्य न खिद्यते चेतः सुचेतसः।

हा हन्त ! या संस्कृतभाषा सर्वभाषादिमा सर्वभाषान्तरजननी चापि सैवाप्यतदीयाऽलौकिकगुणानभिज्ञैरज्ञैरेव दुःसाहसतया मृतभाषेति कथ्यते।

परन्तु नैतत् सत्यं किन्तु विपरीतमेव। यतोऽद्यापि विदेशीयरपि स्वीक्रियतेऽस्या महत्वमिति।

श्रुतमेव स्यात् पठितं वा भवेत् समाचारपत्रेषु श्रीमद्भिर्यत् शार्मण्य-देशीयशिक्षाविभागाध्यक्षैर्विषयान्तरवत् न केवलं संस्कृतभाषायां परीक्षणमेव निश्चितं प्रत्युत संस्कृतपरीक्षो त्तरणं विना कोऽपि भाषाभिज्ञो ड्राक्तर (Doctor) पदवीं प्राप्तुं न शक्नुयादित्यपि निर्णीतम्।

जानन्त्येव श्रीमन्तो यदियं गीर्वाणवाणीह्येवामराणां वाणीति सुतरामेव सिद्ध्यति, याऽमराणां वाणी साप्यमरैवेति सा न कदापि मृता न मरिष्यति चेति निश्चीयताम्।

एवमेव साम्प्रतं सनातनधर्ममर्मानभिज्ञाः स्वजातीय धर्मशिक्षाविहीना विजातीयाधार्मिककुशिक्षाप्रवीणाः केचित् शिक्षिता अपि सनातनधर्मस्य समूलमेव वर्णाश्रम मर्यादां विनाशयितुं प्रयतमाना भगीरथप्रयत्नं प्रकुर्वते परन्त्वेतदपि विडंबनामात्रमेव यतो हि सनातनधर्मो न केनापि विनाशयितुं शक्यः। सदाभवः सनातन इत्येवास्यार्थः स केनापि नापहर्तुं शक्य इति विश्वस्यताम्।

एवमेव संप्रति ब्राह्मणजातिरपि सुधारकाणां चक्षुः-शूलमेवेति तदुन्मूलनायापि प्रयतंते हि सुधारकाः परं ते न जानन्ति यत्-

"उत्तमाङ्गोद्भवाज्ज्यैष्ठयाद् ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ॥
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।
सहि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥
ब्राह्मणो जायमानो हि पृथिव्यामधि जायते ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये" ॥
इत्यादि ।

अत एव विश्वस्यताम् समाश्वस्यतां चापि स एव ब्रह्मण्यो ब्रह्मदेवो भगवान् एवास्या असहायाया अनाश्रयाया ब्राह्मणजाते रक्षको यस्येयमुक्तिर्यथा--
"अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः"

यैर्विद्वद्वर्यैः ॥ "संघे सक्तिः कलौ युगे" इति सिद्धान्तमेवाखिलक्ष्यीकृत्यायं समाजः संस्थापितः सुप्रभातं नाम पत्रं च प्रकाशितम् तेप्यतीव पुण्या धन्याश्चापि।

यतस्तै"विप्राणामनेकत्वम्"इति प्रचलिताक्षेपः परिमार्जित एवेति ।

कालातिपातभयादन्ते पुनः श्रीमतां विद्वद्वर्याणां धन्यवादं करोमि निवेदयामि चापि ।

"एतादृशे कलियुगेऽपि शतेषु कश्चिज्जाताद्गे जगति यः श्रुति मार्ग एव ।
धन्यः स एव खलुपात्रमसौ स्तुतीनां श्लाघ्यं मितापमपि किन्न मरौ सरश्चेत् ॥

श्रीभगवान् विश्वनाथ एव श्रीमतां मनोरथसिद्धिमुत्तरोत्तरवृद्धिं चापि कुर्यादित्यभ्यर्थये, यत् किंचन मया न्यून मधिकं वाऽनुचितमनुपयुक्तं वा निवेदितन्तत् क्षम्यताम् श्रीमद्भिरिति शम् ॥

---

# सुप्रभाताष्टकम् ।

ले० श्रीमान् पं० नारायणपतिः त्रिपाठि-महोदयः

---

सुप्रभातं सुप्रभातः सुप्रभातीह भूतले ।
सुप्रभा-वरलं कुर्यात्सुप्रभातकरो हरिः ॥ १ ॥

गीर्वाणवाणीगुणगौरवज्ञाः
प्रज्ञासमज्ञातनिदानसंज्ञाः ।
सज्ज्ञानविज्ञानविधानविज्ञाः
पश्यन्तु सर्वे भुवि 'सुप्रभातम्' ॥ २ ॥

ये चाङ्गलीयप्रथयाऽभिषिक्ताः
समागतस्वागतकर्मभक्ताः ।
परस्परं पाणिनिपीडनाद्दौ
वदन्ति सर्वेऽत्र 'सुप्रभातम्' ॥ ३ ॥

अध्यापकाश्छात्रगणास्त्रियो वा,
ज्येष्ठाः कनिष्ठा धनिका दरिद्राः ।
मूढा मनोज्ञा निगदन्ति सर्वेऽ-
प्यन्योऽन्यतस्सम्प्रति 'सुप्रभातम्' ॥ ४ ॥

ये नात्र विचारसिका नरा वा
ते वानरा वाक्प्रखरा खरा वा ।
निद्रालवोऽसंस्कृतिजागरूकाः
ते नापि विन्दन्ति ह 'सुप्रभातम्' ॥ ५ ॥

जातं सम्प्रति सुप्रभातमखिले भूमण्डले मण्डनं
आर्यज्योतिरसद्गुणावलिभृता स्नेहार्दिता वापिता ।

नव्यालोकभरोदितोऽस्तु तपनोऽज्ञानान्धदोषान्तको
विद्याधर्मसुकर्मशर्मनिकरे स्युर्जागरूका जनाः ॥६॥
विद्वांसो नरपालकास्सुकृतिनश्श्रेष्ठा वरिष्ठाश्च ये,
ये विद्यारसिका गुणव्यसनिनोऽप्यादर्शशीला नराः ।
सर्वान्तान् विनयोक्तिनम्रशिरसा विज्ञापयामो मुदा,
युष्माकं भुवि 'सुप्रभात' मधुना नेत्रातिथित्वं व्रजेत् ॥७॥
सुप्रभातं सुप्रभातः सुप्रभात-विभायकम् ।
स्वप्रभावप्रभोद्भासि भूष्यतां भाष्यभावुकैः ॥ ८ ॥
सुप्रभाताष्टकमिदं सुप्रभाते विचिन्तयेत् ।
सुप्रभातं भवेन्नित्यं सुप्रभा तस्य जायते ॥ ९ ॥

# पाश्चात्य विद्वांसोऽध्यात्मविद्या च ।

स्वामी ब्रह्मानन्द सन्यासी शास्त्री, वेदान्तशिरोमणिः, पी. एच. डी.



ज्ञातमाबालवृद्धं भारतीयैरितिहासज्ञैर्यद् "युरोपदेशीयैर्या काचिदैहिकोन्नतिः कृता सा भारतीयधनं ग्रन्थांश्च प्राप्यैव ऐहिकोन्नतावपि सुखमलभमानाः, केएट–मोक्ष-मूलर–ड्यूसन–स्पेन्सरप्रभृतयः पाश्चात्यपण्डिता भारतीयाध्यात्मविद्यया ब्रह्मानन्दं प्राप्तुमयतन्त । प्रसंशनीयप्रयत्नं कुर्वाणा अपि ते महर्षिभिरनुभूतं सुखं नास्वादयन कः खलु सुखमिदं प्राप्नोतीत्यस्योत्तरं योगशास्त्रकारः "स तु दीर्घकालादरनैरन्तर्यसत्कारासेवितो दृढभूमिः" इति सूत्रेण विज्ञापयति । तात्त्विकप्रमेयाणि जिज्ञासमानाः स्पेन्सरमहोदया अनेकेषां पाश्चात्यविदुषां मतं खण्डयित्वा सूक्ष्मबुध्या विचार्य भौतिकसीमां जग्मुः । किन्तु तत्र तत्त्वपरिणाममज्ञात्वा "अग्रेऽपि किञ्चिदस्ति, परन्तु तत्किमिति न ज्ञायते" इति निश्चित्य कुण्ठिता अभवन् ।

मोक्षमूलरमहाशया अपि स्वीयधर्ममीमांसाग्रन्थे सर्वधर्मस्याध्यात्मविचारस्य स्वमत्यैवैक्यं कर्तुं प्रवृत्ता अपि तस्याष्टमप्रकरणे शङ्कराचार्याणां रामानुजानाञ्च मतैक्यं प्रदर्श्य पूर्णं ब्रह्म कथं विकृतमित्यस्य कारणं रामानुजैर्न सम्यक् प्रादर्शि, एवमविद्या कुत आगतेत्यस्य समाधानं शङ्कराचार्य्यैर्न कृतमित्युक्त्वा भारतीया मीमांसकाः विशेषतः श्रीमच्छङ्कराचार्य्या निर्भयं वेदान्तशास्त्रीयाननेकपक्षान् साधयन्त्येतदवलोक्य तेषामभिनन्दनमेव कर्तुमुत्सहते मम मनः" इति स्वशक्तिं प्रदर्श्य शान्तिं समधिगच्छन् ।

ड्यूसन डा० महाभागा अपि "अज्ञाननिवृत्तये निदिध्यासनपूर्वकोऽनुभव एव साधनमस्ति । केवलं तर्कस्त्वकिञ्चित्कर एव इति शङ्कराचार्य्या वदन्ति, एतेनाऽऽचार्य्यैः स्वमतस्य तर्कद्वारोपपत्तिः कर्तुमशक्या, इत्युचुः । सोपपत्तिर्जर्मनीस्थ-केन्टमहात्मना संसाधिता अहंभावावधिसर्वसूक्ष्मस्थूलोपाधेर्मूलकारणमविद्यैव' किन्त्वियमविद्या कुतस्समागतेत्ययंप्रश्नोऽवशिष्टः । अत्र सर्वे ग्रीकदेशीयास्तथाऽऽर्य्याश्च विद्वांसो निरुत्तरा भवन्ति, किन्तु श्रीमत्केन्टमहोदयाः "अयं प्रश्नो नैवोद्भवति, कुतः ? कार्यकारण-भावसम्बन्ध एवाऽविद्योत्तरमुत्पन्नः, अतोऽविद्यायाः पारे शोधनं मूर्खतैव इति" स्वाभिप्रायं विशदीकृत्य संतोषमवापुः । अर्थादनर्थनिवृत्तिपुरःसरं ब्रह्मानन्दप्राप्तिरूपं फलं न कश्चित्पाश्चात्यविद्वांल्लेभे कारणं तु स्पष्टमेव । यदिमे विद्वांसः किञ्चित्संस्कृतमधीत्य संस्कृतभाषामन्यभाषावत्केवलं भाषामेव विज्ञाय स्वबुध्यनुसारं सर्वेषु विषयेषु प्राविशन् संस्कृतभाषायां विद्यमानाः सर्वेऽपि विषया गुरुमुखादे- [illegible]

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।

इति मनुमहाराजस्य कथनानुसारं "अग्रजन्मानः" अर्थाद् ब्राह्मणा एव यथा—

कर्म विप्रस्य यजनं दानमध्ययनं तपः (अ०स्मृ०,)
अध्यापनं चाध्ययनं याजनं यजनं तथा(हा०स्मृ०,)
अध्यापनमध्ययनं यजनं याजनं तथा ( मनुः । )

भवन्तु नाम ब्राह्मणा गृहस्थाः सन्यासिनो वा किन्तु तेषामेवाधिकारः । * सन्ति विप्रतिपत्तयोऽत्र यथा केचन कथयन्ति प्राग्ब्राह्मणैः क्षत्रियेभ्योऽध्यात्मविद्या प्राप्ता, किन्तु मतमिदमत्यन्तमसमीचीनमस्ति अस्मिन्विषये विप्रतिपत्तारो बृहदारण्यकोपनिषदा गौतमं प्रति प्रवाहणस्य राज्ञः कृतोपदेशं प्रदर्शयन्ति, एवं छान्दोग्योपनिषदि प्राचीनशालादयः समेत्य मीमांसां चक्रुः को न आत्मा किं ब्रह्मेति प्रमाणमुपन्यस्यन्ति । सत्यमुपदेशस्तु दत्तः, किन्तु बृहदारण्यके य उपदेशो नृपेण कृतः स त्वग्निविद्यायाः छान्दोग्ये राज्ञा कैकेयेन प्राचीनशालादीन् ब्रह्मविद्या जिज्ञासून् प्रति य उपदेशः कृतः सोऽपि वैश्वानरविद्याया एव न तु ब्रह्मविद्यायाः * किन्तु सम्प्रति ब्राह्मणानां मिथ्याभिमानाक्रान्तां ज्ञानाभावदशां दयनीयां स्थितिञ्चावलोक्य हृदयं खिद्यते । यदि विप्रा मनुभगवताज्ञानुसारं स्वकर्मानुष्ठानपुरःसरं पृथिव्यां सर्वमानवानां योग्यतां निरीक्ष्य ।

सर्वेषां ब्राह्मणो विद्याद् वृत्त्युपायान्यथाविधि ।
प्रब्रूयादितरेभ्यश्च स्वयंचैव तथा भवेत् ।

इति शिक्षादानं कुर्युस्तर्हि के खलु भुवि मानवा आर्यावर्तीय शिक्षयाऽऽस्मानं समलङ्कृत्य ऋणभाजो न भविष्यन्ति ?

सम्प्रति ये वनारसादिप्रान्तमण्डलाधिकारिणः (Commissioner) श्रीयुत ए.जी.शिरेफ महोदयाः संस्कृतभाषाभिज्ञाः सन्त्यत एव तेषां भवनादस्माकं प्रस्थानकाले "अभिवादये भवन्तमि" ति गीर्वाणवाण्यामुक्त्वाऽस्मभ्यं नमस्कारस्तैः प्रदत्तः । अतो यद्युक्तरीत्या ब्राह्मणाः सर्वेभ्यः शिक्षां दास्यन्ति तर्हि संस्कृतभाषाया बहवः सेवका भविष्यन्ति । सर्वत्र भूमण्डले च संस्कृतभाषाया अपि साम्राज्यं स्थापयिष्यन्ति !

---

# मन्दारमालाञ्जलिः ।

पं० गुणराजशर्मा नेपाली ।

भवभीषणवारिधि-भ्रम—
भ्रमणोद्भीतमना मनागयम् ॥
करुणाकर ! कोमलै र्दृशां—
प्रणिपातैरनुगृह्यतां जनः ॥ १ ॥

श्रुतयोऽपि सदा सदातनं
मृगयन्ते पुरुषं यमादरात् ॥
स्तुतिगोचरतामुपैतु मे
स कथं नाम गिरामगोचरः ! ॥ २ ॥

गुरुमोहमुपागतं हरे !
निजकर्मण्यभिजातसंशयम् ॥
अयि ! नाथ ! नियन्तृतां वहन्
सहसा ( ऽ ) पार्थमुपेक्षसे कुतः ॥ ३ ॥

जलधिः शयनेन पावितो
जलजं धारयसि स्वयं विभो ! ॥
जलजान्तरवासिनीपते !
† जलधीरप्यनुकम्प्य एष ते ॥ ४ ॥

---

* यदि कस्यचिदत्र विवादः स्यात्तर्हि सुप्रभाते प्रकाशयितव्योऽहं स्पष्टीकरिष्यामि न केनचित्क्षत्रियेण अन्येन वा ब्रह्मविद्याया उपदेशः कृतः ।

† रलयोर्डलयोः सावर्ण्यात् जलधीरिति—सम्पादकः ।

मुनिवृन्दमिलिन्दसेवितं
तव गोविन्द ! पदाम्बुजं श्रये ॥
त्रिजगत्परिरक्षणक्षमा
मकरन्दः किल यस्य जाह्नवी ॥ ५ ॥
शरदुज्ज्वलचन्द्र-चन्द्रिका—
मदसर्वङ्कषमञ्जिमद्युति ॥
कमनीयतरं कदा भवद्—
वदनं मे हृदये स्फुरिष्यति ॥ ६ ॥
पततामवलम्बन ! प्रभो !
पतितं मां भवभीमसागरे ॥
अचलोद्धृतिविश्रुत ! श्रितं
कथमब्जाक्ष ! चिरादुपेक्षसे ॥ ७ ॥
अयि ! वारित-वारणव्यथ !
व्रजभू-पावन ! हे दयानिधे ! ॥
अविलम्बमलं विधेहि मे
सफलं जन्म दयावलोकितैः ॥ ८ ॥
स्मितचन्द्रिकया समुल्लसत्
सतताऽऽह्लादितपद्ममादरात् ॥
भगवन् वद ! साम्प्रतं भवद्--
वदनं केनसहोपमीयताम् ॥ ९ ॥

व्रजवारिजहारिलोचना—
हृदयाकर्षणदक्षिणः क्षणम् ॥
स्वनतां मुरलीस्वनः पुन—
मुरलीमोहन ! मोहयन् जगद् ॥१०॥
फणिमस्तकरङ्गनर्त्तनै—
रुत, गोपीवसनाऽवकर्षणैः ॥
वद रास–विलासवारिधे !
ववृधे प्रीतिरनुत्तमा तव ! ॥११॥
यमुनापुलिने निलीन ! हे !
सहसैव प्रकटीभवन् भवान् ॥
जयति, प्रमदादपावृत—
प्रमदाभिः सकचग्रहं धृतः ॥१२॥
गगने च घने घनाघनै—
रथ दम्भोलिधरं विडम्बयन् ॥
सहसा करुणानिधे ! करो—
द्धृतगोवर्धन ! वर्धसे चिरम् ॥१३॥
अतिभीषणकालियह्रदे
कृतझम्पः किल कम्पनोऽसताम् ॥
स भवान् मम गाहतां पुन—
र्विषयाशीविषभीषणे हृदि ॥ १४ ॥

( क्रमशः )

प्रिय पाठकाः !

भीषण ग्रीष्मावकाशविभीषिकया सुप्रभात कार्यालयो ज्येष्ठमासे निरुद्धः स्यादिति ज्येष्ठाषाढयोरङ्कौ सहैव प्रकाशमेष्यतः । क्षन्तव्या वयं श्रीमद्भिरिति । ( सम्पादकौ )

# स्वर्गीय-धर्मप्राण-लक्ष्मणशास्त्रिद्रविड-महोदयाः ।

ज्येष्ठमासस्यकृष्णचतुर्थ्यांतिथौ मङ्गलवासरे प्रातःस्मरणीय-धर्मप्राण-महामहोपाध्याय—स्वर्गी
लक्ष्मण शास्त्रिद्रविडमहोदयानां त्रि-वार्षिक-श्राद्धतिथिरासीत् । एतस्मिन्नवसरे वयमपि तेभ्यः सनात
धर्म्म-संरक्षकेभ्यः कर्म्मवीरेभ्यः
स्वर्गीयशास्त्रिमहोदयेभ्यः सा
श्रद्धाञ्जलिं समर्पयामः ।

संस्कृत—विदुषामादर्शभू
तैभिः स्वजीवनस्यान्तिमे सम
भृतकाध्यापनादिकं परित्य
सनातनधर्म्मसेवायै स्वीय प्र
णाहुतिर्दत्ता । एतेषां जी
नितान्तसरलम्, शान्तं स्वान्त
कार्यप्रणाली च प्रभावपूर्णाऽसी
ये हि नाम संस्कृत-विद्वांसः
च्छन्ति यदस्माकं वर्त्तमान स
किं कर्त्तव्यम्—तैः शास्त्रिचरणा
मनुकरणं विधेयम् ।

कैलाशवासमनुभवत्सु
पुनस्तत्प्रचारितकार्य्याणामुन्न
र्नाभवदिति परं विषादमनु
वामः । तेषां कार्येषु ता
व्यक्तीनां प्रवेशः समजनि, ये के
स्वार्थान्धाः प्रतिष्ठालोलुपा
सन् । अत एव तत्कार्यमिद
नष्टं भ्रष्टमिव वर्तते । उक्तमेव
बहवो यत्र नेतारः
सर्वे पण्डितमानि
सर्वे महत्त्वमिच्छन्ति
तद्वृन्दमवसीदति

इति वयं तान् सर्वान् प्रार्थयामो यत्ते प्रातःस्मरणीयशास्त्रिचरणानां कार्याणि पुनः स्वार्थपरित्य
पुरस्सरं सञ्चालयन्तस्तेषां स्मृतिरक्षां विदधतु ।

एतच्छ्रुत्वाऽपि भृशं दूयामहे यत्तैःसञ्चालितं 'ब्राह्मण-महासम्मेलन' नामकं संस्कृत पत्रमपि वि
गतमिति ।

सुरभारती-सेवायै धर्मवेद्यां बलिदानभूतस्य तस्य महोदयस्य शाश्वतिकीं शान्तिं कामयते संस्
साहित्य-समाज इति । —(सम्पादकः)

श्रीमन्महामान्य-महामहोपदेशक-महामहाध्यापक-साङ्ख्यरत्न-विद्यानिधि-विद्यासागर-विद्यारत्ना-करादि--विविधोपाधि-विभूषितानाम्, अजमेरस्थ-मेयोकालेज-भूतपूर्व-धर्म्म शिक्षकाणाम्-राजपूतानान्तर्गत-कृष्णगढ़राज्य-राजपण्डितानाम् महोपाध्याय-पञ्चाम्बुभूषण-पण्डितराज-श्रीवलाकीराम शास्त्रिमहोदयानाम्

# शुभाभिनन्दनम्

अद्यत्वे सर्वतोऽपि समाप्लुतायामस्यां भारतावनौ श्रीमत्सदृशैरेव विद्वद्भिर्भारतीयं गौरवं सर्वथा समेधमानमालोक्यते । श्रीमतां वैदुष्य-विभूषितेयं गीर्वाणवाणी सम्प्रति कराले ऽपि कलिकाले सर्वतोऽपि स्वात्मानं धन्यं मन्यते । सनातनधर्म्मस्य च सर्वोन्नतं महिमानं सर्वदा संरक्षितुं बद्धपरिकराणां श्रीमतामदम्योत्साहं विलोक्य काशीस्था अपि विद्वांसश्चकित-चकिताः, मुदित-मुदिताः सन्तस्तत्र भवतां शुभाभिनन्दनं विधातुं सर्वतः सन्नद्धाः सन्तिष्ठन्ते ।

सुरगवी-गगन-चङ्क्रमण-चन्द्रमसां श्रीमतां सारस्वतवैभवम्, वाग्वैदग्ध्यम्, गुणगौरवम्, भाषणपाटवम्, सरस-सरसं मधुर-मधुरं वचनामृतञ्च समाचामतां श्रोतृचकोराणां पुरतः प्रस्फुटमेव प्रकाशते ।

किम्बहुना, श्रीमत्सदृशानामेव विदुषां सद्भावतः सम्प्रति भारत-भूरियमात्मानं बहुमन्यमाना सर्वस्मिन्नपि विषये स्वात्मानं सुविभूषितं मन्यते ।

इत्येवं सर्वतोऽपि प्रसिद्ध-पाण्डित्यानां सनातनधर्म-संरक्षण-बद्धपरिकराणां स्वजातीय-कुरीतिसुधार-सन्नद्धानां श्रीमतां शुभं स्वागतं विदधदयं काशीस्थः सुरसरस्वती-सेवन-बद्ध-परिकरो विश्वविख्यातो विद्वत् प्रतिनिधिस्वरूपः संस्कृत-साहित्य-समाजः ।

'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति' इति श्रीमद्भगवदनुशासनं स्मारं स्मारं श्रीमत्करकमले इदं शुभाभिनन्दन-पत्रं समर्पयति, आशास्ते च यच्छ्रीमन्तोऽपि उपर्य्युक्तपद्यस्योत्तरार्द्धं संस्मरन्तोऽवश्यमिदं 'प्रदीप्त-किरणाय सहस्रभानवे' दीपप्रदानवदकिञ्चित्करमपि स्वीकृत्येमं समाजमनुग्रहीष्यन्तीति । श्रीमद्विषये साधु समुदीरितं केनापि—

"विद्यानिधानोऽपि गताभिमानः, महानुभावोऽपि विनीतभावः ।
गुणाभिरामोऽपि मनोऽभिरामो वलाकिरामो ऽप्यबलाकिरामः ॥"

सुप्रभात-कार्यालयः, काशी ।
वैशाखस्य, कृष्ण-पञ्चमी, १९९२

श्रीमतां वशंवदः—
संस्कृत-साहित्य-समाज-सङ्घः ।

पण्डितराज श्री १०८ स्नेहिरामशास्त्रिणां स्मारिकायाः—

[ संसार में सबसे सस्ती ]

# श्रीराजस्थान—संस्कृत—कालेज—ग्रन्थमालायाः—

त्वर्यताम् ! अभिनवा प्रतिपत्तिः !! अक्षुण्णोऽयं परैः पन्थाः ससमर्थतायाः !!!

राजसंस्करणम् ! विलोक्यताम् !! जीर्णोद्धारः शेखर-भूषणयोः !!!

१. वैयाकरणभूषणसारः—दर्पणेन, काशिकया, श्रीगुरुप्रसादशास्त्रिकृतया विषमस्थलटिप्पण्या च विराजितः। २)

२. रघुवंशकाव्यम् [ २-५ सर्गाः ] श्रीगुरुप्रसादशास्त्रिकृतयाऽतिमहत्या परीक्षोपयोगिन्या सरलया'ऽभिनवराजलक्ष्म्या'ऽलङ्कृतं, भाषाटीकोपेतञ्च, ... ... ॥=)

३. अभिज्ञानशाकुन्तलम्—परीक्षोपयोगिन्या परमसरलया श्रीगुरुप्रसादशास्त्रिकृतया, अभिनव राजलक्ष्मी' टीकया विराजितम्, १)

४. मूलरामायणम् [ टीकाद्वयोपेतम् ] नागेशभट्टकृतया टीकया, 'अभिनवराजलक्ष्म्या' 'भाषाटीकया' च विलसितम्, =)॥

५. पञ्चतन्त्रस्य—अपरीक्षितकारकम्, श्रीगुरुप्रसादशास्त्रिकृतया 'अभिनवराजलक्ष्मी' टीकया विराजितम्, =)॥

६. लघुकौमुदी—श्रीगुरुप्रसादशास्त्रिकृतया 'अभिनवराजलक्ष्म्या' युता अतीव चमत्कारिणी—मुद्र्यते।

७. सिद्धान्तकौमुदी—[ स्त्रीप्रत्ययान्ता ] 'अभिनवराजलक्ष्मी'युता— मुद्र्यते।

---

१. लघुशब्देन्दुशेखरस्य—[ टीकाषट्कोपेतस्य— ] अव्ययीभावान्तो भागः। नागेशभट्टशिष्यवैद्यनाथविरचितयाऽतिप्रामाणिकया—भैरवमिश्रकृतटीकातोऽपि चतुर्गुणितया मूलपङ्क्तिलापनकप्रवणया १ चिदस्थिमालया, २ काशिकपरिष्कारसर्वस्वायमानया दण्डिभट्टकृत-'चान्द्रिक' या, ३ प्राचीनया 'ज्योत्स्ना'ख्यया विवेचनया, ४. सदाशिवभट्टीयेन तिलकेन, ५. 'विषमी'नाम्ना प्रसिद्धया विवेचनया, ६. श्रीगुरुप्रसादशास्त्रिकृतया चमत्कारकारिण्या वरवर्णिन्या' च टिप्पण्या-समलङ्कृतः--सुन्दरमसृणतरपत्रेषु मुद्र्यते, द्रागेव त्रिचतुरैर्मासैः लोचनगोचरतामेष्यति।

सर्वविधपुस्तकप्राप्तिसङ्केतः—

मैनेजर—

**भार्गव पुस्तकालय, गायघाट, बनारस सिटी।**

प्रकाशकः—श्रीगौरीनाथ पाठकः, सुप्रभात-कार्यालयः, बनारस सिटी।
मुद्रकः—श्रीबालकृष्ण शास्त्री, ज्योतिषप्रकाश प्रेस, विश्वेश्वरगंज, काशी।

The Suprabhatam Registered. NO.A. 1348.



वार्षिकमूल्यम् —२) छात्रेभ्यः—१)

संस्कृत-साहित्य-समाजस्य मासिक-मुखपत्रम्




तिमिरततिमुदस्यद् भेदतारा विलुम्पन्, नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विबुधविहगवादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः "सुप्रभातम्" ॥

एकादशेऽब्दे } ज्येष्ठाषाढ-श्रावण-पूर्णिमाः, १९९२ { ३-४-५ संख्याः

सम्पादकौ :—

श्रीकेदारनाथशर्मा (सारस्वतः)
श्रीविन्ध्येश्वरी प्रसाद शास्त्री च

निरीक्षक :—

श्रीगोपालशास्त्री, दर्शनकेशरी, साहित्याचार्य्यः
न्याय-काव्यतीर्थः

प्राप्तिस्थानम्:—

व्यवस्थापकः—सुप्रभात-कार्यालय, काशी ।



लेख-सूची ।






सुप्रभातस्य प्रधान-संरक्षकाः



अयोध्यास्थ-रानूपाली-स्थानाधीश्वराः श्रौतमुनयो महामान्याः पण्डितप्रवराः
हिजहोलिनेस श्री १०८ बाबा केशवरामोदासीन-महोदयाः ।




एकादशेऽब्दे } ज्येष्ठाषाढ-श्रावण पूर्णिमाः, १९९२ { ३-४-५ संख्याः

# मङ्गलम्

आनन्दकाननमधिश्रितमद्वितीय-
स्वीय-प्रभापटल-पूर्ण-दिगन्तकोषम् ।
निर्दोषमाश्रयत मानसरोषमोषं
सत् 'सुप्रभात' मिह 'भारत'-'माशुतोषम्'
भूयो भूयो भावि 'रामावतारम्'
काले काले लब्ध-'देवीप्रसादम्' ।
स्थाने स्थाने 'श्रीगिरीशा'र्चितं नो-
ऽपायात् पायात् 'भारतं' 'सुप्रभातम्'

श्रीविन्ध्येश्वरीप्रसादशास्त्री

—❀❀❀❀❀—

# सम्पादकीयम्

## आदर्श-धर्म्माचार्यः ।

भारतं हि नाम धर्मप्राणो देशः । अतएव भारते धर्माचार्य्याणां सर्वप्रधानं स्थानं विद्यते । वस्तुतस्तु 'स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते' इति धर्म्माचार्य्या एव धर्म-समाज-राष्ट्र-मर्यादा-संरक्षकाः सन्ति । परमिदानीं धर्म्माचार्येषु महत् वैक्लव्यमालोक्यते । शिक्षितानां बहूनामियं भावना विद्यते यदिदानीमादर्शत्वेन गणनीया धर्माचार्या न दृश्यन्ते । परं धर्मप्राणे भारते धर्म्ममर्यादा शाश्वतिकी विद्यते । तदाचार्याश्चादर्शभूताः सन्ति, स्थास्यन्ति चेत्यस्माकं सुदृढो विश्वासः ।

दक्षिण भारतस्य तु नास्त्यस्माकं विशिष्टः परिचयः, परमुत्तरभारते पञ्चषा धर्म्माचार्य्याः, वस्तुत आदर्शभूताः श्रद्धेयाश्च सन्ति । प्रायो धर्म्माचार्य्याणां जीवनमद्यत्वे निर्मर्यादमश्रद्धेयञ्च भवति । नैतेन सर्वेऽपि धर्म्माचार्या निन्दनीयाः सन्ति । सन्त्यद्यापि केचनैतादृशा येषां पवित्रतममुदार हृदयं विज्ञाय परमनास्तिका निन्दकाः अपि, मत्सरिण अपि विनम्राः, सलज्जाश्च भवन्ति । एतेष्वेवास्माभिः साकेत-मण्डलस्था 'रानोपाली'-स्थानाधीश्वराः परमादरणीयाः पण्डित-प्रवराः श्री केशवरामोदासीनमहोदया अपि प्रथमश्रेण्यामेव स्थानं लभन्ते ।

'रानोपाली'-विषये स्वातन्त्र्येण सङ्क्षेपेण च परिचयोऽस्माभिः प्रकाशित एव, परमिदानीमेतदेव वक्तव्यं यदिमे धनिकेषु धर्म्माचार्येषु धनेन, यशसा च सदयहृदयतया च किमपि वैशिष्ट्यमेव प्रकटयन्ति । मया कियत् कालं यावदेतेषां सहवास-सौभाग्यं लब्धमासीत् । समलोकितं मया यदिमे सर्वदा प्रसन्नवदनाः कार्यं कुर्वन्त एव समालोक्यन्ते । भोजन-शयनादिनित्यावश्यककार्येष्वपि विगतस्पृहाः लोकोपकारायैव जीवनं ददति । आलस्यस्य, प्रमादस्य सुखस्पृहायास्तु नामापि नास्ति । सर्वदैव समागतानां दीनानां भक्तानां कार्यार्थिनां कृते स्वीयं कार्यं विहाय सर्वविध साहाय्यदानार्थं सहर्षं सस्नेहञ्च सन्नद्धाः सन्ति दृष्टन्ते । लक्षाधिकवार्षिकव्यया अपि निरभिमानिनः साधारणं सात्त्विकं जीवनमेवातिवाहयन्ति । सत्स्वपि विकारहेतुषु निर्विकृतिरेव परं महत्वं महताम् । मया बहुशोऽनुभूतं यदिमे भयानकाऽपराधिनामपि कृते न कदाचिद्रोषकषायिता भवन्ति । दानेऽपि मुक्तहस्ता न कमप्यर्थिनं परावर्त्तयन्ति । सर्वतोऽधिकं प्रसन्नताकारणन्त्वेतदेव विद्यते यदिमे स्वयं मार्मिका विद्वांसः, विद्वत्प्रियाश्च ! मिलितेषु विद्वत्सु सर्वं विहाय तैः सहालापे नितरां निमग्नाः प्रसन्नाश्च भवन्ति । शतशो मनुष्या विपन्मग्ना

समुद्धृताः श्रीमतां स्वामिपादानामनन्यसेवकाः सन्ति । सहस्रशः शिष्याः, राजानः, महाराजाः, राजमहिष्यः, धनिकाः, शिक्षिताः, शासकाश्च सन्ति, परं स्वयं निर्मदाः, निरभिमानिनः, दीनप्रिया एव सन्तिष्ठन्त इति दुष्करमेव साम्प्रतसमये श्रीमतां धर्म्माचार्य्याणामीदृशमाचरणम् ।

एतेषां संस्कृत-प्रेम-विषये किमु वदामः । रानोपालीनाम्नि स्वस्थाने श्रीमद्भिर्नारायणमहाविद्यालयः संस्थापितो विद्यते । यत्र चत्वार अध्यापकाः, चत्वारिंशदधिकाश्च छात्रा भोजनाच्छादनादिना सत्कृताः संस्थापिताः सन्तिष्ठन्ते । तत्रैव नारायण-पुस्तकालयोऽपि विद्यते । अस्मिन् पुस्तकालये संस्कृतवाङ्मयस्य विविधविषयक-पुस्तकानां महान् संग्रहो विद्यते विशेषतश्च वेद-वेदाङ्ग-पुराणादीनाम् । शतशः साधवो महात्मानः श्रीमतां रानोपाली-दुर्गे तिष्ठन्ति । शताधिकानां महात्मनां प्रत्यहं भोजनं भवति । रानोपाली हि नाम दुर्गमेकं सुदृढं सुन्दरञ्च प्रतीयते । एतेषां प्राचीनतम-हस्तलिखितपुस्तकानां सङ्ग्रहोऽपि दर्शनीय एव ।

श्रीमन्त स्वामिपादाः बाह्याडम्बरशून्याः, वनस्पति-वृक्षादीनामौषधीनाञ्च परमप्रियाः सन्ति । एभिः स्वीये तपोद्याने विविधौषधीनां दिव्यतमः सङ्ग्रहो विहितः । सत्स्वपि बहुषु कार्येषु स्वामिचरणाः प्रातःसायमस्यां वाटिकायां प्रत्यहं सन्ध्यावन्दनं धर्मकृत्यञ्च नियमेन सम्पादयन्ति । कियन्तो दुःखिताः पीडिताश्च प्रत्यहं भोजनौषध-वस्त्रादिना सम्भाविता भवन्ति ।

रानोपाली-स्थानं प्रथमत एव राजदुर्गमिवासीत्, परमेभिस्तस्य व्यवस्थापने परिष्कारे च प्रशंसनीयः समुद्योगः क्रियते । पञ्चसहस्रमितो व्ययः केवलं महात्मनां ब्राह्मणानां दीनानाञ्च कृते भवति । समागतानामतिथीनां तु सर्वदा हृदयमुद्घाट्य स्वागतं विधीयते स्वामिपादैः ।

एभिरिदानीं योग्यतमे स्वोत्तराधिकारे श्रीमन्तः पण्डितदयारामशर्म्ममहोदया नियुक्ताः सन्ति । एतेषां जन्मपत्रनिर्माणे, भाविफलज्ञाने च सहस्रशो मुद्रा व्ययीकृताः । तत्र च भारतप्रसिद्ध-दैवज्ञानां लिखिताः सम्मतयश्च सङ्गृहीताः । सर्वेषां महतां विदुषामनुज्ञा च गृहीताः । न मया कश्चिदपि धर्म्माचार्य ईदृशः समवलोकितः । अयोग्यतमोत्तराधिकारिणां हस्ते पतिता न जाने कियतां धर्माचार्याणां सम्पत्तयो विनष्टाः । परमेभिरत्र विषये कियद्भ्यो वर्षेभ्यः प्रचुरतरैणार्थव्ययेन भाविशिष्यनिर्माणे नितरामन्वेषणं विधीयते । एतेषां शिष्याश्च श्रीमन्तो दयारामशर्म्माणः सप्तदशवर्षीया अपि प्रबलप्रतिभावन्तः कार्यकुशलाश्च सन्ति । एभिः सर्वमपि रानोपाली-राज्यकार्यं सञ्चाल्यते । वयमेतेषां कल्याणं दीर्घायुष्ट्वञ्च कामयन्तः सर्वानपि धर्माचार्यान् प्रार्थयामो यत्तेऽप्यादर्शं धर्म्माचार्य्यानेतानादर्शीकृत्य धर्म-मर्यादा-संरक्षणं विदधत्विति । एतेषां विषये पुनरपि विस्तृतं चरित्रं प्रकाशयिष्यामः ।

× × × ×

## रानूपाली—

अस्ति साकेतमण्डले अयोध्यानगर्य्या नातिदूरे पुण्यतमं प्रशान्त-पावनं प्राकृतिक-सौन्दर्य-रमणीयमैतिहासिकं-महत्वपूर्णं ‘ रानोपाली ’ वा ‘ रानूपाली ’-ति प्रसिद्धं तीर्थस्थानम् ।

प्राचीनतमैतिहासिक-गवेषणायां खलु श्रूयतेः—

“अस्यामस्यां धरायां रघुकुलतिलकैः पूज्यपादारविन्दः

पूर्वं श्रीमान् वशिष्ठो मुनिकुलतिलकः पालितातो महिष्या। तद्वंशयावासभूमिः समलभत शिवं राज्ञिपालीति नाम सत्या कौशल्यया श्रीदशरथनृपतेः कोसलेन्द्रस्य धाम ॥
"रामं लोकाभिरामं दशरथतनयं रावणारिं खरारिं नुत्वा नुत्वा सुहुत्वा जनिजनिजनितं दुष्कृतं योगवह्नौ । पायं पायं गुरूणाममृतमयवचः श्रोत्ररन्ध्रैरदभ्रं लीना सच्चित्स्वरूपे रघुकुलजनता यत्र सा रानुपाली "॥

इत्यादयः कतिपये श्लोकाः साम्प्रतमपि तत्र प्रस्तरखण्डे समुत्कीर्णाः समालोक्यन्ते । एतेन प्रतीयते यदिदं प्राचीनतमं तीर्थस्थानं वरीवर्तत इति ।

तदनन्तरं विक्रमसम्वत्सरस्य प्रथमे शतके तत्र महाराज-पुष्यमित्रवंशोद्भावानां सम्बन्ध आसीदित्यपि श्रूयते ।

इतश्च द्विशतवर्षात् प्राक् भयानकेऽस्मिन्नरण्यमये तीर्थस्थाने लब्धसिद्धयो महात्मानस्तत्र तपश्चेरुः । तेषां पार्श्वे सर्वदा सिंह-युगलं सेवायां तिष्ठतिस्म । तेषामलौकिक-तपःप्रभाव-प्रभावितैर्यवनशासकैरपि नतमस्तकैर्भूयतेस्म । ततः प्रभृत्येव साकेतप्रान्ते तीर्थस्यास्य महती प्रसिद्धिः समभूत् । ते च महात्मानो गुरुसन्तबख्श-महोदयास्तत्रैव समाधिमजिग्रहन् । तदनन्तरं तेषां शिष्याः प्रातःस्मरणीया महात्मानः श्रीमाधवराममहोदयास्तत्स्थानं समलङ्कृत्य किञ्चिदिव परिचक्रुः । तदनन्तरञ्च तेषां शिष्यवर्य्यैः पूज्यपादैः श्रीनारायणराममहोदयैरस्य स्थानस्य भूयानुद्धारः सम्पादितः । तत्र गुरुसागरनाम्ना प्रसिद्धस्य परमरमणीयस्य तडागस्य, समन्दिरमन्दिरस्य च भूयान् परिष्कारो विहितः ।

साम्प्रतमस्माकं श्रद्धेयाः श्रौतमुनयः पण्डितप्रवराः श्री १०८ श्रीकेशवराममहोदयाः पुण्यमिदं स्थानमलमलङ्कुर्वन्निति प्रागेव निवेदितम् । एभिर्यत् यत् सम्पादितम्, एतेषाञ्च यद् वैशिष्ट्यं तदपि सुप्रभात-पाठकानां न तिरोहितम् । अस्य खलु महतस्तीर्थस्थानस्य विस्तृतं सचित्रञ्च विवरणं पुनः प्रकाशयिष्यामः ।

× × × ×

## संस्कृत-साहित्य-समाजस्य विशिष्टमधिवेशनम् ।

श्रावणशुक्ल—नागपञ्चम्यां रविवासरे सायमष्टवादन-समये समाजस्य विशिष्टमधिवेशनं सुसज्जिते सुमनोहरे च चरकानुसन्धान-भवनस्थे सुप्रभात-कार्यालये महता समारम्भेण सम्पन्नम् ।

अत्राधिवेशने श्रीमतां महामान्यानां (हिज़होलिनेस) अयोध्यास्थ-रानोपाली-स्थानाधीश्वराणां संयमिप्रवराणां पण्डितवरा श्री १०८ केशवरामोदासीनमहोदयानां शुभगमनं तेषां गुणाभिनन्दनञ्च समभूत् ।

एतस्मिन्नवसरे काशीस्थाः शताधिकाः प्रसिद्धविद्वांसः, प्रतिष्ठिताश्च नागरिकाः समुपस्थिता आसन् । तत्र केषाञ्चन नामानि यथाः—

सर्वतन्त्रस्वतन्त्राः विद्यावयोवृद्धाः श्रीकाशीनाथपण्डिताः, हिन्दूविश्वविद्यालयीय—धर्मविज्ञानविभागाध्यक्षाः श्रीविद्याधरशर्म्माणो वेदाचार्याः, तत्रैव ज्योतिर्धर्मशास्त्रविभागाध्यक्षाः श्रीरामयत्नओझाः, ज्यौतिषाचार्य्याः, न्यायशास्त्र-प्रधानाध्यापकाः श्रीश्रीशङ्करतर्करत्न-महोदयाः, साहित्याचार्याः पं० महादेवशास्त्रिपाण्डेयाः, विद्यावारिधयः श्रीसत्यनारायणशास्त्रिणो भिषक्शिरोमणयः, राजकीयसंस्कृतमहाविद्यालय-प्रधानव्याकरणाध्यापकाः श्रीहरिनारायणत्रिपाठि महोदयाः, तत्रैव दर्शनशास्त्राध्यापकाः श्रीबालबोधमिश्राः,

न्याय-व्याकरणाचार्याः श्रीसूर्य्यनारायणशुक्लाः, मारवाड़ी—संस्कृत—विद्यालयाध्यक्षाः श्रीमदनमोहन-शास्त्रिणः, गोयनकामहाविद्यालयाध्यापकाः श्रीहरिनाथशास्त्रिणो दर्शनाचार्याः, श्री पं० रघुनाथशर्म्मज्योतिर्विदः, न्यायाचार्याः श्रीराधाकान्तझाशास्त्रिणः, न्यायाचार्याः श्रीवामाचरण तर्कतीर्थाः, न्यायाचार्याः श्रीशिवदत्तमिश्राः, बिरलाविद्यालयप्रधानाध्यापकाः श्रीसभापतिशास्त्रिणः व्याकरणाचार्याः, रणवीरसंस्कृत-पाठशालाप्रधानाध्यापकाः श्रीवीरमणि उपाध्यायाः, साहित्याचार्याः, एम० ए०, श्री अम्बिकादत्तोपाध्यायाः साङ्ख्याचार्याः, एम० ए०, श्रीकाशीपतित्रिपाठिमहोदयाः, श्रीदेवीनारायण एडवोकेट विद्यासागर-महोदयाः, श्रीकाशीरामशर्म्म—एम०—ए० महोदयाः, अन्ये च विद्वांसः संस्कृत—साहित्य—समाजस्य सदस्याश्च समुपस्थिता आसन् ।

काशीस्थाः सन्यासिनः, उदासिनः, मोहान्ताः, छात्राश्च समुपस्थिता आसन् । समागतेषु मोहान्त-महोदयेषु बालकैर्बालिकाभिश्च कृते मङ्गलगाने स्वागतगाने च श्रीकेदारनाथशर्मणा परिचय-प्रदान-पुरस्सरं संस्कृत साहित्य—समाजतः चरकानुसन्धान-भवनतश्च श्रीमतां स्वामिचरणानां स्वागतमकारि ।

तदनन्तरं समाजमन्त्रिणा श्रीगोपालशास्त्रिणा दर्शनकेशरिणा श्रीमतां शुभाभिनन्दनपत्रं * पठितम्, युक्तप्रान्तीय—संस्कृत—पाठशाला—निरीक्षकैः श्री काशीराम शर्म्म—एम० ए०—महोदयैस्तदभिनन्दनपत्रं श्रीस्वामिचरणेभ्यः समुपायनीकृतम् । तदनन्तरं श्रीमतां स्वामिचरणानां प्रत्यभिनन्दनं गुरुमण्डलाश्रमाध्यक्षैर्मोहान्तवर—रामस्वरूपशास्त्रिभिः पठितम् ।

ततश्च स्वामिमहोदयैः सर्वेषां समागत—विदुषां दक्षिणा—ताम्बूलादिना स्वागतमकारि ।

तदनन्तरं श्रीमत्पं० प्यारेलालव्यासमहोदयैर्विदुत्तापूर्णा रामायणी कथा कृता । श्रीपं० मङ्गलीप्रसाद महोदयैश्च हास्य—रोदनयोरद्भुतोऽभिनयः कृतः । अन्तेच श्रीमद्भिः स्वामिपादैर्मुद्राणां शतमेककालिकं पञ्चविंशति वार्षिकं सहाय्यञ्च समुद्घोषितम् । पट्टवस्त्राणि च समर्पितानि ।

श्रीमद्भिः स्वामिचरणैरेतदपि प्रतिज्ञातं यदहं स्वशिष्येभ्यः द्वादशशतमुद्रामितं नियमितं वार्षिकं साहाय्यं सुप्रभाताय दापयिष्यामीति ।

अन्ते च समाजोपसभापतिभिः श्रीमदनमोहन शास्त्रिभिर्धन्यवादाः प्रदत्ताः सभाविसर्जनञ्चाभूत् ।

श्रीमद्भिर्मोहान्त-महोदयैः सुप्रभातस्य प्रधान-संरक्षकत्वमुररीकृत्य स्वीयं विशालं चित्रफलकमपि कार्यालयाय प्रदत्तम् । मन्यामहे, चिरसन्तप्तस्य सुप्रभातस्य दारिद्र्योपशमायैव श्रीमतां स्वामिपादानां शुभागमनमभूत् । वयञ्च कृतज्ञतापूर्णहृदयेन श्रीमतां शाश्वतिकं सुप्रभातं श्रीकाशीविश्वेश्वरादहर्निशं कामयामः ।

× × ×

## स्वर्गीय-स्वामिदयानन्द-महोदयः ।

व्यतीतेषु मासेषु भारतधर्म्ममहामण्डलस्य प्राणभूताः, भारतप्रसिद्धाः सनातनधर्मवक्तारः, संस्कृत-साहित्यस्य मार्मिकाः विद्वत्प्रवराः श्रद्धेयाः श्रीस्वामीदयानन्दमहोदया अकाल एव कैलाशवासमन्वभवन्निति समाकर्ण्य केषां वा सुप्रभातपाठकानां हृदयं न विदीर्णं भवेत् । साम्प्रतं नास्ति कोऽप्येतादृशो विद्वान् व्याख्याता । स्वामिमहोदयेषु सत्स्वपि बहुषु गुणेषु महानेको गुण अयमासीत् यत् ते स्व—व्याख्यानेषु [illegible] न

* अभिनन्दनं प्रत्यभिनन्दनञ्च सुप्रभातस्य ८४-८५ पृष्ठयोः प्रकाशितम् । तत्रैव द्रष्टव्यम् ।

कस्यापि मतस्योपर्यनुचितमाक्षेपं कुर्वन्तिस्म। अपरं यथा भाषणे प्रवीणा आसन्, तथैव लेखनेऽपि। एभिः सनातनधर्मविषये 'धर्म्मकल्पद्रुम' नामको महान् ग्रन्थो निर्मितः। अन्ये च बहवो ग्रन्थाः लिखिताः। भारतधर्ममहामण्डलस्य गौरवं त एवासन्। सुप्रभातस्यापि ते संरक्षका एवासन्। सुप्रभातस्य प्रारम्भसमये स्वामिभिः श्रीमहन्तलक्ष्मणदासद्वारा १००) मुद्राः प्रदापिता अभूवन्। तत आरभ्यैव सुप्रभातस्य जन्म समभूदिति एतेषां कैलाशवासेन भृशं चिक्लिश्यमानः संस्कृत—साहित्य-समाजः शोकं समवेदनाञ्च प्रकटयति।

× × ×

## स्वर्गीयो मङ्गलीप्रसाद अवस्थी

अस्माकमभिन्नमित्रम्; संस्कृत-साहित्य-समाज-सदस्यानां परमः सुहृत्, हास्यरसावतारो मङ्गली प्रसाद अवस्थी तरुणे वयस्येवानाथं कुटुम्बमस्मांश्च विहायाकाण्ड एव कथाशेषतामापन्न इति नितरां हृदयं विदीर्यते। अयं सर्वदा प्रसन्नमुखः, सफलोऽभिनेता, कान्यकुब्ज-सभायाः प्रधानमन्त्री चासीत्। काशीस्थ-प्रसिद्धव्यापारिसमाजे अवस्थि-महाशयस्य महती प्रतिष्ठाऽऽसीत्। अस्य नवयुवकस्य मरणेन भृशं पेपीड्यमानोऽयं संस्कृत—साहित्य-समाजो हार्दिकं दुःखं प्रकटयति, तत्कुटुम्बिभिः समं समवेदनाञ्च प्रकटयति।

——*——

## कविराज—धर्म्मदास-महोदयानां स्वर्गमः।

छिद्रेष्वनर्था बहुलीभवन्तीति नियमानुसारं शोकद्वयेनावरुद्धे मनसि तृतीयो महान् शोकभारः समापतितः। हिन्दूविश्वविद्यालयस्यायुर्वेदविभागाध्यक्षाः, विद्यावयोवृद्धाः वैद्यवर्य्यचरकाचार्याः कविराज-धर्म्मदास-महोदयाः, भाद्र-शुक्ल-षष्ठ्यां कैलाशं प्रस्थिताः। हन्त! विलुप्त एव महान् विज्ञानराशिः। भारतवर्षे चरकाध्यापनायैक एवासीदयं महाविद्वान्। कियतः कालात् वार्द्धक्येन चिकित्साकार्यं परित्यज्य स्थिता आसन्। परं महामान्यानां मालवीय-महोदयानां महत्तानुरोधेन नवसंस्थापिते हिन्दूविश्वविद्यालयीये आयुर्वेदमहाविद्यालये अध्यक्षपदमास्थिताः प्राधान्येन चरकमध्यापयन्तिस्म। एते हि खलु १९१८ तमे वैक्रमाब्दे माघकृष्णाष्टम्यां लब्धजन्मानः, १९९२ तमे वैक्रमाब्दे भाद्रशुक्ल-नवम्यां ७४ वर्षात्मके वयसि पञ्चत्वं गताः।

चरकस्य सुप्रसिद्ध—जल्पकल्पतरु-टीकाप्रणेतृभ्यः चरक-सम्प्रदाय-प्रवर्त्तकेभ्यः स्वर्गीय-गङ्गाधरसेन-महोदयेभ्यस्त-च्छिष्येभ्यः स्वमातुलेभ्यश्च परेशनाथ-महोदयेभ्यश्चरक-मधीत्य सहस्रशो विद्वांसः समध्यापिताः। वाराणस्या-मिमे प्रधानचिकित्सका आसन्। इमे नितान्त-सरलाः, दयालवः, निस्पृहाश्चासन्। एतेषां निधनेनायुर्विज्ञान-शास्त्रस्य महान् तत्त्ववेत्ता गत इति नितरां चेखिद्यमानः संस्कृत-साहित्य-समाजो शोकनिमग्न आस्ते। तेषामभावपूर्तिः सम्प्रतमसम्भवेव।

एतेषां ज्येष्ठभ्रातरो भारतप्रसिद्ध-चिकित्सकाः श्याम-दास-कविराजमहोदया विगतवत्सर एव निधनं गताः। कविराज-महोदयानां योग्यतमतनयाः श्रीमन्तः श्रीभूपेन्द्र-नाथकविराज-गणपतिमहोदयाः योग्या विद्वांसश्चिकित्सकाश्च सन्ति।

कविराज-महोदयानां परःशतेषु शिष्येषु वाराणस्यां प्रधानशिष्याः भिषक्शिरोमणयः श्रीसत्यनारायणशास्त्रिणः काश्यां प्रधानचिकित्सकाः, हिन्दूविश्वविद्यालये चायुर्वेदा-ध्यापका विराजन्तेतराम्। साम्प्रतं तैरेव तेषां क्षतिपूर्तिः सम्भाव्यते।

# संस्कृतच्छात्राणां सन्ध्या—व्यायामयोरावश्यकता।

श्रीमान् गोपाल शास्त्री, दर्शनकेशरी, साहित्याचार्यः।

"विमृश्य शास्त्रं विनिमथ्य हार्दं
तत्त्वं मयेदं चिचितं समन्तात्।
व्यायाम-विद्या-जनतेशसेवा—
त्यागस्तपस्येन्द्रियनिग्रहश्च"

श्रीमन्तः सुप्रभात—पाठकाः !

गतराष्ट्रियान्दोलने काश्यां मणिकर्णिकाचक्र मण्डलीयकांग्रेस-राष्ट्रमहासभायाः ( जिलाकांग्रेस ) विशेषाधिवेशने सभापतित्वमङ्गीकुर्वता मया कारागृहाधिवासो वर्षपर्य्यन्तमध्यवासि। तत्र मया यद् यदनुभूतं तत्रैकमेवमावेदनीयमद्य श्रीमतां पुरस्तादुपस्थाप्यते।

अद्यत्वे संस्कृतच्छात्राणां दिनचर्य्या प्राय एवमेव भवति, यत्ते प्रातरुत्थाय शौचक्रियातो निवृत्ताः स्वाध्याय व्यापृता भवन्ति। तत्राल्पीयांस एव तदानीमेव स्नानादिकं विधाय सन्ध्याव्यायामादिकं च कृत्वा प्रातराशमशित्वा ततोऽध्ययने प्रवर्तन्ते। यदि कश्चिदग्रे वर्द्धतेऽपि स यथा कथमपि स्नानमात्रं कृत्वा सन्ध्याव्यायामं परिहृत्य किञ्चिदनियतं प्रातराशमशित्वा पठने घोषणेऽध्ययने वा व्यापृतो भवति। ये हि ततोऽप्यधिकं कुर्वन्ति ते यथाकथमपि स्नानं विधाय सन्ध्यासने उपविश्य त्वरया खण्डितानखण्डितानेव वा सन्ध्यापुस्तकस्थान् विनियोगशून्यान् मन्त्रानुचार्य्य दशपञ्चदश वा गायत्रीमन्त्रानुचरन्तः प्रातराशमकृत्वा, कृत्वा वा स्वनित्यकर्माणि व्याप्रियन्ते। साधु सन्ध्यावन्दनन्तु सहस्रेष्वेकः करोति नवेति सन्देह एव। परन्तु व्यायामन्तु केऽपि न कुर्वन्ति इति सुनिश्चितमभिधातुं पार्य्यते।

एतस्य कारणं किमिति प्रश्ने मान्तु एतदेव प्रतिभाति यत् सन्ध्यावन्दनाभावे राजकीयपरीक्षा—पुस्तकपाठघोषणं गुरुतोऽध्येतुं द्राक् पाठशालोपस्थितिश्च तदीयमहत्वज्ञानाभाव एव हेतुः। अस्तु एतस्य सर्वस्यापि प्रतीकारः सुशक्योऽस्ति। पाठशालाध्यक्षा यदि अभिलषेयुस्तर्हि पाठशाला—समय-परिवर्तनेन सन्ध्यामहत्वप्रख्यापनेन परीक्षा-प्रणालिपरिवर्तनेन च यथा वा तेऽभिलषेयुस्तत्र किञ्चित्ते कर्तुमर्हन्ति। तेहि स्वयं सन्ध्यावन्दनमहत्त्वं जानन्ति।

"अहरहः सन्ध्यामुपासीत" श्रुतिः।
न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्य्यः सर्वस्माद् द्विजकर्मणः (मनुः)
ऋषयो दीर्घसन्ध्यत्वाद् दीर्घमायुरवाप्नुयुः। इत्यादि

एतादृशानि सन्ध्यामाहात्म्य-प्रख्यापकानि बहूनि वचनानि ते जानन्ति। स्वयमपि सर्वदा सर्वथा सन्ध्यावन्दनेऽभिरता भवन्तीत्यादयो बहवो हेतवः सन्ति यत्तेऽन्तेवासिषु सन्ध्यावन्दन-व्यवस्थां विधातुमर्हन्ति।

परन्तु व्यायामस्य वराकस्य तु कथमपि प्रवेशः संस्कृतच्छात्रेषु न सम्भवतीति कारागृहे निवसता नित्यम् व्यायाममनुतिष्ठता मया बहुशश्चिन्तितम्। यतोहि संस्कृतज्ञा विद्वांसस्तद्गुणानभिज्ञास्तु सन्त्येव; बहवस्तु तद्विरोधिनः सन्ति। यद्यपि कादम्बरीप्रभृतिषु साहित्यपुस्तकेषु व्यायामवर्णनं विस्तृतं विद्यते।

व्यायामस्य महत्वमपि सर्वत्रैवोद्घुष्यते। तथाहि—

" व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः।"

"पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात्" इत्यादि बहुशस्तस्यापि माहात्म्यं वर्णितं विद्यते। वैद्यकग्रन्थेषु तु दिनचर्य्याप्रकरणे व्यायामं विना दिनचर्य्यैव न पूर्णा भवति। तथाहि वाग्भटे अथातो दिनचर्य्याध्यायं व्याख्यास्यामः—इत्यभिधाय व्यायामवर्णनं विस्तरशो विदधाति।

" लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसां क्षयः।
विभक्तघनगात्रत्वं व्यायामादुपजायते॥
अर्द्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः।
शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा" इत्यादि॥

इत्थम्भूतस्यात्युपयोगिनः कर्तव्यस्य संस्कृतच्छात्रेषु सर्वथाऽभावो विद्यते कथन्तेषु पुनरस्य व्यायामस्य सञ्चारः

स्यादिति विमृशत एव मम कालो गच्छतिस्म । अस्य व्यायामस्य संस्कृतच्छात्रेषु एतादृशोऽत्यन्ताभावो विद्यते, यथा शशेषु शृङ्गाभावः, कूर्मेषु क्षीराभावः। एतस्य व्यायामस्योपेक्षया संस्कृतज्ञाः छात्रा विद्वांसश्च प्रायो रोगिण एव जन्म यापयन्ति। तेषां भाविनः सन्ताना अपि दुर्बलगात्रा भवन्ति। इत्यादयो बह्वयोऽनर्थपरम्पराः संस्कृतविद्वत्समाजे तु प्रसृता एव सन्ति। अपरञ्च तेषामेव हिन्दुसमाजेषु पौरोहित्यादग्रजत्वाच्च सर्वेऽपि हिन्दवो बाहुल्येन व्यायामकर्मविरहिता नपुंसका भवन्ति।

येन तेषु बहवः सामाजिका रोगाः सम्भूता विद्यन्ते। दाम्पत्यसुखन्तु हिन्दूसमाजत एव दूरीभूतमस्ति। हिन्दुपूच्चवर्गे तु शतेषु विरल एवैकः परिवार एवं विद्यते यत्र दाम्पत्यकलहो नास्ति। तत्र कारणं पुंसां बलाभाव एव। तेषु स्वभार्याप्रसादकरो हेतुर्येन स्त्रियः पुंसाधीना भवन्ति; सोऽस्त्येव नहि। तर्हि कथं ताः सन्तुष्टा भवेयुः, कथन्न स्त्रीपुंसेषु कलहसाम्राज्यं स्यात्, कथं न हिन्दुस्त्रियः प्रपलाय्य विधर्मकुलं समाश्रिता भवेयुः। हिन्दुस्त्रीणां परकुलाश्रयणे तत्पुरुषाणां दुर्बलगात्रत्वमेव बाहुल्येन हेतुर्विद्यते इति मया तत्रैव कारागृहे कस्माच्चन विधर्मपुरुषादश्रावि । तदुपरि हिन्दूनां सामाजिकी प्रथापि दोषबहुला विद्यते। यतः समुद्वेजिताः स्त्रिय इतः प्रपलाय्य विधर्मकुलाश्रिता भवन्ति। वैवाहिकी प्रथाऽपि बहुत्र हिन्दुसमाजे ईदृशी विद्यते यत्र वरापेक्षया कन्या एवाधिकवयसो भवन्ति। पश्यन्तु यत्रैवं कुत्सिता प्रथा विद्यते तत्र कथं दाम्पत्यसुखं समृद्धं स्यात्। तदुपरि अयं व्यायामाभावात्मको रोगस्तु एवं वर्द्धितो विद्यते; यस्य कृते कोऽप्युपाय एव नावलोक्यते। यत् कथमियं व्यायामप्रथा पुनर्हिन्दुसमाजेषु यथापूर्वं प्रसृता स्यादिति। पूर्वं हि सर्वेऽपि हिन्दवो मल्लयुद्धशिक्षायां निपुणा भवन्तिस्म। महाभारते श्रीकृष्णबलरामार्जुनप्रभृतयः सर्व एव मल्लयुद्धनिपुणा आसन्। कंसजरासन्धनिपातो मल्लयुद्धेनैवाभूदिति हि सर्वे एवावगच्छन्ति।

किम्बहुना, अल्पीयसा शब्देनैव मयोच्यते यत् संस्कृतच्छात्रा यदि स्वीयं कल्याणमभिलषन्ति चेत् प्रतिदिनं सर्वे नियमेन व्यायामानुष्ठानमवश्यमाचरन्तु। प्रातरेव तस्य कृते समुचितः कालोऽस्ति। यदि प्रातर्न स्यात्तर्हि सायन्तु व्यायामानुष्ठानस्य नियमस्तैरवश्यं पालनीय इति स्वानुभवो मया वर्ण्यते। उपरिलिखितपद्ये 'व्यायाम' शब्दस्य प्रथमोपादानं यन्मया कृतं विद्यते। तत्रायमेव हेतुर्विद्यते। यद् यदि संस्कृतज्ञाश्छात्रा व्यायामानुष्ठानमाचरिष्यन्ति; तर्हि अग्रेतनं सर्वमपि कृत्यं तेषां साधु सम्पन्नं स्यात्। तदनुकरण-परायणस्य हिन्दुसमाजस्यापि महानुपकारः स्यात्तेऽपि स्वपुरोहितान् व्यायामपरायणं दृष्ट्वा स्वयमपि व्यायामकरणशीला भविष्यन्ति। येनोपरिनिर्दिष्टः सर्वोऽपि सामाजिको दोषो दूरीभविष्यति। अत्राहम् संस्कृतपाठशालाध्यापकान् तदध्यक्षानपि बद्धाञ्जलिर्विज्ञापयामि। यदि भवन्तो हिन्दुसमाजस्य कल्याणकामुकाः सन्ति तर्हि स्व-स्व पाठशालासु एकां मल्लशाला (अखाडा) मवश्यमुद्घाटयेयुर्यत्र सर्वेऽपि छात्रा बहिस्था अपि हिन्दवः समागत्य व्यायामं कुर्वन्तु। सम्प्रति हिन्दवो व्यायामविरहिता नपुंसकप्राया भवन्ति। येन सर्वेऽपि रोगाः सर्वेऽपि सामाजिका दोषाः समुद्भवन्ति, विधर्माणः सर्वे हिन्दूनुपहसन्ति । एतत् सर्वमपि व्यायामात्मकरामबाणौषधेन दूरे प्रपलायितं स्यात्।

सर्वगुणसम्भृतोऽपि हिन्दुसमाजोऽनेन व्यायामाभावरूपदोषेणैव सर्वथा जर्जरितो दोषबहुलो विधर्मिसमुदाय-लुण्ठनयोग्यश्च सञ्जातो विद्यते। यथा—

"सर्वगुणसम्भृतोऽपि पदार्थो दोषणैकेन तुल्यो भवति। सकलरसायनराजो दोषेणैकेन लशुन इव" इत्युक्तं पण्डितराजेन।

इति विरम्यते बहूक्त्याधुना। यदि संस्कृतच्छात्रा व्यायामकृत्ये संलग्ना भविष्यन्ति तर्हि सर्वमपि कार्यं गौरीयं स्वानुभवमहं क्रमशः कथयिष्यामि।

---

## समालोचनीय--पुस्तकानि।

इतो मासत्रयान्तरे बहूनि पुस्तकानि पत्राणि समालोचनार्थं समागतानि सन्ति। समालोचनाश्च कृताः परमिदानीं समयाभावात् त्वरया च तन्नात्र प्रकाशिताः सत्वरमेव... [illegible] ... पुस्तक-प्रेषकैः पत्र-सम्पादकैश्च कृपया क्षन्तव्यम्।

सम्पादकः

चरकाचार्याः कविराज धर्म्मदास महोदयाः



जन्म—माघ शुक्ला भीष्माष्टमी १९१८] [मृत्यु-भाद्रशुक्ल नवमी १९९२

ज्योतिष प्रकाश प्रेस, विश्वेश्वरगंज, काशी।

## संस्कृतस्य हिन्द्यनुवादयितृभ्यो निवेदनम्।

डा० ब्रह्मानन्दसंन्यासी शास्त्री, पी. एच. डी.

भो विद्वांसः !

सत्यं स्वजन्मभूमिस्वतन्त्रताऽभिलाषिणः प्रत्येक भारतीयस्य हिन्दीभाषां राष्ट्रभाषाकर्तुमुद्भिन्नो मनोरथाङ्कुरो दरिदृश्यते। स्वनामधन्या बहवो महानुभावास्तत्र मनसा वाचसा कर्मणा च सततप्रवृत्ताः। अनेके काव्यनाटकोपन्यासादिग्रन्थास्सुमधुरवाण्यां निर्मिताः, विरच्यन्ते च। बहवो विदेशीयप्रबन्धा अपि सुंदरलालित्यपूर्णहिन्दीभाषायामनूदिताः, अनूद्यन्ते च। एवं बौद्धग्रन्थास्सुमनोहरहिन्दीगिरि प्रकाश्यन्ते; किन्त्वद्यावधिपर्य्यन्तं धार्मिकदर्शनादिग्रन्थानामनुवादस्सम्यङ्नोपलभ्यते। ये केचन संस्कृतभाषाभिज्ञा यदा कदा समुत्सहन्ते ते "हिन्दीज्ञेभ्य एव संस्कृतं हिन्दीभाषायामनूद्यते" इति प्रयोजनमपि नावगच्छन्तीति ज्ञायते।

केनचिद् ब्रह्मचारिणा लोकोपकारार्थं महता प्रयासेन "अद्वैतसिद्धिः" हिन्दीभाषायामनूदिता। किन्तु तदनुवादः संस्कृतविदुषां कृते नितान्तं निरर्थकः। एवं हिन्दीभाषाभिज्ञेभ्योऽत्यन्ततोऽनावश्यकः। स्थालीपुलाकन्यायेन श्रीमद्भिः पाठकैस्संयोक्तुमुदाहरणमत्रोट्टङ्कि:—

"यद्यपि विप्रतिजन्यसंशयस्य न पक्षतासम्पादकतयोपयोगः, सिसाधयिषाविरहसहकृतसाधकमानाभावरूपायास्तस्याः संशयाद्यघटितत्वात्"।

अनुवादः = "जो कि विप्रतिपन्नसंशयका पक्षतासम्पादकतया = पक्षतास्वरूपघटकतया विचार में उपयोग नहीं है, क्योंकि सिसाधयिषा विरहविशिष्ट साध्य सिध्यभाव पक्षता को संशय से घटित होने से" पृ० ५।

भो विज्ञाः ! विदाङ्कुर्वन्तु कथमिदमुपयोगित्वं हिन्दीज्ञानां स्यात्? सम्भवेदर्धदग्धपण्डितानामाऽवश्यकमिति।

एवं दार्शनिकग्रन्थानां नास्ति समुचितोऽनुवादो हिन्दीभाषायामिति विलोक्य तत्त्रुटयन्तकरणार्थं "गौरीशङ्करगोयनकासमर्पितनिधिसंरक्षकैः "अच्युत" माला काश्यां प्रकाश्यते। तस्या वि० सं० १९९१ अब्दस्य पौषपूर्णिमाया अङ्कोऽवलोकनार्थमेकेनमहानुभावेन प्रदत्तः। तत्रापि संस्कृतरचनानुसारेण संस्कृतशब्दानुक्रमेण चानुवादकेन हिन्दीशब्दांल्लिख्याऽनुवादो यत्राऽकारि तत्र। यथा—

"मायाशक्तिमतो ब्रह्मणो जगत्सर्वं वदतः समन्वयस्य अशरीरस्य न मातेति न्यायेन विरोधोऽस्ति न वेति संदेहेर्न्यायस्य अनाभासत्वादस्तीति"।

अनुवादः = मायाशक्तियुक्त ब्रह्म से जगत् सृष्टि कहने वाले समन्वयका शरीर रहित माया नहीं है, इस न्याय के साथ विरोध है, या नहीं ? ऐसा सन्देह होनेपर न्याय आभास रूप न होने से विरोध है" पृ० १०८९।

"ननु तव देहादिसंयुक्तस्याऽप्यात्मनो विज्ञानस्वरूप मात्रव्यतिरेकेण प्रवृत्त्यनुपपत्तेरप्रवर्तकत्वमिति ।"

अनुवादः = परन्तु तुम्हारे मत में देह से संयुक्त भी आत्मा की विज्ञानस्वरूपमात्र से अतिरिक्त प्रवृत्ति के अनुपपन्न होने से प्रवर्तकत्व भी अनुपपन्न है"।

विचारयन्तु विद्वांसः ! हिन्दीभाषाभिज्ञोपकारार्थं कृतोऽप्यनुवादः कथं तेषामुपकारी स्यात्?

अत एव ये महानुभावा धनकालव्ययेन महत्परिश्रमेण च भाषान्तरं कुर्वन्ति कारयन्ति च। तेभ्यः सानुनयं निवेदनं यद्ग्रन्थप्रकाशनात्प्रागेव हिन्दीविशेषज्ञेभ्यः प्रदर्श्य भाषाशैलीं च शोधयित्वा कृपया प्रकाशयेयुर्येन धन-समय-परिश्रमादि सर्वं सफलीभवेदन्यथा जनकल्याणरहितनाममात्रप्रसिद्धिस्तु किञ्चित्कालपर्यन्तं स्थास्यतीति।

# "सा"

श्री जानकीवल्लभ ललितललाम शास्त्री
साहित्याचार्य्यः।

—०:※:०—

सा सैवासीत्। तन्नयने तन्नयन इव, तदधरन्तदधरमिव। धरायास्सैव 'रसेति' नाम कृतवती स्वसरसपदे धरन्ती। आत्मानमात्मन्येवावलोकयन्ती वर्त्मन्यासीद् यान्ती यदा, ताम्प्रेक्ष्य हृदयनयनेन तदा प्रभृत्येव रतिर्लोकस्यालोकमार्गावाप्तौ विरतिमकरोत्। सा मालाकारस्यैकस्यासीत्कन्यका। तत्तातो दिवं गत्वाऽपि कदाचिदेव नन्दने पारिजातलतिकाकुमारीं कमनीयं—'कलिकां' तल्लावण्यप्रतिविम्बितां प्रेक्ष्य प्रसन्नो बुभूषति, किन्तु नियत्या नोदितो वलात्तत्कृतिकृतौ। यस्या 'स्सा' नयननन्दिन्यासीत्तन्नामधेयं 'मालिनी' तिकृतन्तद्ग्रामटिकाऽटिभिः। वृद्धा तन्माता 'मालिनी' कदाचित्तद्रूपम्बिभावयन्ती हृदि सन्तापम्बिदधत्यासीत् स्थिता मरणखट्वायाम्। तदानीमेव यूथिकाजालैर्निर्माय निर्माल्यमेकं सा मातुस्समीपमुपागता। तत्कौशलन्दृष्ट्वा स्ववंशस्य 'वंशी' न्तामामन्यत माता। विश्वासश्चाभवद् यत्स्थितायामस्यां स्वोत्पन्नमत्यामवश्यस्मे वृद्धावस्था सुखेन व्यत्येष्यति। हृदाभिनन्द्य तत्कौशलम्प्रमोदभरोद्गताश्रुविन्दून् तच्छ्रमशीकरगुम्फितालकललितालिके निपातयन्ती पिहितस्मितिलघूत्फुल्लकपोलतलममलं चारु चुचुम्ब तस्याः। अकथयच्च "गच्छ स्वेच्छया स्वच्छाशयः कश्चित्क्रीणाति चेदाणकद्वयेनापि, तदानयौपधिम्प्रियपुत्रि!"

× × ×

"इत एहि"

"आगच्छामि"

"कियन्मूल्यमस्याः?"

"यद्रोचते प्रभवते।"

"पर्याप्तमेतत् किं नु?" (इति रूप्यकद्वयन्ददाति) सुपर्याप्तमेतत।

"अहरह आगन्तव्यम्, पञ्चवादनवेलायामहं भ्रमितुं गच्छामि, ततः प्रागेव अस्या अपि सुन्दरीं स्रजमेकं निर्मायाऽऽनयाऽत्र, प्रत्यहमहं क्रेष्यामि।"

× × ×

'सा मातुस्समीपमुपेत्य क्रेतुरस्य कारुण्यशीलत्वं कथं वर्णयिष्यति, श्वः पुनः कीदृशीं मालां निर्मास्यतीति' मनस्यस्फुटं वदन्ती, कियन्ति पदानि चलन्ती स्खलनञ्च रूपयन्ती मन्दं मन्दमगारमगात्। 'मिलिन्दोऽपि तन्माल्यपरिमलोन्निद्ररसस्तद्गमनपथं चिरमवलोक्य परोक्षीभूतायान्तस्यां, दीर्घोच्छ्वासं कुर्वन्—"शुद्धान्तदुर्लभमिदं वपुराश्रमवासि नो यदि जनस्य, दूरीकृता खलु गुणैरुद्यानलता वनलताभि"

रिति हृदि ध्यायन् भ्रमितुं गतस्तद्गमनपथेनैव वलात् केनापि प्रेर्य्यमाणः।

× × ×

यदाऽसौ स्वकुटीरं विवेश, तदा स्वाशाकलिकां वृन्त एव शुष्कां निभाल्य, हा मातः! कासि? देहि मे प्रतिवचनम्, इति रुदन्ती, "माता ते धर्मभ्रष्टाऽऽसीत् द्विवाहं विधाय केनापि क्षत्रियेण सह राजोद्याने नियुक्तेन, पिता ते प्रागेव मृतो योऽसौ क्षत्रिय आसीत्, त्वमप्यासीः वालविधवा, इत्थं सर्वाणि पापानीदानीं पुञ्जीभूतानि, तत्कोऽन्यो धर्मवानिदानीमस्याः क्रियां करोतु? गच्छ मिलिन्दस्य गृहम्, तस्यैवैष ग्रामः, स कदाचित् स्वानुचारान् दास्यति। कथमथवा शिक्षितस्सोऽपि साहाय्यमाचरिष्यति? तन्मातैवेदानीं गृहस्वामिनी। जननीयन्त्वं तु प्रत्यक्षं भ्रष्टा वरीवर्त्येव, किन्तु

त्वमपि पापैव यतो बालविधवाऽभव इति" ग्रामकुक्कुरैर्दश्यमानमानसा तत्रैवागतेन मिलिन्देन विलोकिता।

मिलिन्दमवलोक्य ससम्भ्रममुत्थाय 'सा' "पश्य मातरं मे, शृणु चैषां कुवाक्यानीति" कथयन्ती न जाने कुत आनीयैतादृशीं धृष्टतां सा तत्करं जग्राह, मातृशवस्य च पार्श्वं निनाय।

तत्स्पर्शविद्युच्चमत्कृतचित्तोऽसावपि धैर्य्यन्दत्वा ग्राम्यद्वारैव तदौर्ध्वदैहिकं कृत्यं सम्पाद्य निजगृहं चलितुन्तामनुरुरोध। दुःकृतां ग्राम्यकुक्कुराणां 'सा' तद्गेहमेव गतवती दीनबन्धोर्भगवतस्तस्य च कारुण्यगानं हृद्विपञ्च्यामालपन्ती।

प्रतिदिनं सा सुन्दरीं स्रजमेकं निर्माय तन्मात्रे वृद्धायै ददाति, तस्मै चैकाम्। गृहवासिभ्यश्च सर्वेभ्यो यदा तदा। सर्वेऽपि गृहवासिनस्तां स्वोच्छ्वसितमिव जानन्ति।

एवमेव तस्यास्सहर्षं वर्षमेकं गतम्।

× × ×

द्वितीयवर्षे।

मिलिन्दः—"मालाकारकन्यका सा।"

अरुणः—"किन्तु ..............."

मिलिन्दः—"शिव शिव बालविधवा सा।"

अरुणः—"किमभूत्तदा ?"

मिलिन्दः—"एतदेवाभूद् यदसौ नान्यादृशा दृशा दृश्या।"

अरुणः—"कथय मत्समीपेऽहन्त्वां जानामि साधुमेव।"

सा—( माल्यमेकं करे दधती, सस्मिताधरा ) "अद्याहम् ....."

मिलिन्दः—"किमद्याहम् ?"

सा—स्वकरेणैव माल्यम्परिधापयिष्ये ( इति तथा करोति )।

अरुणः—( रोमाञ्चमवलोक्य, स्वगतम् ) "सत्यं साधुरयम्।"

मिलिन्दः—"गच्छ, अन्यदेकं निर्माय माल्यमानय, मित्रेणाहमन्यथोपालप्स्ये।"

अरुणः—"नहि २ कष्टं स्पष्टं भविष्यति। नाहन्त्वदीयां कामपि,—श्रमयितुमिच्छामि।"

सा—"किञ्चिदपि न मे कष्टम्। निर्मितमेव विद्यतेऽहमानयामि।"

अरुणः—( स्थितिं कुर्वन्, जनान्तिकम् ) "कण्ठे परिधापितस्यास्य लज्जा रक्षणीया भवत्या।"

सा—हसति

मिलिन्दः—हसति।

× × ×

धूमिलसन्ध्यायामुपवातायनं कस्यापि पन्थानम्पश्यन्ती प्रासादे समुपविष्टा 'सा' सस्वेदाङ्गुलिपिहितनयना कृता केनापि। पश्चात् ससम्भ्रमं "जानामि भवन्तं श्रीमन्तं मिलिन्दमेव। द्वित्राण्यहान्यतीतानि। आगत्यात्रैवाहं सप्रेम भवदागतिं प्रतीक्षमाणाऽऽसम्, कथयतु, कुत्र गत आसीत् ?" इति जगाद। ( सप्रेममिलिन्दागतिप्रतीक्षाशब्दं श्रुत्वाऽपसार्य्य करमरुणनयनोऽरुणो याच्ञादृष्ट्योवाच—" प्रिये ! नास्ति मिलिन्दः, किन्तु तत्सखा, परं मह्यमपि तदर्द्धं प्रेम दीयते किन्तु ? "

सा—"यदि तत्सखा, तर्हि ममापि। प्रेम किं ? अहमेव तवास्मि।"

अरुणः—प्रसन्नतान्दर्शयति।

सा—कुत्र निवासस्थानम्भवतः ?

अरुणः—तव पाषाणनिर्मिते, नहि नहि कोमले हृदये।

सा—सत्यम्पृच्छामि।

अरुणः—"असत्यं मिलिन्द एव वदति, यद्वदति प्रेम करोम्येव नानया सह।"

सा—"किं क्रुद्धोऽसौ? किन्तु सस्नेहं निगदति।"

अरुणः—"नहि नहि वाह्याडम्बरं प्रदर्श्य मां वञ्चयत्यसौ, प्रेम तु करोत्येव त्वयि।"

सा—(अज्ञात्वैतद्वचः) "एवं किं नु करोति?"

अरुणः—"येन लोको ज्ञातुम्प्रभवेत्, साधुरसाविति। किन्त्वस्मादृशास्तदन्तरङ्गसुहृदस्सर्वं जानन्त्येव।"

सा—किं जानाति भवान्?

अरुणः—"यदसौ म्रियते तुभ्यमिति?"

सा—तदाऽहमपि म्रिये तस्मै·········।

अरुणः—न मह्यम्?

सा—भवानपि न तथा करोति।

अरुणः—"अयमहं म्रिये" इति तां वलादङ्के स्थापयति।

सा—(पादाभ्यां प्रहृत्य) "धिङ् नीच! अयमीदृशस्त्वं मिलिन्दस्य सखा वुभूषसि? (माल्यगुफनसूचिम्प्रदर्श्य) इयमहमन्धंकुर्य्यान्त्वाम्? त्यज्येऽथवा। भगवता भविष्यते न सुप्तेन।" इति गृहम्प्रविशति।

× × ×

त्रियामायाः प्रथमयामेन सह द्वितीयस्य सुहृत्त्वं भवदासीत्। नक्षत्रमालिकया राजितकण्ठो रजनीरञ्जनः कुसुमकलिकाकमनीयकरकिसलयायास्तस्याः कस्यापि ध्यानं नाटयन्त्याः कपोलपालीपतिताश्रुविन्दून् सूचिक्षतजललिताङ्गुलिसंस्पर्शशिन्दूरद्युतीन् करनिकरैर्निजैः प्रोञ्छन्नासीन्मध्येसदनवाटिकम्। "किं सत्यमेव मिलिन्दो म्रियते तस्मै? किन्ततः तदिच्छामनापूर्य्य द्वेषोऽपि कदाचित्करणीयो भविष्यति? अथवा कथं न यादृशाय हितेच्छवे स्वजीवनमपि समर्प्य सुखिनी भवेत्? किन्तु जीवनन्तु तया कियत्कालात्पूर्व्वमेवार्पितं स्वीयम्, परमसौ स्वदेहं न दास्यत्यदेहायेत्यादिचिन्तासन्दानितान्तःकरणा पश्चादागतेन मिलिन्देन विलोकिता।

"किन्नु चिन्तिताऽसि"? (तत्कोमलकरं स्वकरे निधाय)।

"एवमेव"

"न हि कथय, किन्तु चिन्ताकारणम्?"

"किं भवान् प्रेम न मयि करोति?"

"त्वं कथय प्राक्"

"तव हृदयं स्वयमेव ज्ञातुमलम्"

(कीदृक् प्रेमास्याः? कियान् विश्वासो मयि! यदियं व्रवीति "तव हृदयमेव ज्ञातुमलम्" तर्हि किमहं ब्रूयाम्?) (प्रकटम्)

"तवापि हृदयं वेत्तुमलम्।"

"नाहमेतत्प्रहेलिकां विज्ञातुमीशे।"

"तर्हि·········" (तत्करद्वयं गृह्णाति।)

(सा मौनतां याति, रोदिति च धीरम्)

"प्रि······य······" इत्यश्रूणि प्रोञ्छति।

(सा किञ्चिन्न वदति)

"प्रि······" (इति पार्श्वे निवेशयति)

"साऽधोमुखी तिष्ठति"

(मिलिन्दः किञ्चित्कथयितुं तत्कर्णसमीपे स्वमुखं करोति)।

(स्विन्नकपोलद्वया सोपसर्पति।)

मिलिन्दः—"शृणु, यदहं कथयामि, तत्र ध्यानन्देयम्, जगत्किञ्चिदपि कथयेत्, किन्त्वहन्त्वां स्वोच्छ्वसितं जानामि अथेदानीं शृणु, कर्णे कथयामि······"

सा—भीता वेपमानाऽग्रे वर्द्धमाना समाध्वसावनता तथा तिष्ठति।

मिलिन्दः—प्रिय........"

सा—( वेपते )।

मिलिन्दः—प्रिय ! भगिनि मम........

सा—प्रसन्ना पादयोः पतति।

मिलिन्दः—स्थिते भ्रातरि मे का चिन्ता ते ?

× × ×

इदानीमेवारुणोऽप्यागत आसीत्, किन्तु तस्याः कपोलयोस्समीपे तन्मुखम्प्रेक्ष्य पश्चात् प्रतिनिवृत्तः। मिलिन्दं कथयित्वैवायन्तां ग्रहीष्यतीति मनसि स्वोत्पन्नमतित्वं प्रशंसमानो गृहं गतः। अन्येद्युर्हठपूर्व्वकं, तस्याः स्व गृहे आमन्त्रणं स्वीकारयामास स मिलिन्देन।

× × ×

"मत्करनिर्मितां वीटिकामपि खादित्वा तु गच्छ" ( अरुणः )।

"भवत्करदत्तं गरलमपि पास्यामि, ताम्बूलन्तु ताम्बूलमेव।" ( सा )

"तर्हि, आगच्छ मत्प्रकोष्ठे।" ( अरुणः )

× × ×

"गृह्यतां मन्मनसा सहैतत्।" इति ददाति ताम्बूलम्।

"मन्मनोऽपि गृहीतं किन्तु ?" अरुणः

"अथ किम् ?" सा।

"तर्हि ममप्यर्द्धं सख्युः प्रेमवस्तुनः" इति स्वाङ्के स्थापयति।

"सा तिष्ठति।"

"अहन्त्वयि प्रेम करोमि।"

"अहमपि।"

"तर्हि कथन्तदानीन्तथा कृतमासीत् ?"

"यदा भवान्प्रेम कर्त्तुमारब्धवान् तदा—"

"स्वगतम्, कीदृशी स्त्रीजातिः ? करोति प्रेम, किन्तु प्रकटयितुं नेच्छति, ( प्रकटम् ) किन्तद्प्रेम ननु ? ( इति मुखमुन्नमयति )।

"( सा तत्कामचेष्टां विलोक्य त्राणाभावाञ्च विलोक्य वेपमाना ) "भ्रातर्मम !" भगिनीं त्रायस्व।"



## "प्रोषितभर्तृका"

अद्यावध्यदधां विलोक्य वदनं यस्याब्जदर्पापहं।
धैर्य्यं, भित्तिगतं च चित्रफलकं, स्वान्तं सदाऽऽनन्दयम्॥
रुष्टस्ते स सखा जगाम सदनं ग्रीष्मावकाशेऽधुना।
तच्चित्रञ्च निनाय, नो लगति हृत्-भृत्यद्वितीये गृहे॥

## "वर्षावर्णनम्"

गरुडासनसंबद्धाः कौमुदीं सप्तमस्वरैः।
रटन्ति बटवो यत्र स कालस्समुपस्थितः॥

श्रीजानकीवल्लभस्य बालकस्य।

# हा ! भारतवर्ष ! कां दशामापन्नोसि ?

ले०—श्रीवेंङ्कटेश शर्मा, वरखेडकरः ।

" नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण "

भारतवर्षः कीदृश आसीत्, प्राचीनतमे काले यं किल भारतवर्षं वरिष्ठाः क्षत्रियकुलजाताः स्वकीयममौल्यमपि जीवितं तृणायमन्यमानाः सन्तो ररक्षुः; यस्मिन्किल भारतवर्षं परित्यक्तसकलविषयोपभोगाः स्नानसन्ध्यापरायणाः ब्राह्मणाः काले काले अग्निशालाम् प्रविश्य सम्मानयन्तिस्म हिरण्यरेतसम्; यत्र च मौञ्जीबन्धनादारभ्य यावद्द्वादशसंवत्सरं नैष्ठिकं ब्रह्मचर्यमाचरन्तो भास्वन्तं भजन्तो माणवकाः सहस्रकरपरिवारितसूर्यमण्डलं निर्भिद्य निर्गता इव जाज्वल्यन्तेस्म; यत्र च गृहस्थाश्रमसेविनोऽपि यजन-याजन-दान-प्रतिग्रह-पठन-पाठनादीननुतिष्ठन्तः स्वकीयां कौटुम्बिकीं च जीवनयात्रां निर्वाहयन्तिस्म, वानप्रस्थतुरीयाश्रमसेविनोऽपि यत्र स्वस्वकर्माचरणतो भगवन्तं सृष्टिस्थितिलयकर्तारं जानकीजानिमाराधयन्तिस्म, अतएव सप्तद्वीपवलयाङ्कितां वसुन्धरामेकच्छत्रेण परिपालयन्तः प्रतापशालिनः पाण्डवसदृशा अपि पार्थिवास्तेषां चरणरजोधूलिं शिरसा वहन्तिस्म । त एव नम्यास्त एव धन्यास्त एव पूजनीयास्त एव प्रातःस्मरणीयाः; यतो हि तेषां बालकेष्वपि प्रतापपूर्णानां परीक्षित्सदृशानामपि पार्थिवानां भस्मीकरणे शक्तिरासीत्, अतएव ते असंप्रज्ञात-समाधावुपविष्टाः सर्वस्यापि तुच्छतां मन्वानाः विराजन्तेस्म ।

चक्षूंपि विस्फार्य समन्तादवलोक्यतां यदयं भारतवर्षः कां वा दशामापन्न इति इदानीन्तु न किल ब्राह्मणेषु कश्चन सदाचारो नाम वरीवर्त्ति, सर्वथा शूद्रपरिकल्पितेनान्नेन [illegible] वेदानभिज्ञाः ब्राह्मणब्रुवाः ताम्रकूट-धूमसेवनमेवाग्निसेवां विजानन्तः; आत्मनो धर्मं आत्मनो नीतिं आत्मनो वेषं परित्यज्य, सर्वथा परधर्मं, परनीतिं, परवेषं च स्वीकुर्वन्ति । अस्तु, आत्मन कृते ते प्रभव इति किमपि वा यथेच्छं कुर्वन्तु; परं नैता वता तेषां सन्तोषः; किन्तु एवमेव सर्वेऽपि कुरुत; म पलितधवलकेशानां वृद्धानामुपदेशानुसारमित्युपदिशन्त "स्वयन्नष्टः परान्नाशयती" तिन्यायानुसारं आत्मान परांश्च अन्धे तमसि पातयन्ति । ये तु ब्रह्मचारिण पूर्वमासन्त एवाधुना दशवादनं यावत्स्नानमपि न कुर्वन्ति । ततः कुतो नाम भगवते सूर्यायार्घ्यप्रदानं? कुत श्च गायत्रीजपः । ये तु शूरा वीराः क्षत्रियाः पूर्वमासन् तेषामेव कुले समुत्पन्ना केचित्क्षत्रियब्रुवाः शक्तिरहिता सन्त इतस्ततो विचरन्ति ।

अङ्ग ! भारतवर्षस्यास्य कुत एतादृशी दुर्दशा सञ्जाता इति यदि नाम सविचारया दृशा समवलोक्येत तदा नूनमस्माकमेवायं दोषः सन्दृश्येत, तद्यथा—उपनयनादारभ्य यथा पुत्रेभ्यः साङ्गवेदाध्ययनं कारयन्तिस्मास्मत्पूर्वजा, तथैवेदानीं साङ्गाङ्ग्लभाषाध्ययनं कारयन्ति, परं द्रव्याभावात्तदपि न परिपूर्णतामेति, तेन अस्मदीयविद्यायाः सम्यग्ज्ञानं न भवति, न चाप्याङ्ग्ल विद्यायाः । एवं च "इतो भ्रष्टस्ततो भ्रष्ट" इत्याभाणकानुसारमस्मदीयधर्ममर्मण्यनभिज्ञाः परधर्ममप्यविजानन्तः किंकर्तव्यमूढाः "घटं भिन्द्यात्पटं छिन्द्या दित्यभियुक्तोक्तिमनुसृत्य ऐहिकविषयलोलुपाः कि वेदे ? किमाचारे ? कुतो वा [illegible] न विवर्ण नीयम् ? किं गोषु ? किम्ब्राह्मणेषु ? इतिनानाविध

कुचेष्टाभिर्व्याख्यानदानैश्च वैज्ञानिकं पवित्रतमं प्राचीन-धर्ममुपहसन्ति, इदानीं किल भारतवर्षे केचन संस्कृत-भाषेयं मृतभाषा इति तस्यां लिखितानां प्रबन्धानामपि मृतत्वमेवेति सर्वथा शवभूतस्यास्य संस्कृतविषयस्य न कैरपि परिशीलनं कार्यमिति जल्पन्ति। अन्यत्र कैचिन्मनुस्मृतिर्नाम का? किं तत्र लिखितमस्तीत्येतदप्यविजानन्तः स्वार्थैकपरायणाः किमत्रास्तीत्युक्त्वा महति जनसमुदाये सकलसारभूतां मनुस्मृतिं दहनज्वालाजालैः सन्दहन्ते॰। क्वचन केचिन्महानुभावाः किं वेदेऽस्ति? सर्वथा तत्तद्देवस्तुतिभिरेव परिपूर्णोयं वेदभाग।इति उच्चैःस्वरं जोघुष्यमाणाः पाटयित्वेतत्पुस्तकं प्रक्षिप्यता मुत्करदेशे इत्येतदपि वक्तुं नैव इतस्ततोऽवलोकयन्ति। अहह! किमितोप्यावश्यकी सनातनधर्मस्य तद्ग्रन्थानां च हेला, अरेरे! कलिकाल हतक!! इदानीमेव कथं त्वमात्मनः सर्वमतिसामर्थ्यं प्रदर्शितवानसि। अपरिमितः किल कालोऽद्यावधि ते वरीवर्ति, अथवा कुत एतावद्भाग्यं भारतवर्षस्येदानीम् सोऽयं भारतवर्षः "नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण" इतिवत् कालचक्रस्याधोनेमिदेशातिथीभूय स्वीयान्दशां नीचैर्नेतुंवाञ्छतीत्यलम्।

—॰:॰—

## "नर्मदा"

[ श्रीजानकीवल्लभ ललितललाम शास्त्री साहित्याचार्य्यः ]

किमिति न गन्तव्यं? किमत्र? तमसोऽस्ति केवलं प्रसृतिः!
मनसोऽपि च सङ्कीर्णताऽस्ति, मे सततविकीर्णा प्रकृतिः!!
कियत्पिनद्धस्स्यां मञ्जूषायां चञ्चलतरकरणः?
मन्दमेतदग्रे प्रवर्द्धने न ममात्माऽनुपकरणः!
पश्य, दृश्यते नभसि किञ्चिदपि विभास्समानं वस्तु;
तदवाप्तावपि मनोऽचलं वा कियद्विलोभं न्वस्तु?
आलस्यवतः पन्था एष "समुत्कर्षोऽपि सशोभः,—
वर्ण्यते नु यत्तेन वृथैव, स पातनपरोऽस्ति लोभः।"
प्रत्यक्षेऽपि विकासे दृष्टेर्भास्वति परप्रकाशे;
गर्हणीयमयि! जीवनं कथं, जीवनतमोविलासे?
अद्यावधि रममाणस्तनसि समात्मा स्यान्न सशङ्कः?
सतन्द्रेण दोषैकदृष्टिना चन्द्रोऽप्यलोकि साङ्कः!
'जीवनदं' चेद्वीक्ष्य जगन्मानसं भवत्यतिकृष्णम्;
जीवनदाने तदपि न जाने किन्ते मनस्सतृष्णम्?
गन्तास्म्यहं प्रकाशोल्लासे कविहृद्विस्तृतपदे;
सङ्कुचितस्स्या मे-मानव! जगतस्त्वं मोह-मदे।

नोटः—गीताञ्जलिरिव शिरष्कहीनकवितासङ्ग्रहालिपिका पुस्तिका में 'नर्मदा'।

॰ मद्रास-प्रान्ते कैश्चनाब्राह्मणैर्बहुवारं कुकृत्यमेतदनुष्ठितम्।—सम्पादकः।

## ॰ खलाष्टकम् ॰

[ श्रीजानकीवल्लभ ललितललाम शास्त्री ]

गण्यन्ते ते खल! चेत् गुणा अशेषा न शेषेण;
सङ्ख्यातुं तान्प्रभवेन्नासौ भुवनेऽस्ति सङ्ख्यावान्॥ १॥
दृढस्मरणशक्तिन्त्वामिव खल! लोके न लोकेऽन्यम्।
काऽस्तु विबुद्धकथा ते? स्वप्नगतो मां न विस्मरसि॥ २॥
खल! विमलं हृदयन्ते वर्ण्यं केनास्ति साम्प्रतं जगति।
भ्रान्त्याऽपि कृतो दोषो यत्र प्रतिबिम्बितो द्रुतं भवति॥ ३॥
रूपद्विगुणकदर्पणतलनिभनयने विराजेते।
तव, तनुतरदोषोयद्विपुलतरो दृश्यते ताभ्याम्॥ ४॥
मित्रेभ्योऽप्युत्तमतममहमिह जाने सदाऽकृपाजाने!
तैस्स्मर्य्ये तु कदाचन, मन्नाम्नो मालिकां भवान् जपति॥ ५॥
किं निश्शङ्कं शेषेऽशेषेऽपि गुणे चितेऽप्रसिद्धस्त्वम्?
अथवा सुखं शयीथाः निकटे जागर्त्ति तेऽद्वितीयखलः॥ ६॥
वर्त्तन्ते, वर्त्तन्तां प्रगुणगुणा मेऽत्रकेशिनस्तैः किम्?
एकोऽपि भवेद्दोषो वृत्तिर्येनास्तु पिशुनस्य॥ ७॥
विना हेतुन्द्वेषो हृदयदलनं वीक्ष्य विभुतां
गुणेभ्यो वैमुख्यं अतनुतरदोषेऽप्यभिरुचिः।
प्रसङ्गे बुद्धेर्वाक्-कलहकरणं, हास्यपरता
चरित्रं नीचानां चलयति मुनीनामपि मनः॥ ८॥
खलाष्टकमिदं पुण्यं जानकीवल्लभोदितम्।
यः पठेत्प्रातरुत्थाय हीयते न खलैरसौ॥ ९॥

## * अन्योक्तयः *

प्रणेता—सी० के० शाण्डिल्यो न्यायशास्त्री. श्रीरामनिकेतनम् मूलत्राणम्।

मयूरः—

नृत्यं मयूर ! तव चित्रितचित्रपत्तात्,
के का च विज्ञ–जन–रञ्जन–कारणाय।
पादौ निशाम्य मलिनौ प्रकरोषि रोदम्,
सत्यं गतं तव महत्वमयेऽतिलोभिन् !

कीरः—

भोः ! कीर 'पिञ्जर' गतो नु सदा किमर्थम्,
"रामेति राम" रटनैरुदरं बिभर्षि।
भूत्वा स्वतन्त्र–गतिमान् भज राम–पादौ,
मोक्षं लभस्व, "परहस्तेगतेन किं भोः"।

कोकः—

निशा वियुक्तो निजभार्यया, कथम्–
प्रिये ! रमे ! मुग्धतमे ! ब्रवीषि भोः।
वियोगयुक्तो भज भोः ! शिवं शिवम्,
शिवं गतः कोक ! सदा सुखी भव ॥

कपोतः—

प्रिये, मनोहारिणि, सुन्दरे त्वयि
कपोत ! मुग्धे खग–वंश–भूषणे।
अहो नु दृष्टेह कुदैव-रुष्टता
यतो न दत्ता त्वयि हा ! विवेकता ॥

चातकः—

धन्योऽसि चातक ! तवेह सुशंसता भोः,
निन्दां गतोऽसि शशिनः स्मरणाद्धि विश्वे।
सत्यं वियोगि-जन-दत्त कुशब्द-भाक्त्वम्
चन्द्रं न मुञ्चसि, दृढा व्रतलीनता ते ॥

# क्वेटा-भूकम्पः ।

ले०—श्रीमान् नारायणपति त्रिपाठी

वर्षे नेत्रनवाङ्कभू परिमिते ज्येष्ठे कनिष्ठे दले
जीवे कामतिथौ निशीथपरतो ब्राह्मे मुहूर्तोदये,
भूकम्पोऽतिभयङ्करस्समभवत्सुप्ते समस्ते जने,
क्वेटानामकविश्रुते जनपदे गौरीगुरोः पार्श्वगे ॥१॥

रात्रौ प्रसुप्तः स्वगृहे सुखेन,
कुटुम्बभृत्यादिभिरेव सार्द्धम्
भूकम्पवेगस्खलितैर्गृहाङ्गै-
राच्छादितः पश्यति नो प्रभातम् ॥२॥

भूगर्भवेत्ता यदि कोऽपि युक्त्या
विज्ञान-यन्त्रादिनवप्रयत्नात् ।
विज्ञापयेच्चेद्भुवि कम्पवार्तां
तां भाविनीं किञ्चिदहोभिपूर्वाम् ॥३॥

तथैव चान्ये गणका वरिष्ठाः
ये चन्द्रसूर्यग्रहणं विदन्ति ।
ते किन्न शास्त्रेण विचारबुद्ध्या,
भूकम्प-वार्तां प्रथमं वदन्ति ॥ ४ ॥

भवेत्कदाचिद्यदि दैवयोगाद्,
विज्ञानशास्त्रोन्नतिकौशलेन ।
भूगर्भजज्ञानविशेषसम्पत्,
स पारयेत्पूर्वमिदं प्रवक्तुम् ॥ ५ ॥

यः पारयेद्भौमिककम्पकर्म,
पूर्वं प्रवक्तुं निजनिश्चयेन ।
स पालयेद्भूगतजीवजन्तून्,
समानवानात्मगुणातिरेकात् ॥ ६ ॥

यो भाव—भूकम्पविशेषवृत्तं,
विज्ञापयेज्ज्यौतिषशास्त्रवेत्ता,
भविष्यवक्ता स भवेदवश्यं,
विचारशीलो जनताभिमान्यः ॥ ७ ॥

आस्तां तावदिदं भविष्यकथनं भूगर्भवेत्ता कथं
नो जानाति महीमहोदरगतं तद्रन्धकं नाशकम् ॥
यल्लब्ध्वा द्रवतां करोति कठिनं भूकम्पमेतादृशम् ।
यस्मिन्मानववर्गजीवनमिदं वायूपमं जायते ॥ ८ ॥

देशे भारतपश्चिमोत्तरतटे ख्याते महीमण्डले
भूकम्पः समभूत्स्वर्कीयविषये लक्षार्धजीवान्तकः ।
येनैकेन समस्तखण्डदलिता सा भूः स्थिरात्वं जहौ
प्रान्तः स्वान्तगतो बभूव सकलः कालान्तरालोपमः ॥९॥

विहारभूकम्पमहत्वनाशकः
ततोऽपि जीवार्थ-विशेषहारकः ।
महीतलोद्वर्तितदेशकारको
भवेत्कदाचिन्न कुकम्प ईदृशः ॥१०॥

शुभम्भवतु सर्वेषाम्

—०❀०❀०—

# दृश्यादृश्यवाद-निर्णयः ।



ले०—श्रीमान् दाऊजी दीक्षितः, दैवज्ञवाचस्पतिः, होराशास्त्र-मार्त्तण्डः ।

कालसङ्कलनात् काली कालज्ञान-प्रदायिनी ।
महाकालेन संयुक्ता नृत्यन्ती विदुषां मुखे ॥

× × × ×

अर्णवस्य पुरुषः प्रतरन् कदाचित्,
आसादयेदनिलवेगवशेन पारम् ।
नत्वस्य कालपुरुषाख्यमहार्णवस्य,
गच्छेत् कदाचिदनृषिर्मनसाऽपि पारम् ॥
—बृहत्संहिता,

वेदप्रतिपादितानां यज्ञादिक्रियाकलापानां कालनिर्णयो ज्योतिःशास्त्रमवलम्बते । तदेतस्य विस्तारः समये समये अष्टादशमहर्षिभिः स्वसिद्धान्तानुसारं विहितः । यथाः—

ब्रह्मा सूर्यो वशिष्ठोऽत्रिर्मनुः पौलस्त्य-रोमशौ ;
मरीचिरङ्गिरा व्यासो नारदः शौनको भृगुः ॥
च्यवनो यवनो गर्गः कश्यपश्च पराशरः ।
अष्टादशैते गम्भीराः ज्योतिःशास्त्रप्रवर्त्तकाः ॥

एभिः प्रतिपादिताः सिद्धान्ता आर्षत्वेन प्रामाणिकाः परिगण्यन्ते । परमिदानीं समुपलब्धेषु सूर्यसिद्धान्त एव प्राधान्येन प्रचलति । सूर्यसिद्धान्तमनुसृत्यैव मकरन्द-रामविनोद-जयविनोदप्रभृतिभिः करणग्रन्थैः पञ्चाङ्गनिर्माणं भवति । यद्यपि देश-ग्रन्थ-व्यवहार-रीतिभेदैर्विभिन्नदेशेषु स्वशिष्टाचारविचारानुरूपाणां पञ्चाङ्गानां निर्माणं भवति । परं सर्वत्र करणग्रन्थानां मूलं सूर्यसिद्धान्त एवेति वक्तुं न ... सङ्कोचमश्नाति चेतः ।



पूर्वाचार्यैरत्रैव विषये स्वीया सम्मतिरपि प्रकटीकृता । ज्योतिर्विदाभरणेः—

'स्थूलं सदा ब्राह्ममतं निरुक्तमादित्यसिद्धान्तमतं च सूक्ष्मम्" अतएव धर्म-कर्म-जातकादीनामधिमास-क्षयमासादीनाञ्च निर्णयः सूर्यसिद्धान्तानुसारमेव कर्तव्य इति प्राचीनाचार्याणामादेशः । उक्तञ्च

श्रीसूर्यसिद्धान्तमतोद्भवार्कात्,
साध्यौ तदा तावधिकक्षयाख्यौ ।

एवमेव सङ्क्रमणकालतिथिनिर्णयादयोऽपि सौरप्रकारेणैव कर्तव्या । उक्तञ्च

अतोऽनिशं संक्रमणेंऽशुमालिनः—
स्थितौ सदा सूक्ष्म—विधान-साधने ।
सौरं मतं शस्तमथान्यनिर्णये,
स्थूलं च भेऽन्यग्रहसंक्रमेषु ॥

श्रीमानाचार्यो वराहमिहिरः स्व-करणे सूर्यसिद्धान्तमेव पुपोष । एवमादिभिः प्रमाणैः स्पष्टमेव यदस्माकं जीवनं धर्मबद्धमिति सौर-सिद्धान्तोक्तप्रकारेणैव ग्रहादीनां तिथ्यादीनां निर्णयः समुचित इति ।

आधुनिका ज्योतिर्विदः सर्वमिदं विजानन्तोऽपि पाश्चात्यगणितपद्धतिमेवानुसरन्ति । तेषामेव सरण्या वेधसिद्धग्रहाणां ग्रहणं विधाय तेऽत्रैव 'लाग्रथम्' द्वारा च्युति-आन्दोलन-किरणाकर्षण-चाकचिक्य—देशान्तरभेद—संस्कारान् विधाय तद्द्वारा तिथिपत्र—निर्माणं कुर्वन्ति, तथा कर्तुं

माग्रहश्च कुर्वन्ति । परमेतदस्माकं धर्म—पर्व—निर्णयादौ कियत् युक्तिसङ्गतम्, आर्षसिद्धान्तस्य च कियदविरुद्धमित्यत्र सन्देह एव । उक्तञ्च सूर्य सिद्धान्तेः—

युगानां परिवर्त्तेन कालभेदोऽत्र केवलम् ।

एवं युगपरिवर्त्तनेन ग्रह—गत्यादिषु फलादिषु च किमप्यन्तरमायाति । तस्य च साधनं तत्तत्समये तत्तत्कालीनैर्गणकैर्वेधोपलब्धवीजादि संस्कारविशिष्टग्रहाणां विज्ञानं विधाय पश्चाज्ज्ञानयनं कर्तव्यम् । तदनुसारमेव धर्मपर्वादिव्यवस्था विधेया । उक्तमपि ब्रह्मसिद्धान्तेः—

संसाध्य स्पष्टतरं वीजं नलिकादियन्त्रेभ्यः ।
तत्संस्कृतग्रहेभ्यः कर्त्तव्यौ निर्णयादेशौ ॥

अमुमादेशमनादृत्य पाश्चात्यसभ्यता-रञ्जितान्तःकरणा गणक-पुङ्गवाः पाश्चात्यगणितपद्धति प्राप्त—संस्कार—संस्कृतं ग्रहानयनमेव युक्तियुक्तं मन्यन्ते । परं पाश्चात्यपद्धतिप्राप्ता ग्रहाः केवलं भू-पृष्ठ--स्थित-जनानां रञ्जनमात्रसाधका भवन्तीति भारतीयज्योतिस्तत्त्वविदां राद्धान्तः । अस्मिन् विषयेऽपि पूर्वाचार्यैश्चिरकालात् प्रागेव निर्णयो विहितः ।

यथा सिद्धान्ततत्त्वविवेकेः—

अदृष्टफलसिद्ध्यर्थं यथार्कादियुक्तितः कुरु ।
गणितं यदि दृष्टार्थं तद्दृष्ट्युद्भवतस्सदा ॥

वेधोपलब्ध—दृश्य - ग्रहाणां ग्रहणं, केवलं ग्रहण-ग्रहयुति-ग्रहभेद-शृङ्गोन्नति—ग्रहास्तोदयादिषु कर्त्तव्यम् । अदृष्टफलज्ञानार्थं तु सूर्यसिद्धान्ताश्रयणमेव कर्तव्यम् । एतद्विरुद्धाचरणं धर्म शास्त्रादिकार्येषु नोपयुक्तमिति । सिद्धान्तकाराणामिदमेव मतम् । यथा चोक्तमस्मत्पितामहचरणैः श्रीमद्भिः सुन्दरदीक्षितैः—

कुपृष्ठकेन्द्रात् गणक-प्रवीणै—
रूर्ध्वाधरैर्वा नलिकादियन्त्रैः ।
संसाध्यवीजादिकमत्र देयम्,
पर्वान्तकाले ग्रहणं रवीन्दोः ॥
तथाविधे स्पष्टतरग्रहेण,
युत्योदयास्तादिकमत्र सर्वम् ।
विकत्थितं यत्किल शास्त्रसम्मतं,
सिद्धान्ततत्त्वं विदुषां हिताय ॥
विवाह–व्रत-यज्ञादौ स्फुटखेटोद्भवं फलम् ।
भूकेन्द्रात् साधयेत् प्राज्ञस्त्वन्यथा विफलं भवेत् ।

एतेषां वचनानां पुष्टिः सार्वभौमसिद्धान्तोक्त मुनीश्वरवचनेनापि भवति । यथाः—

एवं यदुक्तं क्षितिगर्भकाणाम्,
कुपृष्ठगानामथ सम्प्रवक्ष्ये ।
यः साधितो दर्शविरामकालः,
स्फुटो भवेल्लम्बनसंस्कृतोऽत्र ॥
यतः स्फुटे दर्शविरामकाले,
दृक्सूत्रसंस्थौ रविशीतरश्मी ।
कुपृष्ठगानामथ निश्चयेन,
स्यातां हि तद्गोलविदो वदन्ति ॥
तदप्यसन्मासनिमित्तयोगो,
दृग्गोचरत्वेन मतो न पूर्वैः ।
भूगर्भदेशे गणितं हि सर्वं,
तत्पृष्ठदेशे समसूत्रतः स्यात् ॥

इत्यादिभिरनेकवाक्यानि दृश्यविषये उपलभ्यन्ते । एतेषां सर्वेषामयमेव सारांशो यत् ग्रहणोदयास्तादिसमस्त विषयेषु दृश्यग्रहाणां ग्रहणं

विधेयम्, यज्ञादिधार्मिककालनिर्णये सूर्यसिद्धान्तानुसारं विधेयमिति ।

सत्यपि निर्णये साम्प्रतिकाः गणकपुङ्गवाः, भारतीयमार्षमपौरुषेयं मतमनादृत्य, पाश्चात्य सभ्यतापतिता दृश्यग्रहैरेव समस्तं दृष्टमदृष्टं वा कार्यं कुर्वन्ति, प्रसभञ्च कारयन्ति । परमेतदस्माकमार्षसिद्धान्तानुसारेण सर्वथा विरुद्धमेव । यतो वयमपौरुषेयोपपत्तिसिद्ध-राद्धान्तस्वीकृतावेव वास्तविकीमार्षीं भारतीयतां धार्मिकताञ्च मन्यामहे ।

पाश्चात्य—सिद्धान्तज्ञा यथा ग्रहानयनं कुर्वन्ति तेन विधिना ग्रहाः स्वदेशस्य भूपृष्ठीयमार्गे पतन्ति । परमस्माकमाचार्या महर्षयश्चोक्तप्रकारेणानीतान् ग्रहान् केवलं ग्रहणादावेवोपयुञ्जन्ति । यज्ञादिकर्मसु जातकादौ तु अदृष्टग्रहानयनस्यैव प्राधान्यं ददति । तेषु च कालान्तरजन्यसंस्कार प्रदानमेव युक्तियुक्तमस्ति । उक्तञ्च सिद्धान्तसुन्दरे ज्ञानराजेनः—

मुनिप्रणीते मनुजैः क्वचिच्च दृश्यतेऽन्तरम् ।
तदा तदेव संसाध्यं न कार्यं सर्वमन्यथा ॥

एतावता संसिध्यते यत् कालान्तर-जन्यदोषैः यत् ग्रहेषु शैथिल्यं सम्प्राप्तं भवेत् तत् यथासाध्यं गणकपुङ्गवैरपनीय कार्यं कर्तव्यम्, नतु प्राचीनाचार्यमतेषु आकर्षण-च्युतिप्रभृतिसंस्कृतिं दत्वा तमन्यथा कुर्युः ।

भूकेन्द्रस्थितो द्रष्टा स्वस्वकक्षास्थितं यं यं ग्रहं० विन्दौ पश्येत्, तस्मिन्नेव ग्रहे कालभेदात् प्राप्तं वीजादिसंस्कारं दत्त्वा स्पष्टग्रहप्राप्ततिथ्यादि द्वारा विवाहोत्सवजातकादिसमस्तकृत्यं सम्पादयेत्।

अस्मिन् विषये प्रभूततराणि प्रमाणानि सिद्धान्तग्रन्थेषु करणग्रन्थेषु च लभ्यन्ते, यानि यथा समयमावश्यकतानुसारं सोपपत्तिकं प्रदर्शयिष्यन्ते

अदृष्टग्रहेभ्यः पूर्वोक्तयज्ञादिसंस्कारसम्पादने विशिष्टमन्यदपि कारणं प्रतीयते । तद्यथा भूलोकवासिनां सम्बन्धः पूर्वार्जितकर्मसङ्ग्रथित-कर्मभूमितो विद्यते । पृथिव्यामाकर्षणशक्तिर्विद्यत एव पञ्चभूतात्मकशरीरधारिषु पुरुषेषु भू—तत्त्वमेव प्राधान्येन वर्वर्त्ति । सर्वेषां केन्द्रं भूकेन्द्रमेव । विशिष्टशक्त्या स्वल्पशक्तेराकर्षणं भवति । भूकेन्द्र-स्थित-विशालशक्तिद्वारा स्वल्पतमप्राणानां मानवानां भू-तत्त्वं स्वयमेव कुमध्यविन्दौ विलीयते । तच्च चर्म्मचक्षुभिः सर्वथा अदृश्यमेव । अत एव त्रिकालदर्शिभिरार्यमहर्षिभिराचार्यैरदृष्टफलसिद्ध्यर्थं श्रीसूर्यसिद्धान्तानुसारं ग्रहानयनमेव साधितम् ।

अत्र विषये विमर्शमभिलषद्भिः सुप्रभाते स्वीया सम्मतिः प्रकटीकर्तव्या ।

नगेषुनागभूम्यब्दे शकाख्ये वेदमार्गतः ।
दाऊजीदीक्षितेनासौ प्रबन्धो निरमीयत ॥



# श्रीकाशीशतकम्

श्रीमान् पं० नारायणपति त्रिपाठी

प्रणुमो गणपतिचरणं, शुभकरणं प्रत्यूहवर्गहरणम ।
सिद्धिबुद्धिहृद्रमणं, निजजनशरणं, परानन्दवरणम् ॥१॥

काशी-गङ्गा-विश्वनाथान्नपूर्णाः,
ढुण्ढिस्कन्दौ माधवा भैरवाश्च ।
देव्यः सूर्या दण्डपाणिर्गुहाद्याः,
सर्वे देवा मां सदा शोधयन्तु ॥ २ ॥

यस्याः'स्कन्दपुराण'–मध्यनिहितं माहात्म्यपुञ्जोज्ज्वलं,
'काशीखण्ड'-मतीवरम्यकविताभावप्रवाहोद्गतम् ।
श्रीमद्व्यासमुखाम्बुजप्रकटितं विद्वन्मनोरञ्जकं
जागर्ति प्रथितं समस्तसुरसत्तीर्थस्थलोद्बोधकम् ॥३॥

यस्याः'काशीरहस्ये'विविधविधमहाघौघविद्ध्वंसहेतुः
पञ्चक्रोशादियात्राविधिरिह कथितःकर्ममार्गानुसारी ।
प्रायश्चित्तोपदेशाज्जगति जनहितोद्योगभारं वहन्ती,
श्रीकाशी लोकधात्री जयति शिवपुरी स्वर्णदीतीरसंस्था ॥४॥

'जाबालोपनिषत्सु' वेदमहितः 'श्रीयाज्ञवल्क्यो'मुनि-
'र्गार्गी' प्राह 'महाविमुक्त' मखिले भूमण्डले मुक्तिदम् ।
सा काशी वरणासि-मध्यखचिता वाराणसी विश्रुता,
गङ्गाप्लावितीरमन्दिरभृता स्ताच्छ्रेयसे नः सदा ॥५॥

यस्या स्तुति-'नैषधकाव्य' मध्ये,'श्रीहर्ष'-विद्वत्प्रवरप्रयुक्ता
विलोकनीया हृदयङ्गमापि, सुधीभिरानर्चितवाक्कलापैः॥६॥

विद्वद्वृन्दधुरीणधीरसरयूपारीणवंशोद्भवो,
'रामानन्द' कविस्त्रिपाठिपदभाक् सम्मानितो राजभिः
अस्मत्पूर्वजपूरुषो व्यररचत्काव्यं मनोज्ञं सतां,
नाम्ना"काशिकुतूहलं"सुललितं यत्सत्कथाभिप्लुतम् ॥७॥

सृष्ट्यादौ विकले विधौ जलमये घोरान्धकारावृते,
ज्योतिर्लिङ्गमयी बभूव भवती ज्वालाजटाला भृशम् ।
अम्भोधांसि विशोष्य धूमनिकरैः क्षोणीं सृजन्ती मुहुः,
चित्काशा हि रणेच्छिता विजयते काशी प्रकाशोज्ज्वला ॥८॥

पञ्चक्रोशप्रमाणं विधिहरिमहितं प्रादुरासीत्स्वलिङ्गं,
ज्वालामालाजटालं पशुपतिकलितं सत्यमोङ्कारनादम् ।
सच्चिच्छक्त्याभिपूतं दलितदृढतमस् स्वर्धुनीक्षालिताङ्कं,
आनन्दारण्यमेकं प्रभवतु गतये ज्योतिराद्यं वरेण्यम् ॥९॥

पूर्वैर्म्लेच्छनराधिपैर्निजमतोन्नत्यै विभग्नञ्च यत्
यत्राद्यापि पठन्ति मुग्धयवना नित्यं "नमाजं" मुदा ।
तत्रान्यत्कनकावृतं सुरजतद्वारैश्चतुर्भिर्युतं
श्रीविश्वेश्वरमन्दिरं विजयते यस्यां पताकोज्ज्वलम् ॥१०॥

यस्या "मोङ्कारनाथो" ऽत्यहिगुणसदृशैस्तन्तुवायैस्तुरुष्कै-
र्भग्नाङ्गे तारकुण्डे प्रकृति विमुखतामात्रधर्मानुयामैः ।
मत्स्योदर्य्यास्समीपे प्रमथितविभवे यावनीयश्मशाने ।
सम्यक्संवेष्टितोऽपि प्रददत इह सद्भक्तिसन्मानदानम्॥११॥

यस्यां गङ्गाप्रतीरे कलिकलुषकुलध्वंसिनीरप्रवाहे,
गौरीकुण्डोपरिष्टादगणितगिरिजाब्रह्मविष्ण्वादिदैवैः ।
आरादासेव्यमानः प्रविहितनिलयैस्साम्ब "केदारनाथो"
मुक्तद्वारो ददाति प्रकटितमहिमा मुक्तिमुक्तां मृतेभ्यः ॥१२॥

१ अर्जं तत्र ... मिश्रितम् ।

यस्यां "श्रीवैद्यनाथो" विगलितभवतापोग्ररुक्सेवकानां
'कामाक्षा'-सन्निधाने विदित 'वटुकनाथा' दिदेवैस्समेतः।
ज्योतिर्लिङ्गप्रधानो निवसति नितरां रावणस्थापितोऽन्यत्
हित्वा स्थानं स्वकीयं परमकरुणया विश्वनाथत्वसिद्ध्यै १३
यस्याश्चोत्तरसीम्नि रक्षति बहिः क्षिप्रेप्सितार्थप्रदः,
पुण्ये सङ्गमसन्निधौ स भगवान् श्रीगोमती-गङ्गयोः ।
'मार्कण्डेयमहेश्वरो' निजजनानुष्ठानसम्पूरकः,
कामानाशु मनोगतान् वितरति प्रत्यक्षतः प्रेक्ष्यताम् ॥१४॥
गङ्गापारे मनोज्ञे सकलबुधजनैरर्चित 'स्सोमनाथो'
'भट्टि'-ग्रामान्तराले विहित-'सकलडीहा' समीपे समन्तात् ।
यस्याः पूर्वस्थसीमा न भवति भगवान्सोममौलि स्स सोमः
कामान् भक्त्याऽऽशुतोषो वितरति विविधान्पूजितस्सोमवारे।
यस्याः पश्चिम-दिग्भागे श्री-'त्रिलोचन' शंकरः ।
सीम्नो वहिःस्थितो नित्य मसीमफलदायकः ॥ १६ ॥
यद्दक्षिणस्यां दिशि 'माधवे पुरे' श्री 'शूलटङ्केश्वर' नामकःशिवः
गङ्गातटेऽत्यन्तमनोरमस्थले, भक्तान्सदा रक्षति पूजनादिभिः
भूमण्डले भारतवर्षदेशः 'सुवर्णपक्षीति मतस्समस्तैः ।
तत्रापि काशीविदितप्रभावा, विश्वेशसौवर्णिकमन्दिराऽस्ति।

लक्षद्वयाधिकसहस्रदशोत्तराङ्का,
यस्यां वसन्ति मनुजास्सहजाश्च नार्यः ।
शक्या न देवगणना विधिवद्विधातुं,
वक्तुं विलोकयितुमत्र न कोऽपि शक्तः ॥१९॥

यस्यां महात्मा बुधबुद्धदेवःश्री 'सारनाथे' स्वमतप्रचारम्।
पुराकरोत्तत्र च 'धर्ममेप' स्तद्धर्मचिह्नं प्रकटीकरोति ॥२०॥
अद्यापि 'लङ्का' प्रभृतिप्रदेश्यै 'जापान-चीना' दिकदेशवास्यैः
बौद्धर्जनै रेत्य तदस्थिपूजा, विधीयते नव्यनिकेतनेषु ॥२१॥
तत्रत्यवस्तूनि पुरातनानि, सम्राड्निदेशादिह सञ्चितानि ।
दृश्यानि भूगर्भविनिस्सृतानि, प्राचीनशिल्पप्रकटीकृतानि २२

तत्रैव मेला प्रतिवर्षमध्ये, जनाकुला श्रावणसोमवारे।
श्रीसारनाथस्य विभोःप्रसिद्धा, लगत्यसौ सौख्यविहारहेतुः
स्थली विचित्रा खलु काशिकेयं, विहाय देवा निलयं स्वकीयं
यां सेवमाना निवसन्ति भक्त्या, यथा मनुष्याः परलोकभीता
यस्यां मृतानां भुवि देहभाजां, शास्ता यमो नैव न चित्रगुप्तः
तान् शास्ति सर्वान्प्रभुकालराजः, स्वभैरवीभिर्बहुयातनाभिः
यस्यास्सम्प्रति पालको दृढमतिस्सद्धर्मकर्माकरो
मान्यो राजजनैर्निजप्रकृतिभिर्विद्वद्भिरत्यादरात् ।
शास्ता वंशपरंपरागतगुणव्राताञ्चितो भावुकः,
'आदित्यो' द्विजपूजितः प्रभुवरो 'नारायणो' दृश्यते॥२
'आदित्यनारायणसिंह' देवः, काशीपतिस्सम्प्रति राजते
राजन्वती येन विभाति काशी, या सच्चिदानन्दविकाशिता
यस्याः प्रान्तप्रदेशे बहुतरवनिकानाटिकोद्यानवर्गै-
रारामोपवनादिभिः परिवृते लोकै र्महोल्लासिभिः ।
पुण्ये कार्तिकमास्यथो निजगृहाद्गत्वा द्विजार्चादिकं
धात्रीवृक्षतले विधाय विधिवत्सम्भुज्यते बन्धुभिः ॥ २८
प्रत्यब्दाश्विनमासि 'रामनगरे' श्रीरामलीलाद्भुता,
श्रीकाशीश्वरकारिता पुरि चतुर्दिक्षु प्रजाभिः कृता ।
भक्तिं शिक्षयति प्रभौ रघुवरे लोकप्रतिष्ठापके,
मर्यादापुरुषोत्तमे जनकजाजानावयोध्याधिकाम् ॥ २९
यस्यामयोध्यादिकसप्तपुर्य, स्तद्वत्प्रयागादिकतीर्थसङ्घाः
तथाधिपा धामचतुष्टयस्य, मोक्षप्रदानाय कृताधिवासाः
आदित्यदैतेयमुनिक्षितीशैस्तपस्विभिश्चागणितैर्मनुष्यैः।
असङ्ख्यलिङ्गप्रतिमादयो ये, संस्थापिता ते न कदापि ग
यस्याःपवित्रे 'मणिकर्णिका' ख्ये, तीर्थोत्तमे गोमुखनि
सुस्वादुपानीयमुपैति कुण्डे, यद् 'ब्रह्मनाल' द्रव एव नान्यतः
'पितामहस्रोतसि' तर्पिता ये, पितामहास्स्वैः प्रपितामहाः
विहाय [illegible] विभान्ति

यस्या धर्मव्यवस्था सकलबुधजनैर्मान्यते भारतेऽस्मिन्
देशे धर्मप्रधाने प्रकृतिजसुभगप्रान्तसम्भ्रान्तलोके
यद्यप्येषा प्रसिद्धा जगति वसुमती कर्मभूमिः परन्तु;
किं कार्यं वाप्यकार्यं कथयति महितो यत्र विद्वत्समूहः॥३४॥

धर्माचारविचारसारगणना शिक्षादिदीक्षान्विता,
यस्यामाविरभूत्तथास्ति परतः सम्भावयित्री चिरम्।
सा काशी करुणामयी विजयते कर्माङ्कुरध्वंसिनी
विद्वद्वृन्दनुता गिरीशगिरिजाहृद्वल्लभा सर्वदा॥ ३५॥

यस्यां नीचतमा अशिक्षिततरा अप्यात्मवर्ग्यैस्समं,
श्रेयस्तत्त्वविवेचनादद्भुतधियो वादं वितन्वन्ति यत्।
कुत्रान्यत्र सुबुद्धिमत्सु मनुजेष्वालोक्यते श्रूयते
विद्वांसस्तदवेत्य सुस्थिरहृदो विख्यापयन्तु क्षणात्॥३६॥

यन्नामस्मरणेन शङ्करमनस्तोषोदयो भूरिशो,
या प्रत्यक्षपरीक्षिता क्षयकरी दुष्कर्मदुर्मेधसाम्।
गङ्गाहर्निशमीशसङ्गतिवशाद्यां नैव मुञ्चत्यहो
सा काशी गतिकाशिनी भवतु मे देहावसानक्षणे॥३७॥

कैवल्यसिद्ध्यैविदितैव गङ्गा, यस्यामभूत्सञ्चितपञ्चगङ्गम्।
सा काशिका तारकमन्त्रभूमिर्भवेदभीष्ट्यैमणिकर्णिकाङ्का।
दंदह्यमानो भवपापतापै रोगैस्सशोकैरिह सञ्चितैस्स्वैः।
क्रोडे त्वदीये विमले कदाहं,सुखेन निद्रां परमां लभेय॥३९॥
नि ज्ञायते कानि मया कृतानि,पुण्यानि जन्मान्तरकोटिमध्ये।
येषां प्रभावाज्जनुरत्र लब्धं, विद्यासदाचारपवित्रवंशे॥४०॥
यद्यप्यपास्ताखिलदोषकोशे, विप्रान्वये लब्धजनिस्तथापि।
बभेम्युपात्तैर्वृजिनैस्स्वकीयैः,काशी कथं स्वीकुरुतेऽघिनं माम्
मज्जन्म जातं भुवि पार्थिवाब्दे, वस्तुस्थितिः पार्थिवपूजया मे।
स पार्थिवःषष्टितमःप्रवृत्तो, मत्पार्थिवत्वं त्वयि लीनमस्तु ४२

विचित्रमेतद्ध्यविमुक्तकेऽस्मिन्,क्षेत्रे विमुक्ताःकृमयश्च कीटाः
भवेद्गतिःकाश्यजनस्य काऽस्य, त्वं वेत्सि वा वेत्त्वविमुक्तनाथः
रमापतिर्मे जनको जनेड्यः, पवित्रताग्र्या जननी गणेशी।
सर्गस्थितिप्राणवियोगयोगान्,यथापतत्त्वत्कृपया ममास्तु४४

शिशयिषुरहमीहे काशिके तावकाङ्के,
प्रविहितनिजधर्माचारहीनः प्रमत्तः।
जगति सुकृतभाजां रक्षकास्सन्त्यनेके,
परमघनिरतानामेकधात्री त्वमेव॥ ४५॥

अयि काशि! महाघनाशिनि! करुणाम्भोनिधितोषदायिनि।
भवती भव–तीव्रवासना-ग्रसितं मामवतादिहाधुना॥४६॥

पुरि! शङ्करवल्लभे! शुभे!
शुभकर्माचरणात्पराङ्मुखान्।
मनुजान्पतितान्निजाङ्कगान्,
कुरुषे चन्द्रधरान् गणावृतान्॥

सहस्रशो यत्र नराश्च नार्यो,
विहाय गेहं सकुटुम्बिवर्गम्।
भिक्षैकवृत्त्या निवसन्ति कालं,
प्रतीक्षमाणा निजमुक्तिहेतोः॥४८॥

यस्यां सतां माधुकरी सुभिक्षा,
मता महाराज्यसुखात्प्रकृष्टा।
तस्यां मनस्त्वं न निवेशयेत्को,
यस्यात्क्वचित्किञ्चिदपीह विद्वान्॥४९॥

यस्यां वसन्तो बहुशो धनाढ्या,
विहाय सौख्यं सुतवित्तपूर्णम्।
कर्मक्षयार्थं भसितादिभूषाः,
कौपीनवन्तो विचरन्ति नित्यम्॥५०॥

धन्या काशी वदान्या वितरति
सततं मुक्तिमेका विचित्रा,
सर्वेभ्यो जीववर्गेभ्य इह हि,
विसृजद्भ्यो निजासून् स्वदेहात् ।
गङ्गाधाराप्रवाहं कलयति
कवरे भाल इन्दुं करेषु,
शूलं ढक्कां पिनाकं परशु—
महिगणं वाहनार्थं महोक्षम् ॥५१॥

अयिकाशि ! विकाशिभिर्गुणै—
र्निजकारुण्यसुधामहोर्मिभिः ।
कृमिकीटपतङ्गपक्षिणः,
पशुनाथत्वमहो ददासि किम् ? ॥५२॥

हे काशि ! कैलाशपतेः प्रियासि,
महाश्मशानत्वमुरीकरोषि ।
ततस्त्वदानन्दवनत्वसिद्धि—
र्विमुक्तिदा चाप्यविमुक्तरूपा ॥५३॥

वन्यासि काशि ! वरणासि–नियन्त्रितापि,
मुक्तिं ददासि भुवि मुक्तकरप्रथाभिः ।
गङ्गा-महेश्वरसहायकभक्तियोगात्,
धन्या मृतास्त्वयि भवन्त्यमृतत्वभाजः ॥५४॥

( क्रमशः )



# प्रकृतिः

—❀—

श्रीयुत पं० गोविन्दाचार्यः, सुरपुरम्

अयि हन्त ! प्रकृते ! क्वासि त्वमधुना,

या किलैकदा निखिलविरिञ्चिसृष्टौ विसृत्वरीं स्वसुषमां प्रसार्य सरसकविताप्रपञ्चविपञ्चिकामुल्यतन्तुरिव सकलकविपुङ्गवानां कलं मुखरयतिस्म— या चाश्रयाशमैकनिधीनां मुमुक्षूणां–सैव सम्प्रति हतविधिविलासमहिम्ना कृत्रिमताव्याधिसंक्रान्ता दिने दिने कार्श्यमासाद्य नाममात्रावशिष्टा । न कोप्यधुना वाञ्छति स्वाभाविकं सौषम्यम् । सर्वेऽपि कृत्रिमप्रियाः समभिलाषिणो वैश्वामित्रीं सृष्टिं परायणेव मन्वते च चन्दनादिसुरभिशीतलतरुभिर्वानस्पत्य—वनस्पत्यादिश्रेष्ठनानाऽनोकहषण्डैर्मण्डितेभ्योऽपि वनेभ्यः केवलमापाततो रामणीयकैरवकेशिभिर्गन्धविधुरैरावृतान्युपवनानि । स्वैररोहिणोऽपि तरुवल्लरीं सस्यादीन् स्वारामेषु सङ्कर्त्य पाश्चात्योपवनयितुं समीहन्ते । अत एव नीरसकुसुमलतासु मधुपायिनो नैव 'झं' कुर्वन्ति–नाऽपि इतरे तत्र कविवर्णिता विहंगा विहरन्ति । आरामान्तर्वर्तितडागेष्वपि न कमलानि विकसन्ति–नाऽपि चक्रवाकदम्पती रमेते । राजहंसाद्याः पक्षिणास्तु कर्णविवरान्तर्वर्तिन एव; यदि ते स्वैरं सञ्चरेयुः कलञ्च गायेयुः, मनोहारिविहारञ्च प्रदर्शयेयुः स्वान्–कठोरहृदया व्यापाद्य हतोदरम्पूरयन्ति । केचित् कृपालवोऽपि तान् प्रयत्नशतेनापि प्रसह्य बध्नन्ति टङ्केषु । तर्हि कथं नु दीनदीना विहंगमा एतादृङ्नीरसलोककुलसङ्कलितेऽस्मिंल्लोकेऽवलोकयेरन् । इदानीं ये केऽपि कामपि कवितां ग्रथितुमीहन्ते चेत् तेषां पूर्वे कवय एव शरणीकरणीयाः तत् कवितात एवोद्यानपक्ष्यादिवर्णनादीनपहृत्य काचन कविता रचनीया भवति, न तु स्वातन्त्र्येण–प्रकृतिसुषमायाः सम्प्रति प्रत्यक्षाभावात् । ... दृश्यतेदानीं शाकुन्तले—दुष्यन्तचक्रवर्ती अनेकधा

सुप्रभातस्यान्यतम-संरक्षकाः



श्रीकाशीक्षेत्रविराजमान-श्रीजगद्गुरु विश्वाराध्य-सिंहासनाधीश्वर

श्री १०८ जगद्गुरु पंचाक्षरशिवाचार्य महास्वामिनः

भूपतियोषाविशेषशतशातमनुभवन्नपि वल्कलमात्रं वसानां निसर्गसुन्दरीं वन्यां शकुन्तलां वरितुकामोऽटव्यामटीकत। तामवलोक्य च प्रकृतिमेवं स्मरति —

"सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् । इति —

एवमेवासकृदाश्रमाश्रयिणां मृगाणां स्वच्छन्दविहरणमप्युपवर्णितम् । प्रकृते तु—

इमामेव प्रकृतिशोभां विस्मृत्य—अल्पायुषोऽल्पशक्तिमन्तश्च संवृत्ता जनाः । नेदानीं कोऽपि प्रायः पञ्चाशदायुःसीमानमुल्लङ्घते। तावदायुष्मतोऽपि प्राक्तनपुरुषवत्तास्य गात्रं सुदृढं इन्द्रियाण्यपि स्वस्थकार्यकरणे नालङ्कर्मीणानि । पादौ तु गव्यूतिमात्रमपि सञ्चरितुं न प्रभवतः। अक्षि च पञ्चवर्ष एव उपनयनं ( चश्मा ) अपेक्षते। दन्ता अपि शिथिलाः पलितितेऽपि वयसि। सर्वस्यास्यास्यानर्थजातस्य—पाश्चात्येभ्यस्तद्गुणानसंगृह्य, केवलं वेषभूषाभाषण-व्यवहारादिकमुपादाय स्वहस्तेनैव स्वाक्षिस्फोट्यते भारतवर्षीयैः ।

ललनास्वप्ययं साङ्क्रामिकगदाघातो दरीदृश्यते। ताश्च स्वसौन्दर्याधायकभ्रामरकवेणीं कामं विकर्त्तयन्ति,सुरभिसुभगहरिद्रादिकेषु कृत्रिमपरिमलपिष्टानि(FacePowder) आदेशयन्ति। किम् बहुना;सर्वतोमुखेन स्वनैसर्गिकं स्त्रीत्वं विधूय पुरुषन्ति । स्वकुलमर्यादां तिरस्कृत्य स्वैरं सोपानत्कपादाः प्रत्यदूध्वमतन्ति। पुरुषेभ्यः स्वापत्रपां वितीर्य तदीयशौर्यवीर्यादिकं विनिमय्य अध्यापिकादिपदवीमधिरूढाः स्वयं सम्पाद्य पतिपुत्रादिकुटुम्बं परिपोषयन्ति । एवमेव सर्वस्मिन् विकलेजगत्यामपि ऋतुधर्मस्य दारिद्र्यस्य च महान् विनिमयः प्रतिपदमालक्ष्यते ।

यावत्पर्यन्तं भारतीयाः प्रकृतिसमाराधका न भवन्ति तावत्पर्यन्तमस्य भारतवर्षस्य समुन्नतिर्दुर्भिक्षाचिरजीविनी । अतः इदमेव सर्वैरपि नेतृभिः सर्वतः प्रथमं लोके प्रचारणीयं तत्कृते च स्वयं प्रयतितव्यम्। वैदेशिका अप्यास्माकीनां प्राक्तनपद्धतिं सोत्कण्ठं प्रशंसन्ति—केचिदाचरन्ति च । वयन्तु सन्त्यजाम इति—पौलस्त्यस्य "कालस्य कुटिला गतिः" इत्युक्तिः स्मृतिपथीना भवति ।



# वैदिकवाङ्मयस्य क्रम-विकाशः ।



साहित्यस्योत्पत्ति-विषये तात्त्विक-विचारवतामनेक—विदुषामनेका अकाट्य—सिद्धान्त—सम्वलिताः सम्मतयो दृश्यन्ते । कतिपय आचार्य्या बौद्धिकविकासे क्रमिक-पक्षमालम्बन्ते । संघर्षद्वारा मनुजानां मस्तिष्के बौद्धिक-प्रवाह आविर्भवतीत्यामनन्ति ते । अज्ञानावस्थातो ज्ञानावस्थायां

क्रमशः प्रवेशेनैष एव सिद्धान्तः परिपुष्टो भवति सम्भवतो विचारमेतमेव कश्चित् कविराह-"ज्ञानं नान्यत् किञ्चित्; किन्तु विस्मृत-वस्तुनो बुद्धौ स्मरण-भाव एव ज्ञानम्" देशः, कालः, अवस्था, सत्संगश्च बौद्धिक-विकासस्य करणम्, किन्तु मानव-मस्तिष्के बुद्धि-तत्त्व आरम्भत एव पूर्णरूपेणस्तिष्ठति, तथा

पूर्वोक्ता देश—कालादयो भूयस्तदवयवव्यञ्जका एव सन्तीति। अहमपि चैतत् सिद्धान्तानुसारेणैव प्रकाश—पातं वाञ्छामि।

सृष्ट्यादौ सर्वे प्राणिनः स्वीयेच्छाशक्त्या स्वीयमानसिक-भावानुक्त्वाऽन्येषु प्रकटी-करणं चिकीर्षव आसन्। इदमेव हि भाषाया उत्पत्तौ मूलम्। एतस्य क्रिया-कलापोपयोगो हि साहित्यस्योपजीव्योऽभुत्। मानव-शरीरे यदा बौद्धिक-विकासस्य कार्यम्प्रचचाल, तदैव मानसिकविकासोऽपि तदुन्मुखं प्रत्युद्गतः यतो हि मोह-प्रेम-राग-घृणादयश्च ये मनसः प्रबलतमा गुणाः सन्ति; ते शारीरिकीं बौद्धीञ्च क्रियां युगपत् सहैवाऽतिरञ्जितां कुर्वन्ति। एतत् संघटनमेव साहित्यस्य शरीरमस्ति।

अति-प्राचीन-समये वैदिक-साहित्यं सर्वोच्च-कोटौ देदीप्यमानमास्थत्, तत्र दृष्टिपातेन संकेतः प्राप्यते यत् साहित्यस्य परिपोषिका बौद्धिक—मानसिक-भावानां सम्मिश्रणाद् नान्या काचित् प्रक्रिया। वीर—शुचि-विद्वद्-धनवद्-विश्वविजेत्रादि भवनयोग्यतापूर्ण-भावाः प्रत्नानामार्याणां जन्म-सिद्धा मानसिका भावा आसन्। क्रमश उत्तरोत्तरं तेषां स्वान्ते बौद्धिक-विकासाभिलाषः प्रवर्द्धमानो दृष्टोऽभूत्। अत एव वेदे "आ ब्रह्मन्! ब्राह्मणो-ब्रह्मवर्चसी जायताम्, आराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्, दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्ध्रिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्" एतादृशैर्वाक्यैः स्वोद्देश्यपूर्त्यै पुरातनैः कृतेशप्रार्थना दृश्यते।

देश-कालावस्थानुसारेण मानसिक-भावान् खण्डविवाद एकैकशः कृत्वा नवरसान् व्याञ्जिजत् संकीर्णता, स्वार्थ परायणता, स्वाभाविक-रुचिश्च वर्तमान-साहित्य-परिपोषिका अभूवन्। सुख-समृद्धि काले शृंगारः, वैराग्यस्य, त्यागस्य, संन्यासस्य काले विरक्तेः प्रधानकारणं निर्वेदः।

पुनश्च पुरातनानां मानसिक-भावस्य स्वार्थ परतया बौद्धिक-विकासस्य विरागेण च (भक्तिसम्प्रदाय-परिचायकेन) निहित-सकाम-निष्काम भक्ति-मूलाः साहित्य- ग्रन्था निर्मिता जाताः।

मानसिकशक्तौ स्फूर्ति-लाभाय क्रीडया (मनोरञ्जन-जनिकया) स्वाभाविकीं सम्भवित्रीमिन्द्रि यतृप्तिम्पुरस्कृत्य संगीत-शास्त्रं आर्या निरमासुः इदमेव नादशास्त्रमपि कथ्यते, एतद् विषयकं भरतमुनेर्नाद-शास्त्रनामकोऽतिप्राचीनोऽमूल्यो ग्रन्थ मणिः। भक्ति—सम्प्रदायकीर्तन-प्रथामूलकेऽ ग्रन्थे वैदिकस्य इन्द्रियोपासनाः सर्वांशैः प दर्शिताः।

मानव-प्रकृतिः सहजोद्भूत-शक्त्या प्रमोदाऽऽमोदविनोदानां कृते प्रति-पदार्थं चमत्कारम धिकं वाञ्छति। चमत्कारो मनसाऽऽत्मानं व यति। स एवाऽनेकधा भूत्वा मानव-जीवनं स ज्ज्वलयति। साहित्ये कलायाः पूर्णतो विका मपि चायमेव करोति। यथाक्रमं मानसिकैर्बौद्धि कैश्च भावैर्युतो (सम्बलितः) भूत्वा भौति माध्यात्मिकीं चोन्नतिम्प्रत्युद्गतो भौतिकमाध्या त्मिकञ्च साहित्यं निरचीवृतत्। अमुष्य फलस्व ज्योतिषशास्त्रमुत्पद्य पुनस्तत् सिद्धान्तसंहिता हो नाम्नीषु तिसृषु शाखासु विभक्तं जातम्!

मनुष्यः स्वार्थ-पूर्णः प्राणी विद्यते, अस

स्वार्थ-परताया भावो ज्योतिषेऽपि स्फुट-रूपेण दृश्यते। इमां स्वार्थ-परतामेव वास्तविकीं कुर्वाणा आर्याः फलितं होरा-शास्त्रञ्च प्रातिष्ठिपन्। किन्तु वैदिकं क्रिया-कलापं सम्पादयितुं सिद्धान्तस्य परमावश्यकताऽविकलरूपेणाऽऽस्थात्। ऋतूनां, पूर्णिमामावास्ययोः, ग्रह-नक्षत्राणां ज्ञानञ्च सिद्धान्तेनैव कर्तुं पार्यते। यद्यपि ग्रहण-ग्रहद्युति-चन्द्र-सिंहोन्नत्ययनांशादयः शुद्धचमत्कार-विषयास्तथाप्यार्याश्चैभिः सह धार्मिकं क्रिया-कलापं सम्बध्य सिद्धान्त-ग्रन्थानपि धर्मग्रन्थ-शब्देनैव व्याहार्षुः। अत एव ज्यौतिषस्याऽपि वेदाङ्गत्वेन व्यवहारः।

बहुविधैर्नियम-बद्धैरुच्चारणैर्मनसि यावानामोदो रुचिरो विस्तीर्णश्च बोभूयते, न तावानेकविधेनोच्चारणेनाऽनियतेन जटिलो लोकप्रियो वा भवितुमर्हतीति सिद्धांतीकृत्यायुर्वैदिक—साहित्ये बृहत्युष्णिहादीनि छन्दांस्याविष्कृतानि। विकासवादस्यानयैव विचित्रतया छन्दः-शास्त्रं प्रादुरभूत्। (यद् वर्तमान-साहित्य-ग्रन्थानाम्प्रधानाङ्गपदमलङ्करोति)।

यथाकालम्प्रवृद्धासु कलकल-वाहिनीषु सरित्सु प्रचण्ड—पवन—तीव्र-सञ्चारोद्भूतास्तुमुलतरंगा आविर्भवन्ति, तादृगेवाऽऽनन्दसम्वलितेऽन्तस्तले बौद्धिक—विकासस्य द्रुत गति—सञ्चारेऽणाऽलंकारशास्त्र (Rhetoric) मपि प्रादुरभूत्। तथेदमलंकार-शास्त्रं कल्पनाऽऽधारकं सुदृढं मानसिक-राज्यं स्थापयामास। येन वैदिक-कालात् पतनोन्मुख-हिन्दू-काल-पर्यन्तं साहित्यस्य विजय-वैजयन्ती निर्भीक-रूपेणोड्डीयमाना (विराजमाना) चास्यत्।

उपर्युद्धृत क्रमेणाऽलंकार-शास्त्रस्य जनकस्य बौद्धिक-विकासस्याऽलंकारशास्त्रस्य च कृते स्मरण-शक्तेर्निरन्तरमतिवेलमावश्यकता प्रतीयते। साहित्ये यथास्थानं यथा-कालं सौन्दर्य विकासोऽप्यलंकारैणैव पूर्णतो जागर्त्ति। साहित्य-सुषमा-सरसता-विकासे उपयुक्ताऽनुपयुक्तानामनुकूल-प्रतिकूलानाञ्चावश्यकोपकरणीभूतानां शब्दानां पूर्त्तिर्यथा-नियमं शब्द-संग्रहेणैव भवितुं शक्नोतीतीमं लक्ष्यमभिमुखीकृत्य वैदिक-कालएवाऽऽर्या व्यरीरचन् निघंटुम् (शब्दकोषम्)। शब्दानां रूपाणां सर्वदा शुद्ध्यै निर्णीत-सिद्धान्तस्य नियम-भङ्गऽभावाय, तत्सत्तायाः समानरूपेण स्थित्यै, मलिनताप्रवाहाऽभावरोधाय, स्वकीय-भाषायाः पुष्ट्यै च पूर्वतरा आर्या व्याकरण-शास्त्रं निरमासुः। सामाजिक-विकासस्य तीव्रगत्या क्रमशो वृद्ध्या मनुष्याणाम्भाषा परिवर्तत इत्यपि न विस्मर्तव्यम्। अत एव बौद्ध-काले प्राकृतस्य प्रसारो वैदिक काले संस्कृतस्य विपुल-प्रचारोऽद्यत्वे हिन्दी भाषायाश्च प्रबलतरा स्फुरणा। एतद्दशायां स्वकीयानामात्मनीनानाम्पुरातनकथानां कृतीनां च विस्मरणं स्वाभाविकं बोभूयते। पुरातनीं स्वीयां भाषामवगन्तुं तत्कालीनं व्याकरणमेवैकमात्रं साधनम्। साहित्यस्य प्रधानरक्षकं व्याकरणस्य, काव्यस्य, कोशस्य; छन्दसाञ्च परस्परं संग्रन्थनमेवाऽस्ति, एषां रक्षकाणां सहायतयैव मदीयं साहित्यं संसारस्यानेकत्र क्षेत्रेषु निर्भीकं राज्यं शास्ति। साहित्यिकानाम्परिचयायैषां ग्रन्थानां मननमत्यावश्यकम्।

मानसिकैर्बौद्धिकैश्च भावैः साहित्यं जीवात्मानमाध्यात्मिकीमुन्नतिम्प्रत्यग्रेसरं करोति अस्य महतो महतः साहित्य-शास्त्रस्यान्नती प्रतानाम ... णामवाऽ-

स्ति यत्नः । यैः प्रदर्शिते पथि विचरन्तो वयमप्यग्रिमा स्मः । यदा सर्वः संसारोऽज्ञानान्धतिमिरे, मोह-गर्ते ममतावर्तेऽसभ्यता-निद्रायां, प्रबलो-द्वेग-जन्याऽसन्तोष-क्रोड़े विलीन आस्थत्। तदानीं विश्व-वन्द्या विज्ञान-महारथाः, साहित्यराज्यसम्राजो महर्षि-पदवीकाः प्राचीना आर्य्याः सकल-ललित-कला-विभूषितं वैदिक-साहित्यं हस्ते कृत्वा संसारस्य मानसिक-जीवनं मानव-जीवनं लोक-प्रियं तद्रहस्यञ्च प्रकाशितं सफलं च निर्मातुं सतत-प्रयत्नवन्तोऽग्रेसरा आसन्। एतर्हि पाश्चात्याः प्रधान-विद्वांसोऽपि "संसारे हिन्दूनां ( आर्याणाम् ) प्राचीनतमं वैदिक साहित्यं सर्वश्रेष्ठमस्तीति" मुक्त-कण्ठतः स्वीकुर्वन्त्यामनन्ति च नितरां तद्दित्यलम्प्रपञ्चविपञ्चीविलासेन ।



# विद्वद्वरेण्यदार्शनिकवैज्ञानिकवैद्यादिसेवायां सविनयप्रणति निवेदनम् ।



सर्वेष्वपि भारतीयदर्शनेषु ( सांख्यवैशेषिकादिषु, वैदिकदर्शनेषु, बौद्धजैनादिषु तदितरदर्शनेषु च ) सर्वमपि दृश्यमिदं जगत् पञ्चभूतविकारमयमेवेति पञ्चभूतान्येव सर्वेषां दृश्यपदार्थानामुपादानभूतानीति सिद्धान्तः सर्वसंमतः प्रस्थापितो दृश्यते; तथा आयुर्वेदस्यापि तदभिमतानां त्रिदोषाणां पञ्चभूतान्येवोपादानानीति विद्यते सिद्धान्तः । परमाधुनिका वैज्ञानिकास्तन्मतानुयायिनः पाश्चात्यचिकित्सकाश्च पञ्चभूतेषु केषांचिद्यौगिकत्वं कस्यचिच्छक्तिरूपत्वं च मन्यमानाः न तानि सृष्ट्युपादानानि मूलभूतानि द्रव्याणि, किन्तु 'एलिमेन्ट'संज्ञकानि द्विनवतितत्त्वान्येव सर्वेषां दृश्यपदार्थानामुपादानभूतानीति प्रभापन्ते, आयुर्वेदस्तम्भभूतास्त्रिदोषा अपि काल्पनिका एव, न प्रत्यक्षप्रमाणसिद्धा इति च संगिरन्ते । तदेवं पञ्चभूतानाममूलभूतत्वे वातादीनां च काल्पनिकत्वे दर्शनशास्त्रकाराणामायुर्वेदप्रणेतॄणां च महर्षीणां भ्रान्तत्वं पञ्चभूतत्रिदोषसिद्धान्तयोश्चावैज्ञानिकत्वं समापद्यते । पाश्चात्यविज्ञानेऽपि प्रतिदिनमाविर्भवन्ति नवनवानि मतानि, त्यज्यन्ते च प्राचीनानि । दृष्टतरैः खण्ड्यमानं त्रिदोषसिद्धान्तं पाश्चात्यविज्ञानेन सह समन्वयं विधाय नानारूपेण समर्थयत्सु वैद्यवर्येषु दृश्यन्ते विभिन्नानि मतानि । एवं विभिन्नवादिभिराकुलितं त्रिदोषसिद्धान्तमैकमत्येन पुनः प्रस्थापयितुं नासिकक्षेत्रे १९८५ तमे विक्रमाब्दे संपन्नस्य १९ तमवैद्यसंमेलनस्य स्वागतकारिण्या समित्या त्रिदोष विषये सर्वोत्तमनिबन्धलेखनार्थं पञ्चशतरूप्यकमितं पारितोषिकमुद्घोषितं, तदनन्तरं पनवेलग्रामे महाराष्ट्रीयवैद्यानां त्रिदोषचर्चापरिषदपि १९९०

विक्रमाब्दे संपादिता । तथाऽपि नायं विषयः केवलं महाराष्ट्रीयवैद्यानामेव, अपि च त्रिदोषयाथातथ्य-निर्णयात् पूर्वं तदुपादानभूतपञ्चभूतनिर्णयोऽपि परमावश्यक इति पञ्चभूतत्रिदोषचर्चा, तथा आयुर्वेदीयशारीरनिदानादिप्रतिसंस्कारं, नवाविर्भूतानां रोगाणां भेषजद्रव्याणां चायुर्वेदे संग्रहं चाधिकृत्य सर्वेषामपि भारतीयविदुषामेका परिषत् श्रीकाशीक्षेत्रे संपादनीयेति सर्वभारतीयवैद्यानां मतमभिलक्ष्य १९ तमवैद्य-सम्मेलनस्वागतकारिण्या तथा कर्तुं निश्चयो व्यधायि । तदनुसारमागामिनि ऑगष्टमासे भगवतो धन्वन्तरेर्जन्मभूमौ संस्कृतविद्यायाः पीठभूते च श्रीकाशीक्षेत्रे श्रीहिन्दुविश्वविद्यालये पञ्चभूतत्रिदोषादीनां संधाय-संभाषया तत्त्वनिर्णयार्थमष्टाहव्यापि विद्वत्परिषदधिवेशनं भविष्यतीति सानन्दं विज्ञाप्यते । नायं वैद्यानामेव विचार्यो विषय इति अत्र दार्शनिकाः, वैज्ञानिकाः, प्राच्यपाश्चात्यचिकित्साशास्त्रनिष्णाताश्च निमन्त्रिताः सन्ति, ते च सम्मिलिताः सन्तः संधायसंभाषया तत्त्वनिर्णयं विधास्यन्तीत्याशास्यते । अस्याः परिषदो द्वौ विभागौ भविष्यतः—एका पञ्चभूतचर्चापरिषद्, द्वितीया त्रिदोषादिचर्चापरिषदिति । तत्र प्रथमायाः पञ्चभूतपरिषदोऽध्यक्षस्थानं काशीहिन्दुविश्वविद्यालये प्राच्यमहाविद्यालय—( Oriental College ) प्रधाना महामहोपाध्यायाः **श्रीप्रमथनाथतर्कभूषण**-महोदया समलङ्करिष्यन्ति, द्वितीयायास्त्रिदोषादिचर्चा-परिषदश्चाध्यक्षस्थानं प्रथितयशसो महामहोपाध्यायाः कविराजश्रीगणनाथसेनसरस्वती एम्. ए.; एल्. एम्. एस्. महोदया मण्डयिष्यन्ति । अस्यां परिषदि वादिप्रतिवादिद्वारा जायमानस्य वादस्य निरीक्षका अपि भारतप्रथिताः स्वस्वविषयपारदृश्वानः केचन दार्शनिकाः, केचन वैज्ञानिकाः, केचन वैद्याः, केचन दक्षतराश्च भविष्यन्ति ।

श्रीमन्तोऽप्यस्यां परिषदि यथावसरं समागत्य तत्त्वनिर्णयसाहाय्यं कुर्वन्तु, स्थापनापक्षं खण्डनपक्षं वा ग्रहीष्यन्तीति च विज्ञापयन्तु मन्त्रिण इति च सादरं विधीयते सर्वविधविद्वत्सु प्रार्थना ।

निमन्त्रणपत्रेणानेन सहैव प्रेष्यमाणां विचार्य-विषयसूचीं समवलोक्य, प्रतिविषयमग्रे स्वाभिमतं विलिख्य एकमासादर्वाक् सा प्रतिप्रेषणीया मन्त्रिणः समीपे । अस्यां परिषदि कं कं विषयं भवन्तः स्थापयिष्यन्ति, प्रतिषेधयिष्यन्ति वेत्यपि निवेदयितव्यः सहैव मन्त्री ।

परिषत्समये विवदिषुभिर्यावच्छक्यं स्वाभिमतं सप्रमाणं नातिसंक्षेपविस्तरं लिखित्वैव समानेतव्यम् ।

अस्याः परिषदः कार्यनिर्वाहार्थमेका कार्यकारिणी ( स्वागतकारिणी ) समितिरपि अधोलिखितनाम-धेयानां महोदयानां संस्थापिताऽस्ति ।

**अध्यक्षः**—परममाननीयो महामनाः पण्डितः श्रीमदनमोहनमालवीयमहोदयः ।

**उपाध्यक्षः**—कविराजश्रीप्रतापसिंहः रसायनाचार्यः ( काशी )

**प्रधानमन्त्री**—वैद्य यादवजी त्रिकमजी आचार्यः ( कालबादेवीरोड, बंबई ) ।

**सहायकमन्त्रिणः**—कविराज श्रीमानुपेन्द्र-नाथदासः, काव्य-व्याकरण-सांख्यतीर्थः ( सदरबाजार, पहाडीधीरज, दिल्ली ) ।

„ वैद्यभूषण वामनशास्त्री, दातारः (नासिक)।

„ दुर्गादत्तशास्त्री, आयुर्वेदाचार्यः (मारवाडी हिन्दुहोस्पिटल, काशी)।

„ कविराज श्री सुरेन्द्रमोहनः B. A. (दयानन्द आयुर्वेदिक कालेज, लाहोर)।

**सभासदः**—पं० श्रीहरिनाथशर्मा शास्त्री दर्शनाचार्यः।

„ डॉ. भास्कर गोविंद घाणेकरः, आयुर्वेदाचार्यः B. Sc, M. B. B. S.

„ वैद्य दत्तात्रेय अनन्त कुलकर्णी आयुर्वेदाचार्यः M. Sc.।

प्रभृतयः।

## विद्वत्परिषदो नियमाः।

१ अस्यां परिषदि निमन्त्रितानां संधायसंभाषया तत्वनिर्णयार्थमुपस्थितानां विदुषामेव प्रवेशो भविष्यति, नान्येषां दर्शकानां संवाददातॄणां वा।

२ अस्याः परिषदः कार्यविवरणं (रिपोर्ट) मन्त्रिण एव निरीक्षकाणामध्यक्षाणां च स्वाक्षरसहितसंमत्या प्रकाशयिष्यन्ति, अन्यैस्तु सभ्यैः स्वतन्त्रतया न किञ्चिदपि कार्यविवरणं संवादपत्रादिषु पुस्तिकारूपेण वा प्रकाशनीयम्।

३ अस्यां परिषदि वादसमये विगृह्यसंभाषायां प्रवृत्तायां तां निरोद्धुं सभापतिमहोदयाः समर्थाः स्युः।

४ अस्यां परिषदि संधायसंभाषया जातं वादं निरीक्ष्य निरीक्षकमहोदयाः सिद्धान्तं प्रस्तावरूपेण स्थापयिष्यन्ति। स एव सिद्धान्तः सर्वसंमत्या बहुसंमत्या वा स्वीकृतो भविष्यति।

५ पूर्वं कमप्यात्मविषयं वादी स्थापयिष्यति, ततः प्रतीवादी तं खण्डयिष्यति, वादी तमेव दूषणोद्धारपूर्वकं द्रढयिष्यति, वादिनः प्रतिवादिनश्च सभापतिनिरीक्षकानुरोधावध्येव खण्डनप्रतिखण्डने प्रभविष्यन्ति, न ततः परम्।

निवेदकौ
मदनमोहनमालवीयः।
यादवजी त्रिकमजी आचार्यः।

## पञ्चभूतचर्चापरिषदि विचारार्हा विषयाः।

१ पञ्चमहाभूतविचारप्रयोजनम्।

२ भूतलक्षणं (किं नाम भूतत्वम्?)।

३ भूतानामेकैकेन्द्रियार्थाश्रयित्वम्, अनेकेन्द्रियार्थाश्रयित्वं वा?।

४ भूतस्वरूपगुणधर्मादीनां विवेचनम्।

५ भूतसंख्याविमर्शः।

६ भूतानां सादित्वम्, अनादित्वम्, उभयत्वं वा?, सादित्वं चेत्तदुत्पत्तिः सक्रमा अक्रमा वा?।

७ गुणेभ्यः कारणान्तरेभ्यो वा भूतानामुद्भवप्रकारः कः?।

८ भूतानामितरेतरव्यवकीर्णत्वं कथं संपद्यते?।

९ भूतानां सृष्टिकारणत्वं कीदृक्?।

१० परिणामारम्भक्रिययोर्विशेषः।

११ दृश्यानां पृथिव्यादीनां भूतत्वं न वा?।

१२ एलिमेन्टसंज्ञकानां द्विनवतिसंख्यकानां प्रतीच्यरासायनिकैर्मूलतत्त्वतयाऽङ्गीकृतानां भूतत्वं न वा?।

१३ इलेक्ट्रोनप्रोटोनसंज्ञकयोर्भूतत्वं न वा ? ।

१४ परमाणुतन्मात्रयोर्विवेचनं, तयोर्भेदो वा अभेदो वा ? ।

१५ द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदो वा, गुणसमुदायत्वेन तदभेदो वा ? ।

१६ तेजसो द्रव्यत्वं न वा ? ।

१७ आकाशस्वरूपविमर्शः । स भावरूपोऽभावात्मको वा ? भावत्वेऽपि तस्य सावयवत्वं निरवयवत्वं वा ? सावयवत्वं चेत् के नाम तदवयवाः ? किमाकाशलिङ्गम् ? शब्दः अवकाशो वा ? ।

१८ पञ्चमूलभूतेभ्य एकैकमहाभूतानामुद्भवः कीदृशः ? ।

१९ ईथराख्यस्यास्तित्वं चेत् तस्य कुत्रान्तर्भावः ? आकाशे तेजसि वायौ वा ? कथं च सः ? ।

२० मनुष्यादिशरीरेषु चैतन्यमात्मजन्यं पञ्चभूतादिसंयोगविशेषजन्यं वा ? ।

## त्रिदोषादिचर्चापरिषदि विचारार्हा विषयाः ।

१ त्रिदोषविचारप्रयोजनम् ।

२ वातादीनां दोषत्वं, धातुत्वं, मलत्वं वा ? त्रिविधत्वमपि चेत्तद् विरुद्धमविरुद्धं वा ? ।

३ दोषसंज्ञायां हेतुः ।

४ कथं त्रय एव दोषाः ? ।

५ वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वा ? ।

६ वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वं वा ? ।

७ किं वातादीनामुपादानम् ? उपादानात्तेषामुत्पत्तिक्रमश्च कीदृशः ? ।

८ वातादीनां गुणाः कर्माणि च ।

९ वातादीनां स्वरूपं, तेषां प्रत्येकशः पञ्चविधत्वं वास्तविकं काल्पनिकं वा ? तथा तत् स्थानकार्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा ? ।

१० वातादीनां रोगकारणत्वं कीदृशम् ? तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम् ? ।

## अन्ये विचारार्हा विषयाः ।

१ नवाविर्भूतानां रोगाणामायुर्वेदे संग्रहप्रयोजनविचारः ।

२ नवाविष्कृतानामुपयोगिनां भेषजद्रव्याणामायुर्वेदे संग्रहप्रयोजनविचारः ।

३ आयुर्वेदीयशारीरनिदानादिप्रतिसंस्कारप्रयोजनविचारः ।

४ उभयोरपि परिषदोरन्येऽपि ये केचन विषयाः सभापतिमहोदयानामनुमत्या समुपस्थापिता भवेयुः ।



* श्री सनत्कुमाराचार्य्या विजयन्तेतराम् *

विकासके सज्जनकैरवाणां विग्लापके दुर्जनपङ्कजानाम्।
श्रीचन्द्रचन्द्रे परिवीततन्द्रेऽचिरं चकोरत्वमुपैतु चित्तम्॥

श्रीमतां निग्रहानुग्रहगृहीतविग्रहाणां सदाचारविचारोभयचामरोपचरितस्वान्तानां प्रणतजनापहृत स्वान्तध्वान्तानां अवधमण्डलमण्डनमठाधीशाधीश्वराणां संस्कृतसाहित्य-प्रचारबद्धपरिकराणां छात्रकल्पद्रुमाणां निखिलशास्त्रा-साधारणधीषणानां श्रीसाकेतस्थरानोपाली-मठाधिपतीनां

## श्री १०८ पण्डितवर्य बाबा केशवरामश्रौतमुनीनां

अविनाशिकाशीस्थ—श्रीसंस्कृतसाहित्यसमाजे

# अभिभाषणम्।



अयि श्रुतिलवलीलवलीनमधुव्रताः! अदभ्रप्रज्ञाः! विज्ञाः!!

विदितमेव तत्र भवतामैतिह्यपारङ्गमानां यत् चिरजीवितसाहित्यैव जातिर्जातिसंकलने कलयति पदं सर्वतः प्राथम्येन, यस्या जातेः साहित्यसिन्दूरं दूरीभूतं, अभव्यवैधव्यदुःखिता सा कियच्चिरं जीविष्यतीति स्वयमेव सुधियो विभावयन्तु। हिन्दुजातिसंस्कृतसाहित्यसंरक्षणावश्यकतामनुभवद्भि-स्तत्रभवद्भिर्यत् संस्कृतसाहित्यगवेषणेषणया समाजः संस्थापितः तं श्रावं श्रावं दर्शं दर्शञ्च मे मनसि महानानन्दसन्दोहः समजनि।

सर्वा दिशः स्वसाहित्यसौरभेण सौरभयितुं पत्रमेव प्रधानं साधनमिति नाऽविदितं तन्मर्मज्ञानां तां शैलीं परिशीलयद्भिर्यज्जात्यभ्युदयसुप्रभातं सुप्रभाताभिधं पत्रं प्रकाश्यते इत्यपरं स्वर्णसौरभम्।

अष्टाशीतिसहस्रजटिलवालखिल्यमहर्षिजटाप्रभापिशङ्गितं सुप्रभातमिव परस्सहस्रश्रौत-मुनिदत्तहस्तावलम्बनं सुप्रभातमपि नोऽभ्युदये सुप्रभातायतामिति भृशमभ्यर्थयेऽस्ततन्द्रं भगवन्तं श्रीचन्द्रम्।

मोमुद्यमानद्विजसंघघोषैः, निःशोककोकैरभिपूजितञ्च।
नैजांशुसंघर्षितकौशिकौघं भव्याय भूयात् भुवि सुप्रभातम्॥

श्रावणशुक्ला नागपञ्चमी, सम्वत् १९९२।

श्रीमतां शुभचिन्तकः—
**श्रीमहन्त पं० बाबा केशवरामोदासीनः**
श्रीरानोपाली (अयोध्या)

* महाशक्तिः सुप्ता भजतु परिबोधं भगवतो *

श्रीमतां सर्वमान्यानां शिष्य-प्रशिष्य-राजन्यवर्ग-वन्दित-पादपद्मानाम्, श्रीमन्महर्षिवशिष्ठप्रवर्त्तितौदासीन-सम्प्रदायाभ्यर्हित-सिंहासनाधिष्ठितानाम्, पदवाक्य-प्रमाण-पारावारीणोदासीनवर्य्य-नैष्ठिकब्रह्मचारिणाम्, अयोध्यामण्डलान्तर्गत-रानोपाली-मठाधीश्वराणाम्

## पण्डितप्रवर बाबा केशवरामोदासीनमहोदयानाम् पाणिपद्मयोः

# शुभाभिनन्दनम् ।

अयि श्रीमन्तो महानुभावाः मोहान्त-महोदयाः !

श्रीमतां सदाचारेण विद्वद्वृन्दाभिवन्दितवैदुष्येण तपःप्रभावपवित्रीकृत-शिष्य-प्रशिष्यमानसतया सनातनधर्ममर्य्यादासंरक्षण-परायणतया, नैष्ठिकब्रह्मचर्य्येण,भारतीय-प्राचीन-संस्कृतिप्रचारप्रेम्णा, प्रिय-पथ्य-स्पष्ट-मधुरभाषितया च चिरपरिचितोऽयं काशीस्थप्रसिद्धविद्वत्समुदायसमधिष्ठितो विश्वविदितः श्रीसंस्कृत-साहित्यसमाजः, काशीस्थ-विज्ञजनविराजितायामस्यां सदसि—

श्रीमतां विद्यातपोव्रतयमनियमाद्यष्टाङ्गयोगपरिपूतमानसानां वर्तमान-वैदेशिकसभ्यतासंचार-विदूषितान्तःकरणेष्वपि मनुजसमाजेषु स्वीयदृढ़-सदाचार-तपोव्रत-ब्रह्मचर्य्येण प्रसह्य धार्मिकभावमासजतां विप्रवंशावतंसानां प्राचीनतममयोध्यामण्डलस्थ-रानोपाली-मठाधिष्ठितमुदासीनसम्प्रदायाभ्यर्हितं सिंहासनमलङ्कुर्वतां संयमिप्रवराणां सन्ततमस्यूतवस्त्राण्युपयुञ्जतां स्थण्डिलशायिनां शिष्यप्रशिष्यीकृत-राजन्यवर्गाणां सर्वथा संस्तुतचारित्राणां सहृदयानां परोपकृतिपराणां लक्ष्मी-सरस्वत्युभयाश्रयाणामुदासीनश्रौतमुनीनां शुभाभिनन्दनं विदधदमितमानन्दसन्दोहं वितनुते ।

सर्वदा सर्वान्तर्यामिणं श्रीकाशीविश्वेश्वरञ्चाभ्यर्थयते यन्महामान्यानां श्रीमतामाशीः परम्परां सर्वश्रेष्ठमसाधारणं प्रसादञ्च लब्ध्वा संस्कृत-साहित्य-समाजोऽयं दृढ़भित्तिः सुस्थिरः सुदृढ़ः सन् स्वीयं सौप्रभातिकं शाश्वतिकं श्रेयो विदध्यादिति ।

श्रीमुकुन्द झा बख्शी महामहोपाध्यायः ( सभापतिः ), श्रीमदनमोहन शास्त्री अध्यक्ष—मारवाड़ी-संस्कृत-कालेज ] ( उपसभापतिः ), श्रीनारायणपति त्रिपाठी ( रईस, जमीन्दार ), श्रीहरिनाथ शास्त्री, दर्शनाचार्यः (अध्यापकः—गोयनका-संस्कृत-कालेज ), श्रीसत्यनारायण शास्त्री, भिषगाचार्यः, विद्यावारिधिः ( अध्यापक—हिन्दू विश्वविद्यालय ), श्रीसूर्यनारायण शुक्लः, न्याय-व्याकरणाचार्यः ( अध्यापकः—गवर्नमेन्ट—संस्कृत कालेज ), श्रीतारादत्त पन्तः, व्याकरण साहित्याचार्यः, व्याकरण-काव्यतीर्थः ( अध्यापकः-रणवीर-संस्कृत-पाठशाला-हि०वि०वि० ), श्रीवीरमणि उपाध्यायः, एम० ए०, एल्-एल्० बी०, साहित्याचार्यः, न्यायशास्त्री ( अध्यक्षः- रणवीर पाठशाला, हिन्दू विश्वविद्यालय ), श्रीस्वामी सुरेश्वरानन्दः( मन्त्री—उदासीन-संस्कृत-विद्यालयः ), श्रीगोपाल शास्त्री, दर्शन केशरी, साहित्याचार्यः । न्यायतीर्थः,(प्रधान मन्त्री ), श्रीविन्ध्येश्वरी प्रसाद शास्त्री, धर्माचार्यः ( सम्पादकः ) श्रीदेवीनारायण वर्मा एल्-एल्० बी०, एडवोकेट [ रईस जमीन्दार ], ( कोषाध्यक्षः ) श्रीगौरीनाथ पाठक, साहित्याचार्यः, महोपाध्यायः ( प्रकाशकः ), श्रीधारादत्त शास्त्री, वेदान्तविशारदः ( मन्त्री ), श्रीकेदारनाथ शर्म्मा सारस्वतः( सम्पादकः, व्यवस्थापकश्च ),

श्रीमतां वशंवदः—

सुप्रभात—कार्यालयः, काशी ।
श्रावण शुक्ला, [illegible], सं० १९९२ वै० } संस्कृत-साहित्य-समाज-सदस्य-सङ्घः ।

# अराजकता-निदानानि।

ले०—श्रीमान् विन्ध्येश्वरी प्रसाद शास्त्री।

निखिलभूमण्डलस्यैव राजनीतिकचक्रगतिः समुन्मूलयन्ती राजतन्त्रशासनपद्धतिं सवेगं प्रजातन्त्रस्थापनोन्मुखं कथं धावतीत्यत्र प्राधान्येन कारणत्रयं निर्देष्टुं शक्यते। तथाहि—(१) पाश्चात्यसभ्यताया अवश्यम्भावी दुष्परिणामः, (२) राज्ञां स्वीयशक्तिदुरुपयोगेन तपोनाशः, (३) प्रजानां च धैर्य्यसहनशीलतादिगुणजनिततपस्यासञ्चयद्वारा भगवत्कृपाप्राप्तिश्चेति। पाश्चात्यसभ्यताया भौतिकविज्ञानमूलकत्वात् तद्द्वारा संसारिकी शान्तिर्न सुरक्षिता तिष्ठति। कुत्रचन देशे यदि शतं सहस्रं वा कोटिपतयः, अपरे बहवो दासेरकास्तिष्ठेयुर्नासौ देशो वस्तुतः सभ्यताशिखरं समारोढुं शक्नुयात्। मध्यवित्तमानवद्वारैव संसारस्य सर्वविधा समुन्नतिर्भवति। यतो हि न ते दासेरका इवान्नचिन्तापरायणाः, नवा कोटिपतय इव धनमदोन्मत्ता भवन्ति। ते तूभयविधव्याधिविरहिताः सन्तो जातेः समाजस्य च समुन्नतये सविशेषं पुरुषार्थं साधयन्ति। यतो हि भौतिकविज्ञानप्रधानसभ्यताया प्रसारेण दासेरकदलः (Labour class) धनपतिदलः (Capitalists) च परिवर्द्धितुं शक्नुतः। तेन तु मध्यवित्तमानवाः (Middle class people) प्रायो ह्रासमुपगच्छन्ति। दृष्टान्तरूपेण कुत्रचित् यन्त्रालये दीयतां दृष्टिः। वस्त्रवानयन्त्रेण अन्येन वा तदधिपतिः स्वल्पकालेनैव कोटिपतिर्भवतिः, परन्तु तेन ये कर्मकरा दासेरकास्ते तु चिरदरिद्रा एव तिष्ठन्ति। एकयन्त्रद्वारैव बहूनि वस्तूनि निर्मीयन्त इति हेतोर्मध्यवित्तानां श्रमविभाग (Distribution of labour) क्रमः समूलं विनश्यति। तस्मिन् समये मध्यवित्तमानवाः शिल्पकलाया अभ्यासं तदुन्नतिं च कर्त्तुं न पारयन्ति, केवलं पण्यजीविकया दास्येन वा स्वजीवनं यापयन्ति। एवं हि भौतिकविज्ञानसभ्यताप्राधान्येन श्रमसामञ्जस्यस्य अर्थसामञ्जस्यस्य च प्रणाशेन मध्यवित्तश्रेणी विनष्टा भवति, धनपतिषु दासेरकेषु च संग्रामः प्रचलति। "अस्माकमेव परिश्रमेण धनपतय आलस्यपरायणा आनन्दमनुभवन्ति" इति विचार्य दासेरका धनपतीन् द्विषन्ति, तैः सार्द्धं संग्रामं कर्त्तुं च समुद्युञ्जते। एतस्यैव परिणामस्वरूपः अन्तर्विवादः (Civil war) समतावादः (Bolshevism) च प्रत्यक्षरूपेण संसारसन्निधौ संतिष्ठेते। अतो हि योऽयं दासेरकेषु धनपतिषु च परस्परं भीषणसंग्रामः प्रचलति, तस्य मूलनिदानं भौतिकविज्ञानप्रधाना पाश्चात्यसभ्यतैवेत्यत्र न भवतु विपश्चितां वैमत्यावसरः।

एवम्भूतपारस्परिकजातीयकलहप्रशमाय साम्प्रतं यावदपि पाश्चात्या न कमप्युपायमनुष्ठितवन्त इति केषां न दुःखाकरम्? तेषां सर्व एव समारम्भा अन्योन्यसंघर्षपरिवृद्धये परिदृश्यन्ते। अन्तःपोत-बहिःपोत-वायुयान-यन्त्र-शतघ्नी-प्रभृतीनां प्रतिक्षणमभिनवाविष्कारो वोभूयते। नूनमेतेनैव प्रजा राजानं न मन्यन्ते, लघवो महतो जनान् न गणयन्ति, राजप्रजासु च भीषणः स्वार्थसंग्रामः प्रादुर्भवति, अनन्तरं न राजसत्ताया समूलमुन्मूलन प्रजा

न्त्रशासनप्रणाली स्थाप्यते । अतएवास्माकं दूरदर्शिनो महर्षयः केवलं भौतिकविज्ञानमेव जातीयसमुन्नतेर्निदानं न मन्यन्तेस्म । ते तु यन्त्रसाहाय्येन वाणिज्यश्रीपरिवर्द्धनमनुचितं मन्यमाना गृहशिल्पेनैव (Home Industry) नत्र सुखस्पादयन्तो मध्यवित्तश्रेणीसमुन्नतिसाहाय्यमाचरन्तः श्रमसामञ्जस्यमर्थसामञ्जस्यं च विहितवन्तः । पूज्यमहर्षीणां सर्वहितकरं सिद्धान्तमालोचितवद्भिः स्वयमेवावगतं भवेद् यत् पाश्चात्यसभ्यताद्युत्तरिणामो राजतन्त्रनाशस्य प्रथमं कारणम् ।

द्वितीयं कारणं राजतन्त्रनाशे स्वीयशक्तिदुरुपयोगेन राज्ञां तपोनाश इति । जगन्नियन्तुः परमात्मनो नियमानुसारं संसारेऽनावश्यकं वस्तु न क्षणमपि स्थातुमर्हति । प्रकृतिमाता स्वयमेव तदनावश्यकं वस्तु तूर्णमेव प्रलयगर्भे निक्षिपति । यदि परमात्मद्वाराऽधिगतं वस्तु प्राप्यापि कश्चित्तस्य सदुपयोगं न करोति तदा तस्य सन्निधौ तद्वस्तु न तिष्ठतीति प्रत्यक्षं विलोक्यते । दृष्टान्तरूपेणावगन्तुं शक्यते यत् यदि कश्चन धनी स्वीयधनस्य दुरुपयोगं कुर्यात्तदा तत्समीपे न कथमपि तद्धनं तिष्ठति परस्मिन् जन्मनि ध्रुवमेव असौ निर्धनो भवति तु एवं च नेत्रदुरुपयोगी काणः । बुद्धिदुरुपयोगी निर्बुद्धिश्च जायते । एष तु अप्रतिक्रियः प्राकृतिको नियमः ।

पूर्वजन्मकृतसकामतपस्यायाः फलस्वरूपं राज्यमधिगच्छति मानवः । तपस्याप्रभावसमुत्पन्ने मानवशरीरे सूर्य-चन्द्र-कुबेर-वरुण-यमादीनामष्टदेवानामंशो भवति । उक्तं च मनुना—

"अष्टानां लोकपालानां मात्राभिर्निर्मितो नृपः"

यदि राजा सूर्यस्यांशमधिगत्यापि ज्ञानरूप-इति प्रकाशं प्रजासु न विस्तारयति; चन्द्रस्यांशमादायापि यदि निजगुणेन प्रजां न आनन्दयति; कुबेरशक्तिमासाद्यापि यदि धनदानद्वारा प्रजानां दुःखं न विदूरयति; वरुणस्यांशं प्राप्यापि यदि कृपादृष्टिवृष्टिभिः प्रजा नाभिषिञ्चति; धर्मराजस्य शक्तिं स्वीकृत्यापि यदि निष्पक्षपातं न्यायानुमोदितं विचारं न करोति; तदा द्रुतमेव देवांशदुरुपयोगतो दैवविभूतयो राजशरीरं परित्यजन्ति । तत्र च राजदेहे दैवशक्तिनिर्गमनान्तरमासुरो भावः प्रविशति; येनाऽसौ सर्वप्रकारेण सर्वदैवाधर्मं प्रचारयन्, स्वयमत्याचारो पापाचारी, व्यभिचारी, व्यसनी च सम्पद्यमानो निरन्तरमेव स्वप्रजाः पीडयति । यथा चोक्तं शुक्रनीतौ—

"यो हि धर्मपरो राजा देवांशोऽन्यश्च रक्षसाम् । अंशभूतो धर्मलोपी प्रजापीड़ाकरो भवेत् ।" "प्रजापीडनसंतापात् समुद्भूतो हुताशनः । राज्यं कुलं श्रियं चैव नाऽदग्ध्वा विनिवर्तते ॥ इति महर्षियाज्ञवल्क्यवचनानुसारं राजा समूलमेव प्रणश्यति।

इतिहासपर्य्यालोचनेनोपर्य्युक्तमिदमक्षरशः प्रमाणीभवति । आधुनिकयुगे रूस-तुर्कप्रभृति राज्यमेतस्यैवोदाहरणम् । प्राचीनसमयेऽपि नहुषो नाम राजा स्वयमिन्द्रपदमधिगत्यापि प्रजापीड़नजनितपापेन पतितः सम्वृत्तः । वेन-दुर्योधन-कंसादीनां प्रणाशः प्रजापीडनेनैवाभूदिति निखिलार्य्यसंस्कृतिज्ञानामप्रत्यक्षमेव ।

वर्तमानसमये संसारेऽस्मिन् प्रायशः सर्वत्रैव राजशक्तिर्विनष्टैवोपलभ्यते । नाममात्रेण यत्र कुत्रापि भूभागे ये केचन राजानो विलोक्यन्ते, तेषु न कुत्रापि दैवविभूतिविकाशो विद्यते । यत्रैव दृष्टिर्निक्षिप्यते तत्रैव प्राबल्यादासुरभावस्य प्रजापीड़नरूपदुष्प्रवृत्ति...

क्रस्यैव तीव्रागतिर्दृष्टिगोचरतामापतति । प्रजापीड़नपापेन स्वल्पावशिष्टा राजानोऽपि प्रायो विनाशमुपगच्छन्तो दृश्यन्ते । यावदेतेषां पूर्वजन्मजनित-तपस्याफलमवशिष्यते तावदेव तेषां नाममात्रमपि साम्राज्यं सुरक्षितं तिष्ठति ! समयान्तरे प्रणाशमुपगतायां तदीयतपस्यायां तदीयं राज्यं साम्राज्यं च नामशेषतां गमिष्यति, संसारे सर्वत्रैव राजतन्त्रनाशेन परस्परं प्रजातन्त्रशासनपद्धतिः प्रचरिष्यति । साम्प्रतिकराजनीतिकजगत एतदेवादृष्टचक्रपरिवर्त्तनमिति न कोऽपि सन्देहलेशः ।

तृतीयकारणं राजतन्त्रनाशे प्रजानां धैर्य-सहनशीलतादिगुणजनिततपस्या-संचयद्वारा भगवत्कृपा प्राप्तिर्विद्यते । एकत्र राजानस्तु प्रजापीड़न-पापाचरण-दुर्व्यसनादिद्वारा स्वीयतपःप्रभावं प्रणाशयन्तः स्वयं शक्तिहीना भवन्ति, अन्यत्र प्रजासमुदायस्तु सर्वस्वत्यागिनां सत्यमार्गावलम्बिनां धार्मिकनेतॄणां वशवर्त्ती भवन् सततमन्यान्यप्रवृत्तस्य राज्ञोऽत्याचारं सहते । एवं च धैर्य्यसहिष्णुतादिदिव्यगुणमहिम्ना तपःसंचयद्वारा प्रजावर्गो भगवत्कृपामासादयति । दिने दिने राजतो दूरीभूता दृश्यते दयामयस्य दया। पीड़ितप्रजासु दीनबन्धोः करुणानिधानस्य भगवतः कृपा नूनं भवतीति नात्र काचन विचिकित्सा। यतो हि त्यागशीलता-सहिष्णुतादिसद्गुणैरेव संसारेऽत्र सर्वविधाः शक्तयः समधिगन्तुं शक्यन्ते। यदि देवकी-वसुदेवौ क्रूरकंसस्य कठिनमत्याचारं सोढुं नालमभविष्यताम्, तदा तयोः पुत्रः श्रीकृष्णचन्द्रो नाभविष्यत् । यदि द्रौपद्या वस्त्रहरणसमये पाण्डवा धैर्यधारणं नाकरिष्यन्, तदा न ते भगवत्कृपामासादयिष्यन् । नापि कुरुक्षेत्रसंग्रामे दुर्योधनादीन् शत्रूनजेष्यन् । महात्मा ईसामसीहो यदि यहूदीयानां मरणान्तमत्याचारं सोढुं नाशक्ष्यत् न कथमपि तदीयं मतं भूमण्डलेऽस्मिन्नेवं व्यापकमभविष्यत् । सुतरां सहिष्णुतया तपोलाभः, तेन च परमात्मकृपाधिगमः—तद्द्वारा च स्वराज्यप्राप्तिरिति विधातुरवश्यम्भावि विधानमिति ।

एतेनैव पूर्वोक्तकारणत्रयेण राजतन्त्रनाशं विदधती राजनीतिचक्रगतिः प्रजातन्त्र-शासनोन्मुखं सवेगं धावतीति निश्चेतुं शक्यते ।

—❀—

## जानीमहे ।

ये देशोन्नतिमाचरन्ति मनुजाः सर्वात्मना सर्वदा
ते धन्या जगतीतले परहिताधाने गृहीतव्रताः ॥
ये च स्वोदरमात्रपूरणपराः सत्कर्मविद्वेषिणः
तान्निन्दन्ति वृथैव वञ्चकवरास्ते के न "जानीमहे" ॥ १ ॥

हरिदत्तशर्मा पाण्डेयः

# अध्यात्मविद्योपदेशकत्वदिग्दर्शनम्

—❀❀❀—

श्रीमान् विशुद्धानन्दशास्त्री, उदासीनः

विगतांके पी० एच० डी० स्वामि ब्रह्मानन्दवदन-समुद्भववचोविन्यासपाटवं समधिगतमेव सुप्रभाताधिगन्तृभिः । तत्रोपवर्णितपूर्वापरसम्बन्धाभावोपक्रमोपसंहारादिविरोधदोषाणां विषये न किमपि निवेदनं वर्तते । किन्तु वैदिकेतिहासपुराणादिशास्त्रतत्त्वमनालोच्यैव यद् "केनापि क्षत्रियेण ब्रह्मविद्याया उपदेशो न कृत इति" विलिखितं, तत्सम्बन्धेत्ववश्यमेव किमपि विनिवेदनाय रोचते ।

यद्यपि 'क्षत्रिया ब्राह्मणानध्यापयेयुः, ब्राह्मणा वा क्षत्रियेभ्यः पठेयुः—इति न विधिरूपं मत्कं मतं; तथापि पूर्वे क्षत्रिया अपि ब्रह्मविद्याया उपदेशका आसन् इत्येव प्रकाश्यते । क्षत्रियाणां ब्रह्मविद्याया उपदेशकत्वे साक्षिभूतेषु, अनेकवैदिकेतिहासपुराणोपनिषद्भगवद्गीतादिसच्छास्त्रेषु विद्यमानेषु समुपलभ्यमानेषु च तत्समर्थनसमर्थेषु विविधदृष्टान्तेषु केनचित् क्षत्रियेण ब्रह्मविद्याया उपदेशो न कृतः" इति विस्पष्टं कथनेन केवलं साहसमात्रमेव प्रादर्शि ।

छान्दोग्योपनिषदि तावत् स्पष्टमेव लिखितं 'अश्वपतिनामककैकेयक्षत्रियेण प्राचीनशाल-सत्ययज्ञ-इन्द्रद्युम्न-जन-बुडिलेभ्यो ब्रह्मविद्याया उपदेशः प्रदत्तः-इति । यच्चूक्तं पी० एच० डी०—स्वामिना 'छान्दोग्ये राज्ञा कैकेयेन प्राचीनशालादीन् ब्रह्मविद्याजिज्ञासून् प्रति य उपदेशः कृतः, सोऽपि वैश्वानरविद्याया एव न तु ब्रह्मविद्यायाः, इत्यादि तत् उपक्रमोपसंहारादिज्ञानविजृम्भि-तत्वेन तुच्छम् । उपक्रमे हि 'प्राचीनशालः, औपमन्यवः' सत्ययज्ञ इत्यादयः समेत्य मीमांसां चक्रुः, को न आत्मा किं ब्रह्मेति, इत्यादिनाऽऽत्मा प्रकृतः, मध्ये मध्ये च कैकेयेन "औपमन्यव कं त्वमात्मानमुपास्से, वैयाघ्रपद्य कं त्वमात्मानमुपास्से०" इत्यादि-संदर्भेण सर्वान् परीक्ष्य नावगतं मुख्यमात्मतत्वं भवद्भिरिति निर्दिश्य मूर्धादिपतनभयं च प्राचीनशालादिभ्यः प्रदर्श्य मुख्यात्माभ्यसितः, अन्ते च मुख्यस्य वात्मन उपदेशः कृतः । अत उपक्रमादितात्पर्यबोधकलिंगैरश्वपतिना क्षत्रियेण "ब्रह्मविद्याया उपदेशः कृतः" इति स्वीकर्तव्यम् । न च वैश्वानरशब्देन विप्रतिपत्तव्यमितिवाच्यं तत्र वैश्वानरशब्देन परमात्मन एव ग्रहणात् । अत एव च वैश्वानर साधारणशब्दविशेषात् । ब्रह्मसूत्र, १अ०, २ पा०, २४ सू०, स्मर्यमाणमनुमानं स्यादिति । १ । २ । २५, शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशाद् संभवात् पुरुषमपि चैनमधीयते । १ । २ । २६ सू०, इत्यादि व्यासीयब्रह्मसूत्राधिकरणमपि संगच्छते । अधिकन्तु शाङ्करभाष्ये विलोकनीयम् ।

एवं बृहदारण्यकेऽपि 'अजातशत्रु नामकक्षत्रियेण बालाकिगार्ग्याय ब्रह्मविद्याया उपदेशः प्रदत्त" इति सुस्पष्टमेव लिखितम् । तथा च 'दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं

ब्रह्म ते ब्रवाणीति" इत्यत्र साक्षादेव ब्रह्मशब्देन ब्रह्म प्रकृत्य मध्ये च द्वादशवारं गार्ग्याभिमतामुख्यब्रह्मनिरास पुरःसरं ब्रह्मैवाभ्यसितं, अन्ते च गार्ग्यायाजातशत्रुणा 'यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति" इत्यनेन महता सन्दर्भेण ब्रह्मविद्याया एवोपदेशः कृतः।

भगवता श्रीकृष्णचन्द्रेण च क्षात्रमेव कलेवरं समाश्रित्य महासमरे पार्थाय गीतारूपेण योगादि-विद्या-सहिता ब्रह्मविद्यैव समुपदिष्टा।

इदमपि च भगवता स्वीकृतं बोधितं चार्जुनाय यत् गीताशास्त्रोपदिष्टा क्षत्रियाणामेव वंशपरम्परया समागता विद्या वर्तते। अतएव कथितं भगवता।

इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवे ब्रवीत्॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।
स कालेनेह महता योगो नष्टः परन्तप॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम्॥

अत्र च भगवता स्वयमेव स्पष्टीकृतं क्षत्रियाणां ब्रह्मविद्याया उपदेशकत्वमिति न कोऽपि विवादावसरः। अतो बहवः पूर्वे क्षत्रिया ब्रह्मविद्याया उपदेशका आसन् इति सिद्धं भवति।

यत्तु मनुना 'अब्राह्मणादध्ययनमापत्काले विधीयते। अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः, इत्युक्तं तत्तु विप्रपरं ज्ञेयम्। अर्थाद् ब्राह्मणा आपत्काले क्षत्रियादिभ्यः पठेयुः, क्षत्रियाश्चान्यस्मिन्नपि काले स्वजातीयक्षत्रियेभ्य एव वंशपरंपरागतां विद्यां पठेयुरिति भावः, अन्यथा इमं विवस्वते योगं० इत्यादि भगवद्वचनमसंगतं स्यात्। याज्ञवल्क्यश्च क्षत्रिय एवासीत् ब्रह्मविद्यायाः प्रधानः सुप्रसिद्धश्चोपदेशक इति न तिरोहितं शास्त्रमर्मज्ञानामित्यप्यग्रे स्पष्टीभविष्यति। इति संक्षेपमात्रम्।

---

## नाम गुप्तिः

भार्या गुणगणलुब्धा पतिपरिचरणाक्षरद्वयी भवती।
मिलितो मध्ये वर्णः श्वेतार्थत्वं समाख्याति॥ १॥
वर्णस्तुर्यो राधारञ्जितचित्तम्मुरारिमाख्याति।
अन्त्यो वर्णः पायः स हि तुर्येणोरुवाच्यताम्भजते॥ २॥
आर्याः पण्डितवर्याः साहित्याब्धेः सुलङ्घने चतुराः।
अक्षरपञ्चकमालं वाक्यं कवयो वदन्तु मे तरसा॥ ३॥

श्रीगोविन्द शर्म्मा, सुरपुरम्।

# स्त्री-शिक्षा-निरीक्षणम् ।

लेखकः—श्री पं० महावीरप्रसाद जोशी, काव्यतीर्थः,

वस्तुतः प्रकृति-कृतयः कृतिनां सुकृतिनामपि मनस्सु-दुर्बलनां प्रवलयन्ति । तथाहि विकराल-काल—काल-व्यालस्य, परिवर्तन-नर्तनस्य विकृतायाः प्रकृतेर्वा पाशेन सन्दानिता जगत्या महत्यश्शक्तयो विलयमयाञ्चक्रिरे । मध्यान्हे हि मध्ये गगनं भास्वान् भगवान् भास्वान् प्रवल-प्रतापेन प्रद्योतते । तदानीं तदभिमुखं कश्चित् स्थातुमपि नाध्यवस्यति । किन्तु स्वल्पतर एव समये महान् परीवर्तः प्रवर्तते । तदा तु कश्चिदित्यपि न मीमांसते यत् सूर्यस्य स प्रतापः कुह व्यलेष्ट ? इयमेव दशा वर्तमानार्यावर्तस्य वर्वर्ते-इति समुदाहरन्तोऽन्तर्वेपथु' प्रथयामः । हन्त ! यस्यां वाटिकायां कदाचन कोकिलानां कल काकली कर्ण-कुहर-कलिता निष्पन्नीपद्यतेस्म; तत्रैवाद्यत्वे भीषण लूक-कोलाहलः कर्णाऽभ्यर्ण्णीक्रियते ।

वत ! केन सा सीमन्तिनी-समुन्नति-सरोजिनी सहसाऽद्य विमर्द्य पातिता क्लिन्नतां खिन्नतां च वहति अर्ध-प्रस्फुटितेव च वाल-रवौ घन-घनाघनाऽऽक्रमणेन समकुचत् ।

यद्यपीदानीं सर्वत्राऽपि स्त्री-शिक्षायाः पटहप्रणादः कर्णाऽभ्यर्णमहर्निशं व्याप्रियते । अबलानामपि प्रबलं बलं निध्याय देश-सेवकाः परां प्रसक्तिसमासक्तिमुपासते । वयमपि च न स्त्री-शिक्षां समुदयप्रतीपां प्रतिपित्सामहे; किन्तु यदि सा वास्तविकी शिक्षा स्यात् । यया हि संसार-समनीकसीमनि × सफलता-समासादस्सम्पद्येत । विद्यमान-वनिता-विद्यालयास्तु ततः पराञ्चन्त एव निभाल्यन्ते । तेषु हि न लभ्यते शिक्षा, अपितु प्रणय-दीक्षा; न ज्ञायते शास्त्र-तत्त्वम्; अपितु गर्भ-निरोधकोपाय-महत्त्वम्, न दृश्यते सौजन्यम्; अपि तु स्वातन्त्र्यावापाय वारजन्यम्, क्रियते न सद्गुण-पक्ष-पातः, अपितु भ्रूणघातः । अतो न ते वस्तुतो विद्यालया अपित्वविद्यालयाः । हन्त ! रत्न-प्राप्त्याशयाश्रितो रत्नाकरोऽपि क्षारतां प्रकटीकरोति ! वरीवृधचेष्टायां * परिपणेऽपि विनाशमुपास्ते । वत ! या आनीक्षिता ~ पति-संविहिता + आति-शातिकं ÷ संविधानकमिव तन्निदेशं मन्य मानास्तदात्व (१) एव तत्पूर्तौ स्फूर्तिं प्रदर्शयन्तिस्म । तासामेव मानसे कॉलिज-शिक्षया पदे पदे कर्कशास्तर्कारतायन्ते । 'नो नौलेज विदाउट कालेज' No Knowladge without college ] इत्याद्या आभाणकाश्च प्रतीपा-जायन्ते केवलं शुद्ध-कलहेन तासन्तोपं मन्वते, मनसि चाभिमानं तन्वते । अत इतएव तासां स्त्रीत्वमपवाह्यते । स्त्रीत्व-वियुक्ताश्च ता हंस-गतिकाङ्क्षिण्य ~ काकस्य दशां दिशन्ति । स्वाधीनतामुशन्ति । किन्तु नैतद्व्विचारं स्पृशन्ति यत् परतन्त्रतायामपि सुकृतिनः कृतिन ~ कृति-गुणेन स्व-शासकान् सम्मोहयन्ति । अधीना अपि वस्तुतश्शासके शासनं विदधति । किन्तु निष्क्रिया मूर्खाश्च जनाश्शासकास्सन्तोऽपि निजाधिकृतदृष्टौ अधरीणा जायन्ते । एवं शासकत्वेऽपि पराधीनतामेव प्राप्नुवन्ति । इयमेव दशा साम्प्रतिक-स्त्री-समाजस्य वर्तते । ता ~ केवलं स्वाधीनतां

× समनीक-सीमनि—समरक्षितौ ।

* परिपणो मूलधनम् ।

\+ पतिसंविहिताः-निज=नाथादिष्टाः ।

÷ त्वरणीय कार्यमिव ।

(१) तत्कालस्तु तदात्वं स्यात् ।

वाञ्छन्ति, नान्यत् किमपि विचारयन्ति । यतो हि साम्प्रतमधिकारस्य, तर्कस्य, विज्ञानस्य युगमस्ति, अस्मिन्नेहसि यद् यन्महाप्रभवो गौराङ्गा विदधति; सभय-भ्रूविक्षेपभीता भारतीयास्तत्तदेवानुकुर्वते ।

एवंविध-वातावरणान्निर्गता वनिता बहुधानर्गलं मनीषितं व्याकुर्वन्ति । पतिं च काष्ठकौशिकं कथयन्ति, समानाधिकारञ्च कामयन्ते ।

हन्त ! एता अशिक्षागर्ते तु पतिता आसन्नेव, सम्प्रति कुदीक्षा-दीक्षिता कापिशायन-मद-मत्त — कुपिताः कपितति-दशां प्रदर्शयन्ति । काश्चन अन्तर्जातीयं विवाह-प्रवाहमभिसन्धाय * क्षुद्रान् शूद्रान् हस्ते कुर्वन्ति × । काश्चन सामाजिकीं क्रान्तिं कामयन्त्यो विवाहं परतन्त्रतायास्साधनं मन्यमानास्तमप्युन्मूलयितुं बद्ध—परिकरा दरीदृश्यन्ते । किन्त्वत्रानुयुज्यते + सर्वेष्वपि देशेषु, नगरेषु, ग्रामेषु, जातिषु, सभ्येष्वसभ्येषु वा क्वचिदपि विवाह — प्रथाम— वकीर्य सामाजिकी स्थितिः किं केनचिद्रूपेण वर्तमाना वर्तमानेऽपि समये निभाल्यते । किमधिकं, विचार-स्पृशा दृशा विवेचनेन पक्कणा ÷ अपि विवाह-बन्धन-स्नेह-चिक्कणा दृश्यन्ते. भारते तु सभ्यता शिक्षा च समुन्नति-निःश्रेणिकाया ( १ ) स्सीमानमुपासामास इति हेतोरत्र वैवाहिकी पद्धतिः पूर्णतया वैज्ञानिक—राद्धान्तानुबन्धेन स्थापिता, सामाजिकव्यवस्था-रूपेण च प्रख्यापिता । तथा च स्त्री-पुरुष—सहवासोऽग्निकण—घास-संयोग इवानर्थ — सहस्रमजस्रं वितनुत इति विश्वजनीनसिद्धान्तः । विवाहश्च सहवासे सीमानं निर्धार्य तद्दुराचरणाय जैत्रो बोभवीति सहवास-स्वच्छन्दता तु कन्दलयत्यमन्द-मन्दताम् । तया जनानामान्तरं स्थाम ( २ ) ह्रसिमाणमाकलयेत् । वीर्य-विनाशाभासमानो भवेत् । प्राणिषु प्राण-स्वरूपमुच्यते । यत्स्त्रीहाणं निर्मिमाणास्संसारसारमसंविदानास्सुखानि विपरिणन्त्येव ।

किन्तु हन्त ! अज्ञानचौल-निचुलता कुहना ( ३ ) चणा कुहना इदं युगीनास्सुधारका न विवाहेन निर्वाहं मन्वते ।

तद्द विच्छेदार्थं च राजकीय-नियममारिरात्सन्ति ( ४ ) तत्रेत किं सुखं गूढमवगाढ × मिति त एव जानन्ति

वयन्त्विदमभिप्रेमो यद्—देशप्रेम समाजोन्मूलसाहसिक्यं च केषाञ्चन महानुभावानाम्मुदरदरी-पूरण-साधनम् । एवमान्दोलनैरेव तेषां स्वयं सिद्धनेतॄणां जीवननिर्वाहो भवति । एवंविधैरेव रोहित * चित्ताः स्त्रियः प्रतार्यन्ते । हन्त ! स्वमत-संवादिनीस्ता अपि संधाय विकपट-कुठारं संक्ष्णुवाना अप्याप्यायिता न वोभुवति, समुन्नमायोद्यच्छमाना अपि धर्म- × द्रुमं क्षुन्दाना एवमक्षीलक्ष्यीक्रियन्ते । एभिरेव युवतयो विलासवासनासु प्रवर्त्यन्ते । दुराचरणं प्रति प्राणिमात्रस्यैवाकृष्टिर्बोभवीति, अतः सरला स्त्रियोऽपि अवरोध-विरोध-स्वातन्त्र्येण सुखभोगं कामयन्त्यो विलासे पदं निदधति ।

न चैतद्द विचारयन्ति यद्यथा मणिः सर्पस्य जीवनमवकीर्य न क्षणमपि स क्षणमाप्नोति, व्याकुलीभवति, वेदनां निवेदयति च । तथैव स्त्रियोऽपि शीलमेव जीवनम्, सुशीलतयैव च सा सुखमधिगच्छेन्नान्यथा । सुशीलता तु साम्प्रतिकाध्ययनेन विनाशमायातीति कृतमक्षरक्षरणेन !

* मनसि कृत्वा ।
× तेषां पाणिग्रहणं कुर्वन्ति ।
+ अनुयुज्यते पृच्छ्यते ।
÷ पक्कणः शबरालयः ।
(१) निःश्रेणिका—सोपानपंक्तिः ।

(२) स्थाम—बलम् ।
(३) कुहना दम्भचर्यायाम् , ईर्ष्यालौ कुहनस्त्रिषु ( मेदिनी )।
(४) सनि रूपम् । हिंसार्थकाभावात्र—इस् ।
× ज्ञातम् ।
* रोहितम्—सरलम् ।
× सन्तुष्टाः ।
[illegible] कुर्वन्तः ।

वाराणसीस्थाः सुप्रसिद्ध—चिकित्सकाः



श्रीसत्यनारायण शास्त्रिमहोदयाः, भिषक्शिरोमणयः, विद्यावारिधयः।

मोहमयीस्थाः सुप्रसिद्धविद्वांसः



शास्त्रिरेवाशङ्कर मेघजी महोदयाः
महोपाध्यायाः विद्यावागीशाः
सनातनधर्म्म—मार्तण्डाः ।

# संस्कृतानुरागिभ्यः-प्रार्थनम्

श्रीमन्तो महानुभावाः ।

सम्प्रति हि संस्कृतज्ञेषु जागर्त्युत्साहपरस्परसंघटन—धर्मोपदेश-लौकिकज्ञानविज्ञानार्जनादि प्रवृत्तिप्रवर्द्धनं परमावश्यकं प्रतिभाति । तत्सम्पादनं च सरलमञ्जुलमनोज्ञसंस्कृतवाङ्मयविभूषितं पत्रं विनाऽसंभवतीति सर्वेषामेव सुधियामिहैकमत्यम् ।

श्रीकाशीस्थो हि संस्कृतसाहित्यसमाजः स्वकीयशारीरिक-मानसिक-वाचनिकादिपरिश्रमं संसाध्य सर्वविधधार्मिक-सामाजिक-साहित्यिकादिकार्यकलापेन सहैकादशवर्षादारभ्योपर्य्युक्तसर्वगुणसम्पन्नं विविधविषयविभूषितं सर्वोत्तमं सचित्रं सुप्रभातनामकं मासिकपत्रं प्रकाशयति ।

भो गीर्वाणवाण्युन्नत्यभिलाषिणः ! तस्यैवाऽऽवश्यकापेक्षितार्थिकसाहाय्यप्रदानेन स्थैर्यसम्पादनद्वारा सर्वमपि संस्कृतज्ञानामपेक्षितं कृत्यं सुसम्पन्नं स्यादिति समालोच्य वयं सर्वानेव संस्कृतानुरागिणो धार्मिकान्, आचार्य्यान्, मठाधिपान्, मण्डलीश्वरान्, महाराजान्, नृपतीन्, भूमिपतीन्, धनिनो मानिनः, श्रेष्ठिनश्चैकपदे समभ्यर्थयामो यत्सर्वथास्मै संस्कृत-साहित्य-समाजाय स्वसामर्थ्यानुसारं शतं पञ्चाशतं पञ्चविंशतिं विंशतिं दश वा मुद्रा वार्षिकं साहाय्यं प्रदाय 'सुप्रभातस्य' स्थायिसम्पादनं सुस्थिरं कुर्वन्तु ।

अद्यत्वे देशेऽस्मिन् सत्सु श्रीमत्साहाय्यसाध्येषु विविधकार्य्येष्वेवम्भूतस्य सर्वथाऽपेक्षितस्य सर्वोत्तमस्योच्चसंस्कृतपत्रस्य सञ्चालनं सुदृढं न स्यादिति सर्वथासन्तापकरो विषयः स्यादिति किं विज्ञेषु बहूक्तेनेति विरराम: ।

# संस्कृतप्रेमियों से अपील !

**देशहितैषी सज्जनों !**

आप महानुभावोंको सभी प्रसिद्ध पत्र-पत्रिकाओं द्वारा यह विदित ही है कि आज दश वर्षोंसे काशीके संस्कृत-साहित्य-समाज द्वारा 'सुप्रभातम्' नामका एक संस्कृत मासिकपत्र निकल रहा है। इसने पिछले वर्षों तक संस्कृतकी प्रशंसनीय और सच्ची सेवा की है। इसकी सबसे बड़ी विशेषता यह है कि यह संस्कृतके छात्रोंकी निर्धनताके कारण उन्हें एक रुपया वार्षिक मूल्यमें ही दिया जाता है। दूसरे इसकी भाषा अति सरल और परिमार्जित होती है। तीसरे इसमें उन आवश्यक विषयों और भावोंका समावेश रहता है, जिनकी शिक्षा किसी भी विद्यालय द्वारा नहीं दी जाती और जिस शिक्षाके बिना संस्कृतज्ञोंसे लोग उपेक्षा करने लगे हैं। चौथे यह आधुनिक हिन्दी आदि भाषाओंके उच्च कोटिके पत्रोंके समान आकार-प्रकार, मुद्रणसौन्दर्य, विशेषाङ्क आदि द्वारा संस्कृत-समाजकी अच्छी सेवा करता है। इस कारण छात्रोंके लिये यह एक महान् शिक्षकका काम करता है। संस्कृत साहित्य एवं उसके साहित्यिकों का प्रचार, वृद्धि और अभ्युत्थान ही इसका प्रधान लक्ष्य है।

पहले कहा जा चुका है कि यह संस्कृतके छात्रोंको घाटा सहकर आधे मूल्यमें ही दिया जाता है। इस घाटेकी पूर्तिके लिये उसे सर्वदा संस्कृत-प्रेमी आचार्यों या धनिकोंसे सहायता लेनी पड़ी है जिनकी नामावली प्रकाशित की गयी है। ६—७ वर्षोंतक बन्द रहनेके बाद [illegible] वर्षसे यह पुनः प्रकाशित

हो रहा है। देश-कालके अनुसार इस समय इसे बड़ी कठिनाई उपस्थित होने लगी है-जिससे इस प्रकाशन समय पर नहीं होने पाता। इसके संचालक धन-चिंतामें ही व्यस्त रहते हैं।

हमलोग यह अनुभव करते हैं कि यदि इसे दो तीन वर्षों तक सिर्फ छपाईका मूल्य मि जाया करे तो यह समयसे निकल कर ग्राहकवृद्धि कर सकेगा। इसके लिये इसे अधिकसे अधि १५००) वार्षिककी आवश्यकता है। जहां संस्कृत-प्रेमी धर्माचार्य, महन्त, राजा-महाराजा और धर्म मानी व्यक्ति हजारों रूपये साल खर्च करते हैं, वहां इस संस्कृत भाषाके एक सच्चे सेवक सुप्रभात यथाशक्ति सहायता कर संस्कृतछात्रोंकी उन्नतिके लिये परमसहायक होनेमें वे क्यों विलम्ब करें

अतः सभी संस्कृतानुरागी भारतीय संस्कृतिके प्रेमी आप महानुभावोंसे प्रार्थना है कि अप सामर्थ्य एवं उदारताके अनुसार कुछ समय तक १००) ५०) २५) १०) वार्षिक सहायता प्रदान इस अच्छे और ठोस कार्यकी रक्षाकर अवश्य पुण्य और यशके भागी बनें।

आपकी इस सहायता द्वारा देशके लिये अत्युपयोगी धार्मिक, सामाजिक, साहित्यि ऐतिहासिक, प्रभृति सब प्रकारके अत्युत्तम परम आवश्यक कार्य सम्पन्न होंगे, जिससे सहस्रों शिक्ष और शिक्षार्थी अनायास अमूल्य सेवोपयोगी शिक्षा लाभ करके वर्तमान जगत्में उद्योगी कर्मण्य सजीव बन सकेंगे। इससे बढ़कर पुण्यप्रद कार्य क्या हो सकता है?

अन्तमें संस्कृतसे सब प्रकार सम्बन्ध रखने वाले सभी विद्वानों और विद्यार्थियोंसे सानु प्रार्थना है कि वे अति शीघ्र इसके किसी प्रकारके भी ग्राहक बनें और इसको सब प्रकारकी सहाय करने-करानेके लिये सर्वदा सम्बद्ध रहें, जिससे यह प्रति मास नयी-नयी मनोरञ्जन और सर्वोप गिनी शिक्षाप्रद सामग्री लेकर संस्कृत भाषाकी उन्नतिके साथ उनको सब प्रकारके अभ्युदय प्रदा अग्रसर हो सके।

पण्डितबाबा महन्त केशवराम उदासीन (रानूपाली)
गङ्गेश्वरानन्दशास्त्री, षड्दर्शनाचार्य ( मण्डलेश्वर )
काशीनाथ शास्त्री ( सर्वतन्त्र स्वतन्त्र, पण्डितराज )
श्रीमुकुन्द झा बखशी ( महामहोपाध्याय ) सभापति
मदनमोहनशास्त्री ( प्रिन्सिपल-मारवाड़ी संस्कृत कालेज, काशी। उपसभापति
नारायणपति त्रिपाठी-( रईस-जमीन्दार )
श्रीसदायतन पाण्डेय ( एम० एल्० सी० )
(भू० पू० सभापतिः-अ० भा० वर्णाश्रम-स्वराज्य-सङ्घ)
कालीप्रसाद शास्त्री वैयाकरणशिरोमणि ( प्रधान व्याकरणाध्यापक-काशी विश्वविद्यालय )
सभापति उपाध्याय ( प्रिन्सिपल-विरला-संस्कृत-महाविद्यालय )
हरिनाथशास्त्री दर्शनाचार्य गोयनका-महाविद्यालय काशी )
सूर्यनारायण शुक्ल, ( प्रोफेसर गवर्नमेन्ट संस्कृत कालेज, काशी )

नरसिंहाचार्य वरखेडकर ( सम्पादकः-अमरभार
देवीनारायण एडवोकेट, ( बी० ए०, एल. एल.बी. कोषाध्यक्ष
वीरमणि उपाध्याय एम० ए०, बी० एल्०, साहि त्याचार्य ( प्रिन्सिपल-रणवीर पाठशाला, वि० वि० )
तारादत्त पन्त, साहित्याचार्य (सम्पादक-"वल्ल
सुरेश्वरानन्दशास्त्री ( मन्त्री उदासीन विद्याल
विन्ध्येश्वरी प्रसाद शास्त्री ( सम्पादक ) ( सम्पादक-"सूर्योदय" )
केदारनाथशर्म्मा सारस्वत ( व्यवस्थापक, सम्पा "सुप्रभातम्" )
गोपालशास्त्री दर्शनकेशरी साहित्याचार्य, न्या काव्यतीर्थ, प्रधानमन्त्री



संस्कृत-साहित्य-समाज, काशी।

# शुभाभिनन्दनम् ।

महोपाध्याय--धर्म्मशास्त्राचार्य्य–विद्यावागीश–सनातन-धर्म्म —मार्तण्ड–तर्कालङ्कारप्रभृतिविरुदविभूषितानां पण्डित प्रवराणां श्रीरेवाशङ्करमेघजीशर्म्म— महोदयानां महारुद्रयागप्रसङ्गे प्रदत्तम् ।

श्रीमान्नुनेवालसुविप्रजातिः,
श्रीदेलवाडाकर इत्युपाख्यः ।
श्रीमेघजिद्वंशविवर्धनोऽसौ,
रेवादि यः शंकरनामधेयः ॥ १ ॥
गुप्तप्रयागे वररुद्रयागं चकार सद्धर्मधिया क्रमाव्दे ।
भूभक्तिदुर्गेशविशाखिपक्षे,
शुक्ले दशम्यां शशिवासरे च ॥ २ ॥
श्रीकुंकुमामेघजितोः सुपुण्यैः
संप्राप्त–सद्वैभवभागधेयः ।
अखंडसौभाग्यमय–प्रभावती—
स्वधर्मपत्न्या सहितः स दीक्षितः ॥३॥
श्रीलेकुवेरी रणछोडनामा,
चैवं दयाशंकरगौरिवेशः ।
द्वौ भ्रातरौ तस्य सहायरूपौ,
क्रियाविधौ साधयतः प्रवृत्तिम् ॥ ४ ॥
श्रीरेवाशंकरः शास्त्री श्रीप्रभावत्यनुसृतः ।
महारुद्राख्ययागेऽस्मिञ्छ्रद्धया दीक्षितोऽभवत् ।
विप्रान्वव्रे त्रयस्त्रिंशज्जपहोमादिकर्मसु ।
आचार्यत्वे तथा वव्रे कृष्णशंकरभूसुरम् ॥ ५ ॥
वव्रे काशीकरं विप्रं ब्रह्मत्वे घन-पाठिनम् ।
ब्रह्मर्षिं श्रीहरेरामं सदस्यत्वे नियुक्तवान् ।
महायोगे प्रवृत्तः श्रीरेवाशंकर आत्मवान् ।
तदा श्रीशंकर[illegible]चार्य्या [illegible]जेश्वराश्रमाः ॥६॥

# कविराज-धर्म्मदास-स्मृतिः ।

श्रीमत्समस्तबुधवैद्य--शिरोमणिर्यो
विभ्रद्विभूतिभरभूषितपादपद्मः ॥
सत्कीर्त्तिपुञ्जधवलीकृत-दिक्समूहः
श्रीधर्म्मदासकविराजगुरुर्मदीयः ।.१॥
नागक्षोणीग्रहाब्जे परिमितसुसमे,
वैक्रमे माघमासे ।
शुक्ले भीष्माष्टमीये शुभशशिदिवसे
पूर्वभागे किलाह्नः ।
वैद्याम्भोजोष्णरश्मिः क्षितितलमहितः
काशिराजोपमानः ।
सञ्जातोऽखर्वगर्वो गददल-
दलनः शौर्य्यसम्मानभूमिः ॥२॥
बाल्येऽत्यन्तप्रवीणोऽध्ययन-
विधिजनिः सन्निरोध्यो गुरूणाम् ।
कैशोर्येऽधीतशब्दो भुजगपति-
निभो न्यायनिष्णातचित्तः ।

---

आगत्य शारदापीठा-रूढाः स्वं दर्शनं ददुः ।
यागसिद्धेः शुभं चिह्नमिदं विज्ञेयमद्भुतम् ॥९॥
दीक्षितः शास्त्रिवर्योऽसौ चतुर्दश्यां सिते दले।
यागपूर्णाहुतिं कृत्वा सकुटुम्बः प्रमोदताम् ॥ १० ॥
तस्मात्सुयज्ञोत्सवजातहर्षा-
स्तस्मै प्रदद्मस्तमनुप्रसन्नाः ।
इदं सुपत्रं त्वभिनन्दनाढ्यं,
रुद्रेष्टिसन्दर्शनपूतभावाः ॥ ११ ॥
रेवाशंकरशर्मन् ! विद्या बाल्ये त्वयाधीता ।
सा त्वया [illegible] श्रीदेवीदासपाठशालायाम् ॥१२॥

साहित्ये भारवीव प्रतिपदरचनाचातुरीमभ्युपेतः
पश्चाद् गङ्गाधराख्यात् बुध-
वरमहितादायुषो वेदमुच्चैः ॥३॥
अध्येष्टानल्पबुद्धिस्तदनु
गुरुशुचा किं कृतौ तर्कहीनो
ह्यश्विभ्याञ्चोपमेयश्चरक-
मुनिकृतेर्जल्पकल्पैकविज्ञः।
तस्मिन् स्वर्गं प्रयातेऽपर-
गुरुमकरोन्मातुलं स्वं परेशम्
सोऽप्यासीद्वैद्यवन्द्यो निज-
गुरुसदृशो जल्पकल्पेऽविकल्पः ॥४॥
तेजोग्रामो भगिन्यास्तनय-
मलमथोऽपाठयच्छद्महीनः।
सोऽयं तस्मादधीत्यामरभिषगुपमः
संवृतो वैद्यवृत्तौ।
छात्राणां कल्पशाखी बुधवर-
निकराणाञ्च कर्णोपमानः।
श्रीमान् श्रीधर्म्मदासो बुध-
मुकुटमणिर्वेदतत्त्वार्थवेत्ता ॥५॥
सोऽयं दुर्दैवयोगान्निधनमुप-
गतोऽस्माकमर्च्यो गुरूणाम्।
नानाशास्त्रौघजातप्रवरबहु-
लसत्वोधराशिः सुशीलः।
श्रीमद् गङ्गाधरस्यावनिसुरमहि-
तस्यावतारो द्वितीयः।
श्रील-श्रीधर्म्मदासो निखिल-
गुणगणालङ्कृतो वैद्यराजः ॥६॥
अश्वाङ्काङ्कशशाङ्क-सम्मित
शुभश्रीवैक्रमे हायने।
भाद्रे मासि सिते दले च
नवमी तिथ्यां शुभे वासरे।
पूर्वाह्ने दशवादनस्य समये
श्रीधर्म्मदासो गुरुः।
संसारञ्च विनश्वरं खलु तनुं
त्यक्त्वेशलोकं गतः ॥७॥
एतच्छिष्याः प्रवीणाः दिशि
दिशि सुतरां भ्राजमाना यशोभिः
देशे देशे विदेशे गुणगण-
गरिमा गीयते तैरजस्रम्।
ग्रामे ग्रामे जनान्ते बुधवर-गुरुतां
शत्रवो व्याहरन्ति।
अप्येनं जागरूकं निज-विमल-
यशो भ्राजमानं समीक्ष्य ॥८॥
वसन् गार्हस्थ्ये योऽभवदिह विदेहोपमतनू
न रागद्वेषाभ्यां कथमपि कदापीह लसति।
रिपौ सूनौ शिष्ये द्विषदि च समानं व्यवहरन्
हहा! यातोऽकस्मात्त्रिदिववसतिं वन्धचरण ॥९॥
क्षोणीपट्टैकवन्द्या सुरगुरु नगरी
शाङ्करीयातिरम्या।
शून्या संभासते वै बुधगण-
सहिता वैद्यराजेन हीना।
क्रन्दन्ते यद् वियोगान्नृपबुध-
जनताश्चामयैः क्राम्यमाणाः।
हाहा! क्वासि प्रयातो न च
निज जनतामीक्षसे स्नेहहीनः ॥१०॥
यः सुश्रुतस्य चरकस्य समस्तविद्या-
विज्ञानरत्न-निवहं हृदयेन बिभ्रत्।
हाहा! हतोऽद्य विधिना विमुखेन सोऽयम्
नानादिगन्तजन-वल्लभ-धर्म्मदासः ॥११॥

—श्रीसत्यनारायण शास्त्री
(भिषक्शिरोमणिः, विद्यावारिधिः)

## अमरभारत्या विषये ईषत् ।

[ श्रीमान् स्वात्मानन्दः ]

अमरभारती-प्रथमेऽङ्के सम्पादकीये लेखे "अमरभरती-सामाजिक-कलहेषु दृक्पातमपि कर्तुं नेच्छति । पश्चापि मतानि समम् एव लालयिष्यन्तोऽमरभारत्ये" ति महत्युदारता प्रकटीकृता ।

अमरभारत्याश्चतुर्थाङ्के सम्पादकान्यतमीये 'महाविष्णु स्तुत्याख्यलेखे स्वमतीयं विष्णुसर्वोत्तमत्वरूपं तत्त्वं प्रतिपादितम्, तत्र विष्णुसहस्रनाम तच्छाङ्करभाष्यं प्रमाणत्वेन प्रदर्शितं माध्वमतसमर्थकैः । तदेतैः प्रागद्वैते कृतप्रतिज्ञैर्लेखकैरद्वैतमतोद्धारकश्रीशङ्कराचार्यवचनेषु यत्सत्तदङ्गीकार्यमिति न्यायात्प्रामाण्यमिदानीमङ्गीक्रियते । पुरा यच्छ्रीशङ्करपादैस्तु सौगतमतमेव वैदिकत्वेन प्रख्यापितमिति यत्तेषां शृङ्गाटकनादः; सोऽनेन तेषामेवोपर्युक्तलेखेन स्वयमेव निराक्रियते ।

कः खल्विह विष्णुस्सर्वोत्तमो न वेति संदिग्धे ? को वाऽत्र स्वलेखस्य सत्यत्वप्रतिपादनाय श्रीशङ्कराचार्य्यान् साक्षीकर्तुमभ्यर्थयते ? लोके ह्यभीष्टां देवतामधिकृत्य-ग्रन्थरचयितारस्तैस्तैरनुरूपैर्विशेषणैर्ग्रथयन्ति पद्यानि गद्यानि वा, विप्रतिपन्नस्थल उदाहरन्ति श्रुतीतिहासादि प्रमाणान्याचार्य्यश्रेष्ठस्य कथनं वा !

एवमद्वैतमतोद्धारकश्रीशङ्कराचार्य्यप्रामाण्यमङ्गीकृत्य 'अमरभारत्याः' षष्ठेऽङ्के येन केन प्रकारेणाऽद्वैत-सौगताऽभेदसाधक—द्वैतराद्धान्तप्रतिपादक—वादिभूषणाख्यग्रन्थप्रकाशनं यत्कुर्वन्ति तत्तु विद्वद्वृन्दारमेषु वैमनस्यगरलतरुबीजारोपणमेव विदधति । आपादमौलिरयं ग्रन्थो द्वैताद्वैतमतभूषणदूषणप्रवण इति पठितैतद्ग्रन्थानां न परोक्षम् । महदाश्चर्यं यत् "सौष्ठवाकृष्टहृदयैः प्रकाश्यते" इति लिख्यते । तत्रेदमनुयोक्तव्यम् "किं तत्सौष्ठवं यदाकृष्टहृदयैर्भवद्भिः प्रकटीक्रियते, शब्दसौष्ठवं वाऽर्थसौष्ठवं वा? आद्यस्यानन्यादृशत्वाभावेन द्वितीयमेव वक्तव्यम् । तच्च मतखण्डनरूपं तस्मादेव प्रकाशितमिति—अलमन्यथाभिद्रवमाणेन सौष्ठवेन ।

कथं नामात्र वैमनस्यं पण्डितानाम् ? काव्यशास्त्रविनोदेन कालो गच्छति धीमतामिति नीतिवचनानुसारेण विनोद एवेति चेत्तर्ह्युत्तरप्रत्युत्तरखण्डनमण्डनात्मकसामान्यस्य कथमतथात्वम् ? तत्रापीष्टापत्तिश्चेत्प्रेम-कलहयोः किं वैलक्षण्यम् ? अमरभारती, सामाजिककलहेषु दृक्पापातमपि न चिकीर्षतीतिप्रतिश्रुत्य मन्दं मन्दमत्र विषये हस्तप्रसारणं "मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यदिति किं न स्मारयति ? सत्येवं सुप्रभातसम्पादकमहोदयैः अमरभारती-माध्वमत-प्रचारिकेत्युच्यते; तत् किमनुपपन्नम् ?

अमरभारत्याश्चतुर्थाङ्के मध्वनवमीमहोत्सवप्रशंसनं स्वहस्ताभ्यां स्वपादपूजनमनुकरोति । तत्रैव परुन् मध्वनवमी—महोत्सवे परीक्षायां प्राथम्येनोत्तीर्णेभ्यो विद्यार्थिभ्यः स्वर्णपदकानि व्यतीर्यन्तेत्यलीकमेव नहि निश्चितपूर्वफला परीक्षाभवितुमर्हति, कांश्चिद्दुद्दिष्टान्विद्यार्थिनः पारितोषिक-वितरणार्थं परीक्षितान्सम्पाद्य किल प्रादायिषत पदकानि तेभ्यः । पुनश्च पदकोपादानमपि रजतसुवर्णमिति श्रुतिः समीचीना । रजतस्वर्णं हि शुक्तिरजत-गगनकुसुम-वन्ध्यातनय-सोदरम्, यथार्थरजत पदकमितिलेखे महतां महत्त्वं न कुण्ठीभवति ।

अतीतवत्सरे भाद्रपदपञ्चम्यां द्वैतमतस्थापन स्मारकसभा विहिता । अस्मिन्नब्दे तदभावस्तद्द्वैतवाद-पीठस्य कामपि दीनां दशाम्, आरम्भशूराः खलु दाक्षिणात्याः इतिनीतिवचनस्याव्यभिचरितत्वं च द्योतयति । कथमप्यागामि मध्वनवमीमहोत्सवं कृच्छ्रेणापि सम्पाद्याऽस्मिन् वत्सरे प्राथम्योत्तीर्णेभ्यो नाचदेन्यमयः पदकमपि वितीर्य द्वितीयं बुद्धिलक्षणं परिरक्षन्तु माध्वसभाप्रतिनिधयः ।

यद्यमरभारती तृणतोला ( घासटोला ) न्तःस्था किमेतादृश-क्षुद्राक्षेप-विपक्षीकरणेनेत्युपेक्षेत चेदियमभावविरक्तिमूलेति कोनु कोविदो न वेद ।

एतदग्रेऽपि लेखक-महोदयेनाधिक्षिप्ताऽसीदमरभारती । [illegible] प्रकाशितम् ।—सम्पादकः ।

पण्डितराज श्री १०८ स्नेहिरामशास्त्रिणां स्मारिकायाः—

[ संसार में सबसे सस्ती [

# श्रीराजस्थान—संस्कृत—कालेज—ग्रन्थमालायाः—

त्वर्यताम् ! अभिनवा प्रतिपत्तिः !! अक्षुण्णोऽयं परैः पन्थाः समर्थ्यतायाः !!!

राजसंस्करणम् ! विलोक्यताम् !! जीर्णोद्धारः शेखर-भूषणयोः !!!

१. वैयाकरणभूषणसारः—दर्पणेन, काशिकया, श्रीगुरुप्रसादशास्त्रिकृतया विषमस्थलटिप्पण्या च विराजितः । २)

२ रघुवंशकाव्यम् [ २-५ सर्गाः ] श्रीगुरुप्रसादशास्त्रिकृतयाऽतिमहत्या परीक्षोपयोगिन्या सरलया'ऽभिनवराजलक्ष्म्या'ऽलङ्कृतं, भाषाटीकोपेतञ्च, ... ... ।=)

३. अभिज्ञानशाकुन्तलम्—परीक्षोपयोगिन्या परमसरलया श्रीगुरुप्रसादशास्त्रिकृतया, अभिनव राजलक्ष्मी' टीकया विराजितम्, १)

४. मूलरामायणम् [ टीकात्रयोपेतम् ] नागेशभट्टकृतया टीकया, 'अभिनवराजलक्ष्म्या' 'भाषा-टीकया' च विलसितम्, =)।।

५. पञ्चतन्त्रस्य—अपरीक्षितकारकम्, श्रीगुरुप्रसादशास्त्रिकृतया 'अभिनवराजलक्ष्मी' टीकया विराजितम्, =)।।

६. लघुकौमुदी-श्रीगुरुप्रसादशास्त्रिकृतया 'अभिनवराजलक्ष्म्या' युता अतीव चमत्कारिणी-मुद्र्यते।

७. सिद्धान्तकौमुदी—[ स्त्रीप्रत्ययान्ता ] 'अभिनवराजलक्ष्मी'युता— मुद्र्यते।

---

१. लघुशब्देन्दुशेखरस्य-[ टीकाषट्कोपेतस्य—] अव्ययीभावान्तो भागः । नागेशभट्टशिष्यवैद्यनाथविरचितयाऽतिप्रामाणिकया—भैरवमिश्रकृतटीकातोऽपि चतुर्गुणितया-मूलपङ्क्तिलापनकप्रवणया-१ चिदस्थिमालया, २ काशिकपरिष्कारसर्वस्वायमानया दण्डिभट्टकृत-'चन्द्रिक' या, ३ प्राचीनया "ज्योत्स्ना'ख्यया विवेचनया, ४. सदाशिवभट्टीयेन तिलकेन, ५ 'विषमी'नाम्ना प्रसिद्धया विवेचनया ६. श्रीगुरुप्रसादशास्त्रिकृतया चमत्कारकारिण्या 'वरवर्णिन्या' च टिप्पण्या-समलङ्कृतः--सुन्दरम-सृणतरपत्रेषु मुद्रितः ।

सर्वविधपुस्तकप्राप्तिसङ्केतः—

मैनेजर—

**भार्गव पुस्तकालय, गायघाट, बनारस सिटी ।**

प्रकाशकः--श्रीगौरीनाथ पाठकः, सुप्रभात-कार्यालयः, बनारस सिटी ।

मुद्रक--श्रीबालकृष्ण शास्त्री, ज्योतिषप्रकाश प्रेस, विश्वेश्वरगंज, काशी । ६५४

The Suprabhatam

Registered. NO.A. 1348.

वार्षिकमूल्यम्—२)

छात्रेभ्यः—१)

# संस्कृत-साहित्य-समाजस्य मासिक-मुखपत्रम्




तिमिरततिमुदस्यद् भेदतारा विलुम्पन्, नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विबुधविहगवादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः "सुप्रभातम्" ॥

एकादशेऽब्दे } भाद्राश्विन-कार्त्तिक्यः पूर्णिमाः, १९९२ { ६-७-८ संख्याः

सम्पादकौ :—
श्रीकेदारनाथशर्मा (सारस्वतः)
श्रीविन्ध्येश्वरी प्रसाद शास्त्री च

निरीक्षक :—
श्रीगोपालशास्त्री, दर्शनकेशरी, साहित्याचार्यः
न्याय-काव्यतीर्थः

प्राप्तिस्थानम्:—
व्यवस्थापकः—सुप्रभात-कार्यालयः, काशी ।

# सुप्रभातस्य संरक्षकाः

काञ्ची कामकोटि पीठाधीश्वराः हिजहोलिनेस जगद्गुरवः श्रीशङ्कराचार्याः, कुम्भकोण

रानूपाली—स्थानाधीश्वराः हिजहोलिनेस श्रीमहन्त पण्डित बाबा केशवरामोदासीन-महोदयाः, रानूपाली, अयोध्या ।

देहरादून—स्थानाधीश्वराः रायजादा श्रीमहन्त बाबा लक्ष्मणदासमहोदयाः, देहरादूनम् ।

गोरक्षनाथ—मठाधीश्वराः श्रीमहन्त दिग्विजयनाथमहोदयाः, गोरखपुरम् ।

परमहंस—परिव्राजकाचार्य—श्रीमन्मण्डलेश्वर—श्रीगङ्गेश्वरानन्दशास्त्रिमहोदयाः, षड्दर्श-चार्याः, काशी ।

काशीस्थविश्वाराध्यजगद्गुरु—संस्थानाधीश्वराः श्रीपञ्चाक्षरशिवाचार्य—महोद जंगमवाड़ी मठः, काशी ।

श्रीमान् जगद्गुरु-शिवानन्दराजेन्द्र-महोदयाः, बालेहोन्नूर ( कर्णाटदेशः )

माननीय राजा बलदेवदास विरला महोदयाः, काशी ।

माननीय सेठ घनश्यामदास विरला महोदयाः, कलकत्ता ।

माननीय सेठ युगलकिशोर विरला महोदयाः, कलकत्ता ।

अखिल भारतीय संस्कृत—साहित्य—सम्मेलनम् जयपुरम् ।

आर्यप्रतिनिधि सभा—देहली च ।

---

## कृतज्ञता—प्रकाशः ।

शारदनवरात्रावकाशे सुप्रभातप्रचाराय गोरक्षपुरं गतैरस्माभिः श्रीमतां गोरक्षमठाधीश्वराणां परमोदा-ह्विनां मान्यप्रवराणां श्रीमहन्त श्री १०८ दिग्विजयनाथमहोदयानां कृपया तत्र स्वल्पीयान् प्रचारो विहितः तत्र गोरक्षपुर मण्डलान्तर्गत—तमकुही—नरेश्वरैः श्रीमन्महाराजइन्द्रजित्प्रतापसिंहशाहीमहोदयैः २५) वार्षि साहाय्यं सुप्रभाताय प्रतिज्ञातं प्रदत्तं च । संरक्षकत्व—स्वीकाराय च प्रतिज्ञातम् ।

गोरक्षपुरीय—श्रेष्ठिवर्यैः बाबू पुरुषोत्तमदासमहोदयैरपि २५) वार्षिकं दातुं स्वीकृतम् ।

अस्माभिर्निवेदिताः "कल्याण"—सम्पादकाः हनूमान् प्रसाद पोद्दार महोदयाः स्वमित्रद्वारा५०) साहाय्य-मेककालिकं दापयितुं पत्रं—प्रेषितवन्तः ।

प्रसिद्धदानवीरैः श्रेष्ठिप्रवरयुगलकिशोरविरलामहोदयैः सुप्रभातस्य ऋणापाकरणाय १००) प्रदत्तम् अस्य संरक्षकत्वं च स्वीकृतम् । एतस्मात् पूर्वमपि श्रीघनश्यामदास विरलामहोदयैः ५००), श्रीमद्भि रा बलदेवदास विरलामहोदयैश्च २००–३०–२५–क्रमतो मध्ये मध्ये साहाय्यं प्रदत्तमासीत् ।

सर्वेभ्यः संरक्षकेभ्योऽनुग्राहकेभ्यश्च सहर्षं धन्यवादान् वितरन्तो वयं तेषां सहर्षं कृतज्ञतामुरीकुर्मः ।

श्रीकेदारनाथ शर्म्मा सारस्वतः

व्यवस्थापकः

# ग्राहकाः-पाठकाश्चावदधतु

सुप्रभातस्य प्रथमा संख्या चैत्रे, द्वितीया च वैशाखे यथासमयं प्रकाशिता । तदनन्तरं यन्त्रालयस्य द्विशत-मितं ऋणमवशिष्टमासीत् । ग्रीष्मावकाशे ग्राहका अपि यथावस्थिता नासन् । समाजस्य कार्यकर्तारोऽपि नासन् । एतस्मिन्नवसरेऽस्माभिः संप्रार्थिता अनेके सुप्रभातानुग्राहका न किमपि साहाय्यमकुर्वन् । श्रावणे मासि नासीदस्माकमाशा यत् पुनः सुप्रभातम् प्रचलिष्यतीति । एवं विमनायमानेषु कामपि नवीनां सञ्चालन व्यवस्थां विचारयत्स्वेवास्मासु राणोपालीस्थानाधीश्वराः संस्कृत-भाषानुरागिणो यतिवराः श्रीकेशवरामोदासीनमहोदयाः काश्यां समागताः प्रार्थिताश्चास्माभिः सविनयं सुप्रभातस्य संरक्षकत्वं स्वीकृत्य कार्यं समचालयन् । मासत्रयस्याङ्कं प्रकाश्य पुनरपि तस्यामेव विपत्तौ निमग्नं 'सुप्रभातम्' केषाञ्चन प्रकाशित नामधेयानां श्रीयुगलकिशोर बिरलामहोदयानामन्येषाञ्च संस्कृतानुरागिणां कृपया पुनरप्यङ्कत्रयात्मकमिदं प्रकाशितम् । साम्प्रतं मार्गपूर्णिमातः प्रतिपूर्णिमं यथा समयं प्रकाशयिष्याम इति सुदृढोऽस्माकं विश्वासः ।

समुपयोगिनः, आकर्षकांश्च लेखान् सङ्गृह्य वयं ग्राहकाणामाराधने प्रयतिष्यामः । ग्राहकैरपि विचारणीयं यदेकया मुद्रया नैतावती सुसम्पादिता काऽपि पत्रिका कस्यामपि भाषायां प्रकाशिता भवति । एतत्तु संरक्षकाणामनुग्राहकाणाञ्च कृपा—विलसितमेव ।

यदि सुप्रभातस्य द्विसहस्रग्राहकाः स्युस्तदा दारिद्र्यमस्य सर्वदा दूरीभूतं स्यात् । षट्शतं ग्राहकाणामिदानीं वरीवर्त्ति । यद्येको ग्राहको ग्राहकमेकं विदध्यात्तदा सत्वरमेवेयं दुरवस्था दूरमपसृता भवेत ।

वयमाशास्महे यत् अस्माकं ग्राहकाः सुप्रभातस्य कार्यम्, अवस्थाम्, साहसम्, मूल्यञ्च विचार्यैकैकं ग्राहकं नूनं विधास्यन्ति । आँग्लपत्राणां हिन्दीपत्राणां कथं प्रचारो भवति ? वयमप्यभिलषामो यत् संस्कृते कल्याणस्येव सुप्रभातस्य प्रति संस्कृतज्ञं सर्वत्र प्रचारः स्यात् । वयमप्यत्र प्रयताः स्मः, अस्माकं ग्राहका अप्यत्र प्रयतन्ताम् । न समुत्साहिनां कृते किमपि दुष्करं विद्यते । मन्ये, अस्माकं ग्राहकाः स्वल्पतमं साहाय्यमस्माकं नूनं विधायानुगृहीष्यन्तीति ।

कियतः कालात् सुप्रभातेन सह महाभाष्यस्यापि प्रकाशनमवरुद्धमासीत् । तस्य प्रकाशने संशोधने च भूयान् समयो लगति । वारद्वयं शोधनार्थं लवपुरे सम्पादकानां सविधे गच्छति । एवं व्यतिकरे तस्य सम्पादका अस्माकं प्रियसुहृदो महावैयाकरणाः वेददर्शनशास्त्रपारदृश्वानो ब्रह्मदत्तजिज्ञासुमहोदयाः स्वयं वाराणसीं प्राप्य भाष्य-दीपिकायाः सम्पादन—प्रबन्धं विधाय परावृत्ताः । मन्यामहे, ग्राहका नूनमिदानीं दत्तावधाना अस्माकं साहाय्यमाचरिष्यन्तीति ।

साम्प्रतं ग्राहकेभ्यः सानुरोधं प्रार्थयामो यत्ते सत्वरमेव स्वीयं वार्षिकशुल्कं पञ्चदशदिवसाभ्यन्तरएव प्रेरयन्तु । यदि ग्राहका एव शिथिला भविष्यन्ति तदातु सर्वोऽपि प्रयत्नो विफलतामियादस्माकम् । यैर्ग्राहकत्वं स्वीकर्त्तव्यं स्यात्तैस्तु धनादेश एव विधेयः, वी० पी० द्वारा प्रेषणे कदाचित् कार्यालयस्य ग्राहकाणाञ्च हानिः स्यात् ।

व्यवस्थापकः—

# विषयानुक्रमणिका।

# सुप्रभातम्

एकादशेऽब्दे | भाद्राश्विन–कार्त्तिक्यः पूर्णिमाः, १६६२ | ६–७–८ संख्याः


## गङ्गाशिखरिणी ।


श्रीमान् राजपण्डित उमापति द्विवेद-महोदयः "कविपतिः"


शिलाभेदम्भेदं हृतसकलखेदम्परिवहत्
परब्रह्मानन्दद्रवसदृशमम्वाम्बु शिशिरम् ॥
इदम्प्रालेयाद्रेर्हृदयकरुणास्रोत इव ते-
सदान्तस्सन्तापं शमयतु च पापं सुरधुनि ! ॥ १ ॥

हिमाद्रेरुत्तुङ्गप्रवरशिखराग्रच्युततनो-
र्विधोर्मन्ये विम्बादमृतमधिकञ्च्योतत इव ॥
उताध्यद्रिभ्राम्यद्विधिकरगतम्भाजनमहो·
शिलाघाताद्भग्नम्प्रवहति तदीयोदकमदः ॥ २ ॥

गिरीन्द्रादुद्भूयोदधिमधिसरन्ती प्रतिपदम्-
प्रदत्तार्घ्या पादैस्तुहिनशिशिरैर्निर्झरशतैः ॥
जगद्वन्द्या मातस्त्वमुदित-महेशान-महिमा
वहस्यद्धा नीरा[illegible] ॥

इदन्दैन्यन्दुःखन्दुरितमिति दारिद्र्यकगदौ-
तपो योगश्चायं सुचरितमियं रागविरतिः ॥
कथाशेषं सर्वं भवति भवतीभासुरतर-
प्रवाहोद्यद्वीचिप्रविलसितलीलाकलकले ॥ ४ ॥

जगत्स्रष्ट्रे स्वेष्टावगतिविधये प्रार्थितहरे-
र्मुखेन व्याख्यातस्वसलिलतनुत्वेद्धमहिमा ॥
धुनीतामाधन्यान्यधिधरणि धर्म्याध्वनिरता-
वुदारा ते धारा स्फुरदमृतसारा सुरधुनि ! ॥ ५ ॥

विहाय क्लिष्टान्तःकुविषयकषायाहिपतयो
लभन्तेऽनेकस्मिञ्जनुषि यतमाना अपि न यत् ॥
तदेतद्ब्रह्म त्वत्सलिलमयतामेत्य वहति-
धिगेताँस्त्वन्नीरे य उ न धृतधीरेद्धमनसः ॥ ६ ॥

शिवत्वम्ब्रह्मत्वञ्जननि हरिता वेन्द्रपदवी
कियन्नामैतत्ते जलभरनिमज्जत्तनुजुषाम् ॥
ततो ब्रूयास्त्वत्तः, किमु परतरन्तत्त्वममले !
भजेयं यद्भूयस्सुरणदि ! यजेयन्त्रिजगति ॥ ७ ॥

विनिर्भिद्याद्रीन्द्रामृदुदृषदुदीर्णा अपि दरी-
र्द्रुतम्विद्राव्य द्रागदमदुरितोद्दीपितदरान् ।
वितुङ्गन्तो गङ्गे ! गतिविविधभङ्ग्या तव चिर-
न्तरङ्गा माऽवन्तु त्रिजगदधिनाम्पुङ्गवमये! । ८ ॥

शुभे मान्ये वर्षे वसुवसुनवेन्दावधिशुचौ-
सिते जीवे गङ्गावतरणपदे ब्राह्मसुतिथौ ॥
कृता कर्त्रा सेयन्नृपतमकुहीनायककरेऽ-
र्पिता तुष्ट्यै स्यात्सन्ततसुखदगङ्गाशिखरिणी ॥ ९ ॥

कविपतिरुमापतिर्य्यत्पाणितलच्छायमाश्रितो जयति ।
स श्रीन्द्र[illegible]नयोपहार्य्यैः कृतः स्तुत्या ॥१०॥




# दीपावली

विद्यावाचस्पतयः पं० शालग्रामशास्त्रिणः, साहित्याचार्याः

नीलाम्बरा विततसन्तमसा विचन्द्रा
द्यौः शोभतेऽद्य समुदञ्चिततारकाभिः ।
शाटीं सुमौक्तिकयुतामसितां वसाना
लज्जावगुण्ठितमुखीव नवा वधूटी ॥

दीपाश्च मन्दमरुता परिवेपमानाः
प्रासादपङ्क्तिषु परिस्फुरिताः समन्तात् ।
आभान्ति नूतनवधूमभिचञ्चलास्ते
नेत्राञ्चला इव कुतूहलिदिग्वधूनाम् ॥

रागप्रसाधिततनु र्नयनाभिरामा
सर्वाङ्गदर्शितगुणा लसति प्रकाशे ।
काम्या नवीनविभवैरभिगम्यरूपा
भूमिर्विभाति नववारवधूरिवेयम् ॥

नीलाम्बरेण कलधौतजिता च भासा
व्याप्ते भृशं विलसतोऽद्य दिवस्पृथिव्यौ ।
सख्याविव प्रमुदिते विकसन्मनोज्ञे
संवीतगात्रयुगले च सितासिताभ्याम् ॥

भूमिं दिवं च परिलोकयतां जनाना-
मेवं विभाति हृदयेषु सितासिताभ्याम् ।
पूर्णा समागतवती किममा तिथिः सा
लक्ष्मीवतीं ननु सभाजयितुं सकामाम् ॥

चन्द्रेण चोडुनिचयेन च गर्वितां द्यां
भूमिर्दिदर्शयिषुरद्य निजां समृद्धिम् ।
चन्द्राननाभिरधिहर्म्यतलं सहासा
दीपालिभिश्च परितः प्रसृताऽतिमात्रम् ॥

स्मेरानना युवतयो भवनेषु दीपान्
रम्यान् वपन्ति परितो ललितैः करै र्यत् ।
निस्तन्द्रचन्द्रसविधे विकसन्ति तानि
तारागणानिव वमन्ति सरोरुहाणि ॥

दीपावलिः सकलभारतवर्षगामी-
न्यासीत् पुरा तदधुना न तथा चकास्ति ।
ग्रामेषु दीनजनताऽवनताऽतिघोरै-
र्दारिद्र्यदुःखदमनैर्विमनायते यत् ॥

राजाऽभवत् प्रकृतिरञ्जनतो यदत्र
दुःखं प्रजासु नृपलाञ्छनमेव जज्ञे ।
दीपावलिः सकललोचनलोभनीया
तत्राऽन्वभूयत मुदा किल भारतीयैः ॥

षष्ठांशहारि खलु राजकमार्जवेन
दुःखं समस्तमहरत् सततं प्रजानाम् ।
याऽस्ते विदेशिजनशासनपद्धतिः साऽ-
द्याऽर्धाऽधिकं च हरते विमुखा च दुःखे ॥

ग्रामा वृताः सततघोरघनान्धकारै-
र्दीना जनाश्च वसनाऽशनहानदूनाः ।
तज्जीर्णवस्त्रदशया कलयन्ति दीपान्
केचित् कुतैलपृषतैर्घटखर्परेषु ॥

गोविन्द ! विन्द गोवृन्दं मर्दयाऽरीन् मुरार्दन !
सङ्घे शक्तिं समास्थाय भारतं भा-रतं भवेत् ॥

# सम्पादकीयम्

## पञ्चभूत-परिषद् ।

कार्तिकमासे पूर्वप्रकाशित-सूचनानुसारं पञ्चभूतपरिषदः त्रिदोषपरिषदश्च प्रथमाधिवेशनं हिन्दूविश्वविद्यालयीय-संस्कृतकालेज-भवने महता समारम्भेण सम्पन्नम् ।

स्वागताध्यक्षाणां पूज्यपादमालवीयमहोदयानां निमन्त्रणेन विभिन्नप्रान्तेभ्यो भूयांसः प्रतिनिधयः समागता आसन् । दिनत्रयं यावत् पञ्चभूतपरिषदः, दिनत्रयञ्च त्रिदोष-परिषदः, अन्तिमे दिवसे च निर्णय-परिषद इति सप्ताह पर्यन्तं सम्मेलनमिदं सम्पन्नम् । सम्मेलनस्यास्य विषये प्रचुरतरं वक्तव्यमस्माकमवशिष्यते । लिखितमपि स्थानाभावात्, त्वरया च नास्माभिः प्रकाशितमस्मिन्नङ्के । सङ्क्षेपतस्त्विदमेव वक्तव्यं यत् 'दूरस्था भूधरा रम्या' इति न्यायानुसारं यावान् कोलाहल आसीत्, न तावत्साफल्यं लब्धमत्र संयोजकैः । प्रधानं कारणमत्रेदमेवासीत्, यत् परिडताः, वैद्याश्च बहवः पाश्चात्य-विज्ञानस्य ज्ञानं न धारयन्ति, एवं द्राक्तराः प्राचीन विज्ञानानभिज्ञाः सन्ति । एवं स्थिते उभयोर्विचारः समन्वयो वा कथंकारं संभवेदिति बुद्धिमन्तो ज्ञास्यन्त्येव । पञ्चभूतचर्चायां सुप्रसिद्धैर्विद्वद्वरेण्यैर्महामहोपाध्याय-गिरिधरशर्मभिः सर्वाधिकं सम्मेलन-साहाय्यं विहितम् । तेषां गुरुचरणैः सुप्रसिद्धवैदिकविज्ञानविद्भिः श्रीमधुसूदनझा-विद्यावाचस्पतिमहोदयैश्च पाश्चात्य-सिद्धान्त-खण्डने प्रवर्त्तं पराक्रान्तम् । तेषां वैदिक—विज्ञान-सम्बन्धे प्रत्यहं पृथक्भाषणञ्च पञ्चदिनानि यावत् सञ्जातम् । तेषां भाषणैः पाश्चात्यानामुपरि प्रबलः प्रभावः समापतत् । एतदतिरिक्तं किञ्चित् किञ्चित् बहुभिरुक्तम् । परं न कोऽपि विचार्य-विषयेषु सम्यगध्ययनं विधाय समागत आसीदिति केवलमभिनय प्रदर्शनमात्रं सञ्जातम् ।

अस्य सम्मेलनस्य निदानभूतो हरिशरणानन्द महाशयः सर्वथा धन्यवादार्हः । तेनैव महात्मना 'त्रिदोष-मीमांसा' नामकं पुस्तकं लिखितम्, यत्र पञ्चभूतानां त्रिदोषाणाञ्च खण्डनं कृतम् । तमेवावलम्ब्य केषुचन वैद्येषु कोलाहलः प्रचलित आसीत् । स एव कोलाहलस्त्रिदोष-परिषद्रूपेण प्रतिफलितः । परमेष केवलमभिनय एवासीत् । यदि शनैः शनैः कार्यमेतत्प्रचलिष्यति, तदा भाविनी काले किमपि साफल्यं सम्भाव्यते । परं वैद्येषु मर्मज्ञानां संस्कृत-विदुषां पाश्चात्य-सिद्धान्तविदाञ्चाभाव एव ।

सम्मेलन-संयोजकैर्वाराणस्यां विद्वद्भ्यो निमन्त्रणमपि न सम्यक् प्रदत्तम् । वाराणसेयानां विदुषां तत्राभावः खटखटायतेस्म । यद्यपि संयोजकैः कलह-कोलाहल-भीत्या कृतमेतत् परं सभायां विदुषामपि दारिद्र्यं नासीदत्र ।

विवादनिर्णयस्तु प्रकाशित एव भविष्यति । अत्र स्वीयं विशदाभिप्रायमग्रिमाङ्के निवेदयिष्यामः ।

× × ×

## विद्यावाचस्पति—श्रीमधुसूदनझा महोदयाः

पञ्चभूतादिपरिषदि सम्मिलितानां जयपुर राजसभा-प्रधान-पण्डितानां समीक्षा—चक्रवर्तिनां श्रीमतां मधुसूदनझा-विद्यावाचस्पतिमहोदयानां नाम प्रायः संस्कृत-पत्रपाठकानां परिचितमेव स्यात् । इमे सप्ततिवर्षवयस्काः सन्ति । वाराणस्यां प्रातःस्मरणीय-चरणानां कैलाशवासिनां सर्वतन्त्र-स्वतन्त्र पं० शिवकुमारशास्त्रिणां शिष्याश्चिरात् जयपुर—महाराजाश्रितास्तत्रत्यराजसभाप्रधानपण्डिताः सन्ति । एभिः सप्ततिवर्षं यावत् वेदानां तदङ्गशास्त्राणां ग्रन्थानाञ्च स-गवेषणमध्ययनं विधाय तत्रत्यविज्ञानान्वेषणञ्च कृत्वा परश्शताः ग्रन्थाः निर्मिताः ।

अस्माभिरपि कर्णाकर्णिकया श्रीमतां नाम समाकर्णितमासीत् । परमत्र हिन्दूविश्व—विद्यालये द्वित्रिवारमेतेषां भाषणं श्रुत्वा परं प्रमोदमानमानसैरस्माभिर्निवेदिताः संस्कृत—साहित्य-समाज-सदस्याः सादरं सबहुमानञ्च तेषामभिनन्दनं विधातुं प्रयताः सञ्जाताः । तदनुसारं पण्डित चक्रवर्त्तिनां महामहोपाध्याय-प्रमथनाथतर्क-भूषण-महोदयानां सभापतित्वे काशीस्थविदुषां महती सभा सम्पन्ना ।

समाचारोऽयमभिनन्दनपत्रेण सहैव प्रकाशितः । वयं तेषां भाषण-विषये स्वीयमभिमतं तेषां भाषणेन सहैव प्रकाशयिष्यामः । साम्प्रतन्त्विदमेव वक्तव्यं यत् तेषां भाषणं विस्तृतां टीकामपेक्षते । यत्तैरुक्तं तत्सूत्ररूपमेवासीत् । वयं तान् प्रार्थयामो यत्ते स्वीयान् विचारान् विशदं प्रकाश्य सकल-लोक-समक्षं सप्रमाणं स्थापयेयुः, येन लोकभ्रान्तिरपहृता भवेत्, तेषामन्वेषणञ्च सफलं स्यात् ।

वयं महतां विज्ञानराशिभूतानां पाश्चात्य विज्ञानगर्वितेषु प्रसह्य सोपपत्तिकं वैदिक-विज्ञान-महत्त्वं संस्थापयतां वेदमूर्त्तीनामेतेषां सादरं सहर्षञ्च स्वागतं शुभाभिनन्दनञ्च कुर्महे । प्रार्थयामहे च तेषां चिरजीवित्वं श्रीकाशीविश्वेश्वरात् ।

* * * *

## ‘रत्नाकरस्य’ ‘वेदाङ्कः’ ।

श्रीमतां मधुसूदनझामहोदयानां सप्ततिवर्षवयः समाप्तौ जयपुरे कमपि महोत्सवं कर्तुं प्रयत्यते श्रीमद्भिर्महामहोपाध्याय-गिरिधरशर्मभिरन्यैश्च जयपुरीयैः पण्डित-प्रकाण्डैः । वयमत्र नितरां मोमुघमानाः सुप्रभात-पाठकान् सविनयं सानुरोधञ्च निवेदयामो यत्ते चणेऽस्मिन् नूनं साहाय्यमाचरन्तु यथाशक्यम् । यतो हिन्दीभाषाभिज्ञा वंग-महाराष्ट्रादि प्रान्तीयभाषाभाषिणोऽपि स्वीयान् साहित्य-सेविनो विदुषो महत्सम्मानमाचरन्ति । विगतेषु वत्सरेषु हिन्दीसाहित्य—सेविभिः सुप्रसिद्धस्य महावीरप्रसादद्विवेदस्य महत्सम्मानं विहितम् । सहस्रशो मुद्राणां व्ययः समजनि अभिनन्दनग्रन्थनिर्माणमपि जातम् । वस्तुतो विचारे न तादृशं पाण्डित्यं द्विवेदमहाशयस्य समाकलयामो यादृशं हिन्दीभाषाभिज्ञैः प्रख्याप्यते । अस्माकं विद्वांसस्तु सर्वथा परिश्रमशीला अगाध-पाण्डित्यमहार्णवा अपि संस्कृतज्ञैर्न सम्मान्यन्ते, प्रत्युत रागद्वेष-मात्सर्यादिना तेषां विरोधमाचरन्ति । संस्कृतज्ञानां जीवने वयं सरसतायाः सहृदयतायाश्च सामान्याभावमेव प्रायः समालोकयामः ।

वयमत्र वैदिकविज्ञानराशिभूतानां सम्माने सर्वथा बद्धपरिकराः ग्राहकान् पाठकानपि निवेदयामः तत्र सोल्लासं सम्मिलितुम् । धन्यवादांश्च वितरामः संस्कृतरत्नाकर-सञ्चालकेभ्यः सम्पादकेभ्यश्च ।

## प्राचीन-व्याकरण-परीक्षा ।

कियतः कालात् युक्तप्रान्तीय-राजकीय-परीक्षाध्यक्षैर्नव्य-प्राच्य-न्याययोरिव व्याकरणेऽपि भागद्वयं विहितम् । प्राचीन-व्याकरण-परीक्षायाः प्रधानं कारणमिदमेव यत् संस्कृतवाङ्मय-महार्हरत्न-भूतस्य पातञ्जलमहाभाष्यस्य सम्प्रदायनाशो न भवेदिति । वस्तुतो नवीन-प्रणाल्या प्राचीनानां व्युत्पत्तिप्रदानां ज्ञानविज्ञानपूर्णानां ग्रन्थानां लोपः समजनि । तेषामुद्धाराय प्रयत्नो नितरामावश्यक एव । एतदर्थं परीक्षाध्यक्षाः सर्वथा धन्यवादार्हाः सन्ति ।

एतदपि जानन्त्येव सहृदयाः पाठका यदिदानीं संस्कृतजगति प्राय ईदृशी दुरवस्था विद्यते, यदन्धपरम्परां विहाय यदि कोऽपि किमपि करोति चेत् स खलु नास्तिक इति कथ्यते । वेदानां शुकनिर्विशेषं रटनं कृत्वा यत्र तत्र कियत्सु पणेषु शूद्राणां गृहे श्रावणन्तु सनातनधर्मस्याङ्गभूतं विद्यते । परं यदि कोऽपि वेदार्थं पठति चेत् स खल्वार्यसामाजिकत्वेन परिगण्यते । एवमेव ॐ कारस्य लेखनेऽपि साम्प्रतं भयं भवति । वदन्ति यदयमार्यसामाजिक इति । तथैव महाभाष्यपठनमप्यार्यसामाजिकतायां परिगण्यते काशीस्थेषु केषुचन विद्यालयेषु । हन्त ! कथंकारं संस्कृतस्य समुन्नतिः स्यादिति न प्रतीमः ।

अस्माभिः श्रुतं यत्केचन छात्राः प्राचीन व्याकरण-परीक्षां दित्सवो विद्यालयाध्यक्षैर्निरुध्यन्ते । तेभ्यः परीक्षाशुल्कं वृत्तिप्रदानञ्च न क्रियते । ते वदन्ति यच्छेखराध्ययनं कुर्वन्तु भवन्तस्तदैव सर्वं मिलिष्यति, नो चेदार्यसामाजिकानां युष्माकं वृत्तिलाभो न भवेदिति । एवमेव वराका दरिद्राश्छात्राः प्रसभं निरुद्धा अनिच्छयैव नव्यव्याकरणं पठन्ति ।

वयन्तु सम्भावयामो यद्ये प्राचीन-पवित्र-ग्रन्थानामध्ययने बाधां कुर्वन्ति त एव वस्तुतो नास्तिकाः सन्ति । संस्कृतज्ञानामीदृशं एतन्मालोच्य वयं चकिताः, समुद्विग्नाश्च स्मः । न वयं शेखरादिपठन पाठन-विरुद्धाः, परं यावदिच्छं छात्राणामध्ययननिरोधे कोऽधिकारोऽधिकारिणामिति न जानीमः । ये नवीनव्याकरणश्रद्धालवस्ते नवीनं पठन्तु, ये प्राचीने श्रद्धालवस्ते प्राचीनं पठन्तु । प्राचीनाः पण्डिताः प्राचीनार्षग्रन्थानां पठन-प्रतिबन्धकास्तदा तु नवीना एव तत्र श्रद्धालवो वस्तुतः प्राचीन संस्कृति-संरक्षकाः सन्ति । वयमधिकारिणोऽनुरुन्ध्मो यत्ते छात्राणामिदं प्रतिबन्धं सद्यो दूरी कुर्वन्तु ।

सुप्रभातकार्यालयद्वारा अस्माकं प्रियसुहृद्भिः श्रीमद्भिः पण्डितप्रवरैर्ब्रह्मदत्त-जिज्ञासुमहोदयैः प्राचीन-व्याकरण-पिपठिषूणां छात्राणां दुरवस्थितिमालोच्य वृत्ति-परीक्षाशुल्कादिदानव्यवस्था विहिता । सप्तछात्रेभ्यः शुल्कप्रदानम्, पुस्तकप्रदानम्, षण्मासं यावन्मुद्राचतुष्टय-वृत्तिप्रदानं कृतम् । अतस्ते सर्वथा धन्यवादार्हा अस्माकं सुरभारतीप्रणयिनाञ्च ।

वयमाशास्महे यदधिकारिणोऽस्मिन् विषये दत्तावधाना भविष्यन्ति । अन्ये च सुरभारती-प्रणयिनः श्रीमन्तं जिज्ञासुमहोदयमनुकरिष्यन्तीति ।

## काशी-पण्डितानां धर्मव्यवस्था ।

धार्मिकविवादेषु वाराणसीस्थ-विदुषां धार्मिकव्यवस्था, निर्णयात्मिका माननीया च भवति

नाविदितं हिन्दूधर्माभिमानवताम् । पूर्वं काशीस्था विद्वांसो यथाशास्त्रं धर्मव्यवस्थां प्रायश्चित्त-विधानञ्च लिखित्वा समुद्घोष्य शास्त्र-मर्यादां धर्म्म-मर्यादामक्षुण्णां स्थापयामासुः ।

परं मध्ये कियन्ति वर्षाणि यावत् धर्म्मव्यवस्था व्यापाररूपेण द्रव्याधीना सञ्जाता । येनाधिकं प्रदीयतेस्म स निष्प्रायश्चित्तो निष्पापश्च भवतिस्म । एवं केचनविद्वांसः पक्षे, केचन विपक्षे व्यवस्थां विधाय जीविकार्जनं कुर्वन्तिस्म । येन महान् विप्लवः समजनि । अ-सनातनधर्म्मिणः, सनातनधर्म्मिणश्चात्रविषये वाराणसी-पण्डितानां हास्यं कुर्वन्तिस्म । तद्दुःखदुःखितेन सुप्रभातेन बहुधा विलिखितं पूर्वाङ्केषु ।

एवं व्यतिकरेणाश्रद्दधानैर्जनैरियं प्रथा परित्यक्ता । परं तथापि यतस्ततः समागच्छन्ति धर्म-निर्णयाय काश्याम् । श्रुतमस्माभिर्यद् काशीस्थैः कैश्चन विद्वद्भिर्विधवा-विवाहादिषु धनं गृहीत्वा व्यवस्था प्रदत्ता । अत्र तेषां हस्ताक्षराणि विद्यन्ते ये समाजे विधवा-विवाह-नाम्ना स्वीयं परस्य च मस्तकं मोटयितुमुद्युक्ता भवन्ति । हन्त ! पतनं भगवतः सनातनधर्मस्य । त्याग एव ब्राह्मणानां ब्राह्मणत्वम् । तमेवं परिहाय स्वल्पतमलोभेन धर्मं शास्त्रञ्च तिरस्कुर्वन्त एव वस्तुतो नास्तिकाः, प्रच्छन्नशत्रवश्च धर्मस्य ।

* * * *

## श्रीशालग्रामशास्त्रिणां स्वास्थ्यम् ।

लक्ष्मणपुरस्थाः सुप्रसिद्धाश्चिकित्सकप्रवराः श्रीमन्तःशालग्रामशास्त्रिणः संस्कृत-संसारस्य नापरिचिताः सन्ति। इमे प्रातःस्मरणीयानां गङ्गाधरशास्त्रिणाम् , शिवकुमारशास्त्रिणाञ्च शिष्याः साहित्यशास्त्रस्य दर्शनशास्त्रस्य च मर्मज्ञाः गभीराश्च विद्वांसः सन्ति । एभिर्लिखिताः केचन प्रबन्धाः, भाषणानि च कियन्ति प्रगाढतरं पाण्डित्यं प्रथयन्ति । कियतः कालात् आयुर्वेद जगति समवतीर्णैरेभिस्तत्र महती क्रान्तिरुत्पादिता । 'आयुर्वेद महत्त्व' नाम्नि ग्रन्थे शास्त्रिपादानां गभीरमन्वेषणं प्रकाण्ड-पाण्डित्यञ्च विद्योततेतराम् । वयन्तु सम्भावयामो यद्वैद्येषु केचन गणनीया एवैतेषां समकक्षाः पण्डित-प्रकाण्डाः सन्ति । भाषणे, लेखने, अध्यापने, समालोचनायाम् , साहित्य-विवेचने, दर्शनशास्त्र-विचारे, चिकित्सा-विषये सर्वत्रैवाविहत-प्रसरा हिन्दी साहित्येऽपि लब्धकीर्तयः सन्ति ।

हिन्दी-संसारे साम्प्रतं बहवो मूर्खा अव्युत्पन्नाश्च साम्राज्यं कुर्वन्ति । तेषां धर्षणेऽप्येभिः सततं पराक्रान्तम् । हिन्दीभाषाभिज्ञा अपि शास्त्रिपादानां नाम्ना बिभ्यति । एतेषां संस्कृतभाषा हिन्दी भाषा च नितरां स्फीता, सुमनोहरा, सरसा, प्रौढा च भवति । नैतादृशाः संस्कृतविद्वांसो बहवः सन्ति । सर्वतोऽधिकं प्रमोदस्थानन्त्विदं विद्यते यदिमे सनातनधर्मस्य प्रबल पक्षपातिनः सन्ति क्रियारूपेण, न केवलं वाङ्मात्रेण ।

कियतः कालादिमे पक्षाघातरोगग्रस्ताः सन्ति । षण्मासादारभ्य रोगशय्यां सेवमानाः साम्प्रतं किञ्चिल्लब्धस्वास्थ्याः सन्ति । अस्वास्थ्येनैव त्रिदोषपरिषदि न सम्मिलिताः । यद्येतेषां तत्रागमनमभविष्यत्तदा नूनं सम्मेलनस्य साफल्यमभविष्यत् । यत इमे पाश्चात्य-पद्धतिमर्मज्ञास्तेषां सिद्धान्तखण्डने सिद्धहस्ताः प्रबलाश्च सन्ति । परं दुर्दैवादेतेषामागमनं न सञ्जातम् ।

वयमेतेषां सत्वरं स्वास्थ्यलाभं जगदीश्वरात् प्रार्थयामहे । एतादृशानां विदुषां महत्यावश्यकता विद्यते संस्कृत-समाजे ।

# श्रीकाशी-पण्डितसभा ।

## अष्ट-चत्वारिंशत्तम-वार्षिकोत्सवः

काशीपण्डितसभाया अष्टचत्वारिंशत्तमीयो वार्षिकोत्सवः, वाराणस्यां मारवाड़ी—पाठशालायां—वैशाखशुक्ल-पञ्चम्यां पण्डिततल्लजानां श्रीपञ्चानन तर्करत्न-महोदयानां सभापतित्वे समजनि। अस्मिन्नवसरे सर्वेऽपि वाराणसेयविद्वांसः संस्कृतप्रेमिनागरिकाश्च सम्मिलिताः। वैदिकमन्त्रपाठानन्तरं पण्डितप्रवराः षड् दर्शनाचार्याः श्रीपद्मनाभशास्त्रिमहाशयाः सभाया, अतिप्राचीनत्वं संस्कृतप्रेमिलोकोपकारकत्वं तथा-म०म० श्रीकैलासचन्द्रशिरोमणिमहोदयस्थापितत्वञ्चाभिलक्ष्य सम्यगभ्यभाषन्त।

तदनन्तरं निम्ननिर्दिष्टाः प्रस्तावाः सर्वसम्मत्या स्वीकृताः।

१—इयं सभा श्रीस्वामिपुरुषोत्तमानन्दगिरीणामाकस्मिक-निधने शोकं प्रकाशयति, तत्स्थाने च तदुत्तराधिकारिणां श्रीकृष्णानन्दगिरीणां संरक्षकत्वं स्वीकरोति।

२—सद्योजात "क्वेटा" भूकम्पात्त नष्टधनप्राणभवनेषु लोकेषु सहयोगं प्रदर्शयन्ती विश्वेश्वरं प्रार्थयते सर्वत्र शान्तये सुखाय च।

३ इयं सभा घोरविरोधं प्रकटयति राजकीय संस्थायां ( Assambly ) बुद्धगयास्थ-बुद्धमन्दिरस्य बौद्धाधीनतापादनप्रस्तावे तथा मद्रास-प्रान्तीयसंस्थायां कृत-हिन्दूमठानां नूतन-व्यवस्थाप्रस्तावे च।

४—सभेयं सुतरां हर्षं प्रकाशयति—यत् श्रीमाधोरामसण्डमहोदयेभ्यो "रायबहादुर" इत्युपाधिर्दत्तः। अनया च—सभया लक्ष्मीकुण्डे दर्शनविद्यालयः, तथा अगस्त्यकुण्डे पुस्तकालयश्च समुद्घाटितः।

अन्ते च सभा निम्ननिर्दिष्टमहोदयेभ्य उपाधीन् वितीर्णवती।

१ पं० रामयत्नओझा "महोपाध्यायः"
२ ,, बद्रीनाथवैद्यः "भिषक्शिरोमणिः"
३ ,, काशीराम सारस्वतः एम०ए०"विद्यावाचस्पति"
५ ,, ताराचरण भट्टाचार्यः "साहित्यरत्नाकरः"
६ ,, वामाचरणभट्टाचार्यः "न्यायकेसरी"
७ ,, माधोरामसण्डः "धर्मभास्करः"
८ जानकीनाथसारस्वतः "वैद्यरत्नम्"
९ पं० नारायणविनायकरावपाठकः "गायनाचार्य"
१० पं० लक्ष्मीधरपन्तः "धर्मशास्त्ररत्नम्"
११ ,, देवीनारायणसान्धिविग्रहिकः [ अड्वोकेट ] "विद्याधा..."
१२ ,, वीरमणि उपाध्यायः 'न्यायरत्नम्' एम०...
१३ ,, ईशदत्तपाण्डेयः "कविरत्नम्"
१४ ,, ज्वालारामनागरः साहित्यवाचस्पति।

## शोक-समाचारः

व्यतीतभाद्रपदशुक्लचतुर्थदिने गद्गस्थाने ... वेदान्तादिसर्वशास्त्रसाम्राज्याभिषिक्ताः पांडुरंगीकुल... लकायमानाः श्रीकृष्णाचार्यपादाः स्वाकालिकात्... रहेणापारशोकसागरे विद्वद्रत्नानि निमज्जयामासुरि... निवेदयितुं नितरां दुःखाकरोत्यास्माकीनं मानसं... ते श्री १००८ श्रीमन्मध्वाचार्यप्रतिष्ठितपीठाधिष्ठिते... सर्वतन्त्रानियन्त्रितामन्त्रणेभ्यः श्री० प० प० श्री १... उत्तरादिमठाधिपश्रीसत्यध्यानतीर्थश्रीचरणेभ्योऽधीत... निखिलागमान् तत्र संसत्सु एतेषामखण्डप्रकाण्ड... ण्डित्यं दर्शदर्शं दृष्टान्तरंगैःश्रीचरणैः सर्वाधिकार... नियुक्ताः आकायत्तति तत्कार्यमद्यतं चातन्वन्—

वाराणसेयसंख्यावन्मण्डलस्यैतेषां श्रीचरणैस्... क्रमागतानामत्र वैदुष्यपरिचयो वर्तत एवेति न पारि... परिचायनमवशिष्यते, एतेषां निरन्तरविरहदहनदु... माणहृदयेषु पुत्रभ्रातृमित्रेषु सम्मेल्य "संविभक्त... सहवेदनं भवतीतिन्यायमनुसरन्तः अनुकम्पया... श्रीजानकीजानिं प्रार्थयामहे यत्श्रीकृष्णाचार्यपादा... नश्चिरशान्तिं प्रददात्विति—जितेन्द्रियाचार्यः

सुप्रभातस्यान्यतमसंरक्षकः



श्रीमान् राजाबलदेवदास-विरलामहोदयः

विरला जानन्ति गुणान्, विरलाः कुर्वन्ति निर्धने स्नेहम् ।
विरलाः परकार्यरताः, परदुःखेनापि दुःखिता विरलाः ॥

# भारते वृजिनां गणराज्यम् ।



महापण्डितः श्रीराहुल साङ्कृत्यायनः, त्रिपिटकाचार्यः



येन केनाऽपि कारणेन भवतु, आर्याणां पुरातनेतिवृत्तस्य सामग्र्येव कृच्छ्रेण स्तोकमेव लभ्या। तस्याः संचये च भारतीयविदुषां, विशेषतः संस्कृतपण्डितानां सर्वथोपेक्षा दृश्यते—इदमतीव खेदकरम्। अन्येषु जनपदेषु (द्वीपेषु) पुराणभाषापण्डिता एव पुरातन्याः सभ्यताया इतिहासस्य च संरक्षका अभवन्। अत्र ततः सर्वथा विप्रतीपम्। संस्कृतपण्डितास्तेषु विषयेषूपेक्षमाणाः, अन्ये नव्यशिक्षिताः पाश्चात्यसरणिशरणाः, तत्र प्रयतमानाः सन्ति। केषांचिदधुनाऽपि भ्रमः, यद्भारतीयाः सर्वदा तन्त्रैकवर्तिनो लोक (प्रजा)--तंत्रशासनापरिचिताः। तेषां प्रकृतिविरुद्धं लोकतन्त्रशासनम्। तत्र कियत्तथ्यमिति पालिग्रन्थेभ्यः संगृह्य समूलं वृजीनां गण (लोक) राज्यविषये लिखामः। समये यथावकाशं मद्र-शाक्यादिगणराज्येऽपि वक्ष्यामः। तत्रेदमवधेयम्, यस्मिन् काले यवन (Greece) गणराज्यस्य तारुण्यं तस्मिन्नेवात्रैषां जराजीर्णकलेवरपातः। उदाहरणतः--४२३ विक्रमपूर्वाब्दे (480 B. C.) वृजीनां पतनम्।

पाणिनीयानां नास्ति अदृष्टचरं 'मद्रवृज्योः कन्'* मद्रेभ्यो वृजिभ्यश्च जनपदाभ्यामत्र शैषिकः कन् प्रत्ययो विधीयते, तेन मद्रका वृजिका इति प्रयोगाः सिध्यन्ति। ततः पूर्वं 'धूमादिभ्यश्चे'ति सूत्रे, तस्मिन्नेवार्थे वुन् प्रत्ययं विधाय धौमकाः, वैदेहकाः साध्यन्ते, तत्रापि धूमादिगणे वर्ज्यशब्दः पठ्यते। द्वावपि वृजिवर्ज्यशब्दावेव ? जनपदस्य वाचकौ। पालिपुरातनमागधिभाषायां वज्जीति प्रयोगस्तस्य इत्थं पाणिनिकाले वृजिजनपदस्य प्रसिद्धिरुपलभ्यते। गन्धाराभिजनेन महर्षिणा बहुदूरवर्तिनोऽस्य स्मरणं द्योतयति वृजीनां सुख्यातिम्। पाणिनिकालस्तु भगवतो बुद्धस्य परिनिर्वाणाद्बहुशतकपूर्वमेव स्यात्, यदा प्राचः काशि–कोशलाङ्ग–मगधविदेहानारभ्य शरावतिप्रत्यग्वर्तिभ्य आमद्र-सिन्धु-कम्बोज-गन्धारवाह्लीकेभ्यः संस्कृतभाषा लोकभाषाऽभूत्। पाणिनिसूत्रमर्मज्ञानामेतत्प्रतिपादनं सिद्धसाधनमेव। वृजीनां गणो बहु पुरातन इति तत्रोद्धरिष्यमाणैर्वचनैः प्रकटीभविष्यति। कदा वृजीनां गणः समस्थाप्यतेत्यतीतघनतमसि विलीनतया दुःशकं वक्तुम्। तत्र बुद्धनिर्वाणात् ४२६ विक्रम (483 B. C.) पूर्वाब्दात् पूर्वं पञ्चशतवत्सराः सप्तशतवत्सरा अपि भवितुमर्हन्ति। विक्रमपञ्चशताब्द्यारम्भभवेनाऽऽचार्यबुद्धघोषेण स्वीयायां बुद्धवचनसंग्रहरूपायाः पिटकत्रय्याः भाष्यभूतायां स्वीयायामर्थ (अट्ठ) कथायां वृजीनामुत्पत्तिविषये काचित् कथाऽलेखि, तत्र सर्वपुरातनेतिहासकथासुलभा लोकोत्तरा अपि घटना अवर्णिषत्, तासु

* पाणि० ४-२-१३१।

तत्त्वार्थाधिजिगांसुभिर्नीर-क्षीर-न्यायेन विश्लेषयितुं न दुष्कराः।

"वाराणसिराजस्य किल महिषी वन्धुजीवक-पुष्पसदृशीं मांसपेशीं प्रासूयत। ततोऽन्या देव्यः सुवर्णबिम्बसदृशान्पुत्रान्प्रसूयतेऽग्रमहिषी मांसपेशिमितिचिन्तयित्वा तां मांसपेशिमेकस्मिन् भाजने प्रक्षिप्यान्येन पिधाय राजमुद्रिकया लाञ्छयित्वा गङ्गायाः स्रोतसि प्राचिक्षिपत्। ततस्तद्भाजनं गङ्गायाः स्रोतसि प्रायात्, तस्मिंश्च समयेऽन्यतरस्तापसो गोपालकुलमाश्रित्य गङ्गातीरे वसतिस्म। स प्रातरेव गङ्गामवतीर्णस्तद्भाजनमागच्छन्तं दृष्ट्वा कर्पट इति विज्ञायाग्रहीत्, ततस्तामक्षरपङ्क्तिकां राजमुद्रिकां च दृष्ट्वा वस्त्रस्य तां मांसपेशीमद्राक्षीत्। तथा हि तस्य दुर्गन्धपूतिभावो नास्तीत्याश्रमे नीत्वा शुद्धाऽवकाशेऽस्थापयत्।

अथ ततः सुवर्णबिम्बसदृशौ दारिका दारकश्च संजातौ। तयोस्तापसस्य पुत्रस्नेह उदपादि। ततः प्रभृति सदा क्षीरभक्तं लभते, स भक्तं भुक्त्वा, क्षीरं दारकयोर्मुखे सिञ्चति। तयोर्यद् यद् उदरं प्रविशति, तन्मणिभाजनगतमिव सन्दृश्यते, एवं 'निच्छवि' तावभूताम्। अपरे पुनराहुः—स्यूत्वा स्थापिताविव तयोरन्योऽन्यं लीना छविरभवत्। एवं निच्छविच्चाद्वा लीनच्छवित्वाद्वा लिच्छवीति प्रसिद्धाः। अथ तं तापसं गोपालका आहुः—भदन्त, अस्मभ्यं दारकौ देहि, वयं पोक्ष्यामः; प्रव्रजितानां दारकपोषणं न अनुरूपम्। तापसः—महापुण्यौ दारकौ अप्रमत्ततया वर्द्धयध्वम्, वर्द्धयित्वा चान्योन्यं विवाहसम्बन्धं कारयत। पञ्चगोरसैः राजानं सन्तर्प्य भूमिभागं गृहीत्वा नगरं निर्मापयत, तत्र कुमारमभिषिञ्चत इत्युक्त्वा दारकौ प्रादात्। ते दारकौ नीत्वाऽपुष्यन्, वर्द्धमानौ दारकौ क्रीडन्तौ—अन्यान्दारकान् विजघ्नतुः, तेऽरोदिषुः, कथं रुदथेति पृष्टा इमौ निर्मातृकौ निष्पितृकावस्मानतीव प्रहरत इत्यवदन्। ततस्तेषां पितरः—इमावन्यान् दारकान् विहिंस्तः पीडयतः, नेमौ संग्रहीतव्यौ, वर्जयितव्यौ वर्जयितव्याविमावित्याहुः। ततः स प्रदेशः 'वज्जी' (वर्ज्या वृजव्यो वा) इति योजनत्रिशतपरिमाणः उच्यते। अथतंप्रदेशं गोपालका राजानं सन्तोष्याग्रहीषुः, तत्र च नगरं कृत्वा षोडशवर्षदेशिकं कुमारमभिषिच्य राजानं चक्रुः। तथैव दारिकया तं परिणाय्य नियमं विदधुः, न बहिर्दारिकाऽऽनेया, न चेतो दातव्येति। तयोः प्रथमसंवासेन द्वौ दारकौ जातौ, दुहिता च पुत्रश्च; एवं षोडशकृत्वो यमला दारका जाताः। ततस्तेषां दारकाणां वर्द्धमानानामारामोद्याननिवासस्थानार्थं नगरे त्रिः कृत्वो गव्यूत्यन्तरेण प्राकारं प्राचिक्षिपन्। तस्य पुनः पुनः विशालीकरणात् वैशालीत्येव नाम जातम्।"

इत्थं वृजिशब्दः कथं जातः कथं च तस्यैवापरः लिच्छविरिति विज्ञानम्। साम्प्रतं वृजिजनपदसीमादिविषये किमप्युच्यते। अग्र आगामिष्यता प्रबन्धेन दक्षिणस्यां गङ्गा वृजि-मगधजनपदयोः सीमेति निश्चितम्। पश्चिमस्यां मही (गण्डक्याः पुराणप्रवाह इदानीमपि 'मही' एव प्रसिद्धः) सीमेति प्रतिभाति। पूर्वस्यामेषां विदेहानां च सीमा-वल्गुमुदा (इदानीं 'वाग्मती') नद्युत्तरतः वर्त्तमान 'ढांग' ग्राम (मुजफ्फरपुरमंडले) समीपे वल्गुमुदां विहाय किञ्चित्पूर्वेण आधुनिक लखनदेयिशाखया सह (भाषादृष्ट्या ततोऽपि पूर्वं लखनदेयित्वा मार्गेण पुनर्वल्गुमुदानदी, यावद्वृद्धीगण्डकसम्भेदं, ततो दक्षिणाभिमुखमाधुनिक-नद

हनदुलारपुराग्रामाभ्यां यावद्गङ्गाम्। उत्तरस्यां यावद्धिमवतः। चित्रदर्शनेनेदं स्पष्टम्। उद्धृतकथायां योजनत्रिशतं वृजीजनपदस्य परिमाणम्। वर्तमानसीमामापनेन १६२ क्रोश ( ४०½ योजन ) तोऽधिकं न भवति। अत्र वर्तमानासु नदीषु महीगङ्गा-वल्गुमुदाः पिटकत्रयामुपलभ्यन्ते, हिमवतः प्रभवन्तीनां मध्यदेशवर्तमानानां यमुना-गङ्गा-सरय्वचिरावति-महीनां महानदीनामन्यतमैषा मही। वल्गुमुदाविषये सूत्रपिटकान्तर्गतखुद्दकनिकायस्थोदानग्रन्थे ते भिक्षव श्रावस्थीत ( बलरामपुरतो ) नातिदूरं वर्त्तमानं 'सहेटमहेट' नामक स्थाने, यत्र पुरा कोसलानां राजधानी आसीत्, विचरन्तो यत्र वृजयस्तत्रोपागमन्, उपगम्य च वल्गुमुदानद्यास्तीरे पर्णकुटीराणि कारयित्वा वर्षामूषुः।

वृजीनां राजधानी वैशाली ( विहारप्रदेशे मुजफ्फरपुरमण्डल इ दानीं 'बनिया बसाढ' ग्रामः)। तद्विषयेऽग्रे सविस्तरं लिखिष्यते-इतीदानीं तेषां केचन ग्रामा लिख्यन्ते। राजगृहतो गङ्गा पञ्चयोजनदूरं, ततो योजनमतिक्रम्य पारेगङ्गं वृजीनां विषयः। राजगृहतो वैशालीं, ततः मल्लेषु कुशीनगरं प्रति गमनावसरे मार्गे वर्तमाना केचनग्राम वर्णिताः। तत्र गङ्गातो वैशालीगमने पूर्वं 'कोटिग्रामः'। अयं वैशाली—नगर समीप एव आसीत्, नादिका कोटिग्रामतोऽग्रे, सहोदरयोः पुत्रा एकस्य तडागस्य पार्श्वयोः वसतिं चक्रुः, तस्यैव ग्रामयुग्मस्य नाम ❀ नादिकेति। ४२६ विक्रमाब्दे ग्रीष्मकाले नादिकांगतेन बुद्धेन सहानन्दस्य समालापाज्ज्ञायते, नादिका नासीत्साधारणो ग्रामः। तत्र 'गिजकावसथ' नाम्ना कश्चिदावसथः ( अतिथिशाला ) आसीत्। अनेकवारं नादिकायां तस्मिन्नावसथे सपरिषत्को बुद्धो वासमकल्पयत्। आनन्दः कथयति।

'साल्हो ( आषाढः? ) नाम भिक्षुः नादिकायां कालं कृतवान्, तस्य कागतिः कोऽभिसम्परायः? नन्दा नाम भिक्षुणी...? सुदत्तो नामोपासक ...? सुजाता नामोपासिका ....? ककुतसः (ककुधो) ...? कालिङ्गः ...? निकटः...? तुष्टः....? सन्तुष्टः ...? भद्रः ...? सुभद्रः ...?'।

इतः पूर्वस्मिन्नपि वर्षे बुद्धोऽत्रागतः, वर्षमध्ये उपासकेष्वेवैतावतां पुरुषाणां मरणमपि नादिकाग्रामो महाग्राम आसीदिति सूचयति।

नादिकाकोटिग्रामौ द्वावपि वैशालीतो नातिदूरमास्ताम्। वैशालिवासिनी आढ्यगणिका अम्बापाली कोटिग्रामं गत्वा द्वितीय भोजनार्थं ❀ निमन्त्रयाञ्चकार। कोटिग्रामाच्च बुद्धो नादिकां गतः। अम्बापाली स्वोद्याने भोज्यानि सज्जीकृत्य भगवन्तं व्यज्ञापयत्। ततस्तस्या उद्याने सपारिषत्को गत्वाऽभ्यवाहरत्। इत्थं कोटिग्रामो नादिका च वैशालीनगरासन्नावेव भवितुमर्हतः।

महापरिनिर्वाणसूत्रे वैशालीतः कुशीनगरगमने भण्डग्रामहस्तिग्राम-( ऽम्र )-ग्राम-जम्बूग्राम-भोगनगर-पावेति षड्ग्रामा आगताः। तत्र पावा, मल्लानां गणराष्ट्रे कुशीनगरात् गव्यूतित्रयं ( 12 Mils ) ककुत्थाऽपयतरकुनद्योरन्तरे या विद्यमाना आद्यत्विक पडरौना-'पपवुर'योरेकतरः, विशेषेणोत्तर एवापावं भूत्वा कुशीनगरगमनात्, वैशालिसमीपे महीं नोद तरदित्यपि स्पष्टम्। परिनिर्वाणात् (विक्रमपूर्व४२६ वैशाख पूर्णिमातः ) मासत्रयं पूर्वं ( वि०-पू०४२५

❀ विनयपिटके महावग्गे ६ स्कन्धे। ❀ महापरिनिर्वाणसुत्त-अट्ठकथा। दीघनिकाये महापरि निब्बाणसुत्तम्।

माघ पूर्णिमा-द्वितीयदिने ( वैशालीतः प्रस्थानम् । इत्थमियं यात्रा मासत्रयेण समाप्ता। इदानीं वैशालीतः 'केसरिया' ग्रामः सार्द्धपञ्चदशक्रोशं (31 Mils), ततःउत्तरोत्तरं 'अरेराज' सार्द्धनवक्रोशं ( 16 Mils ) 'लौरियानन्दनगढः, सप्तदशक्रोशं (34 Mils),पावा (पडुरः) षोडशक्रोशं , 32 Mils ), इत्थं चतुःषष्टि क्रोशं (28 Mils ) यात्रा मासत्रयेण जातेति बुद्ध स्यान्यचारिकानुरूपमेव । अरेराज-लौरियानन्दन-गढयोरशोकशिलास्तम्भौ, केसरियायां च स्तूपः, सूत्रयन्ति तेषां स्थानानां विशेषताम्। सा च विशेषताऽन्तिमयात्रारूपेण भवितुमर्हति । भण्डुग्रामादीनां पञ्चानां कतमः इति स्पष्टतया वक्तुं दुष्कर-न्ततथाऽपि नगराभिधेयत्त्वेन पावाद्वितीयत्त्वेन प्रचुरवसतिवंशावशेषपरिवृतो 'लौरियानन्दनगढ' एक भोगनगरम्।

वैशाली लिच्छव्यपरनाम्नी वृजीनां राजधानीयं वाल्मीकीय-रामायणे विश्वामित्राश्रमात् मिथिलागमनसमये, मिथिलातः पूर्वं विशालेति नाम्ना वर्ण्यते। सैंहलभाषायामपि 'विशाला' प्रोच्यते। तस्याः स्थापनावृत्तमागतपूर्वम् । पुनः पुनर्विशालीकरणाद्वैशालीति प्रसिद्धिरपि तत्र सूचिता।तदानीन्तननगरानुरूपेणेयमपि प्राकारवेष्टिता, पूर्वादिप्रधानचतुर्द्वारविशिष्टाऽसीत् । तत्र सप्तत्युत्तर सप्तशताधिक-सप्तसहस्राणां ( ७७७७ ) राजपदलाञ्छित-गणसभासदानां सोद्यानवापिकानि वेश्मानि, अनेकानि चैत्यानि (देवालयाः), मध्ये नगरं संस्थागारं ( Cauncil Hause ),भिक्षुविहाराः, विपणय ( यत्र काशिकवस्त्राणां बहुसमादरः ) रथ्याः, राज्ञा-मभिषेकपुष्करिणी। अत्रैव विद्यालये प्रधानाचार्यः काशिकोसलराजस्य श्रावस्तिपतेः प्रसेनजितः सतीर्थ्यः तक्षशिलास्नातकः महालिरन्धीभूतः पञ्चशतलिच्छविकुमारानपाठयत § "तस्मिन् खलु समये वैशाली सुभिक्षा भवति. सुसस्या, सुलभपिण्डा, *'रमणीया आनन्द वैशाली, रमणीयं उदयनचैत्यम् रमणीयं गोतमकचैत्यम्, रमणीयं सप्ताम्रचैत्यम् रमणीयं चापालचैत्यम्।

एषां चैत्यानां स्थानसन्निवेशोऽन्यत्रः-

† पूर्वस्यां वैशाल्यां उदयनं नाम चैत्यम्, दक्षिणस्यां गोतमकं चैत्यम् ,पश्चिमस्यां सप्ताम्रं उत्तरस्यां बहुपुत्रम्। चैत्यानि देवस्थानानि । परं तेषु देव प्रतिमा न श्रूयन्ते, देवप्रतिमावर्णनं वस्तुतः त्रिपिटके क्वापि नोपलभ्यते, तच्च तदात्त्वे प्रतिमा-विरहित-देव पूजामेव द्रढयति। प्रायेण वैशाल्यां बुद्धो महावने कूटागारशालायां निवसति। इदं महावनं नगराद्बहिः स्वयं जातवनमासीत्। अन्तिमयात्रायामम्बपाल्या प्रधानगणिकया नगरे वर्तमानं स्वीयं अम्बपालिवनं *'इयमहं भदन्त, आरामं बुद्धप्रमुखाय भिक्षुसंघाय ददामीत्यदायि।" ‡ नगरात् पश्चिमस्यां गव्यूतिमात्रदूरं कोऽपि वनखण्ड आसीत्। अत्रापि बुद्धस्य कादाचित्को वासः 'तिन्दुस्थाणु' नामकोऽन्योऽप्येकः परिव्राजकारामोऽभूत्।

'उपनगरं वेणुग्रामे † बुद्धस्यान्तिमो वर्षावासः (वि० पू० ४२६ वत्सरे आषाढ पूर्णिमात आश्विन पूर्णिमां यावत्)। प्रायेण परिव्राजकारामाश्चैत्यानि च तस्मिन् काले नगराद्बहिरेव भवन्तिस्म। नगराभ्यन्तरे गणराजकुलानामभिषेकमङ्गलपुष्करिण्यासीत्

† महावग्ग. ६ । * उदान ६.१. महापरिनिर्वाणसूत्रम्।
‡ मज्झिमनिकाय [illegible] लोहिच्चसुत्त अट्ठकथा।
† [illegible] महापरिनिर्वाणसूत्रम्।

यत्र गणसभ्यस्त्वप्राप्तिपदाभिषेको भवति। अट्ट-कथायामस्ति:—मल्लकुमारो वन्धुलः प्रसेनजितः सहाध्यायी तक्षशिलास्नातकः, स्वगणे प्रतिष्ठामलभमानः कोसलेश्वरेण सत्क्रियमाणः सेनापतिपदे प्रतिष्ठापितः। तस्य भार्या मल्लिका 'गर्भं लब्ध्वोत्पन्नदोहदा 'दोहदो मे उत्पन्न' इत्यवोचत्। को दोहद इति वैशालिनगरे गणराजकुलानामभिषेकमङ्गलपुष्करिण्यामवतीर्य स्नात्वा पानीयं पातुकामोऽस्मि स्वामिन्निति। वन्धुलः साध्वित्युक्त्वा रथमारुह्य श्रावस्तीतो निष्क्रम्य, रथं वाहयन् महालिलिच्छविपरिग्रहीतद्वारेणैव वैशालीं प्राविशत्। महालिलिच्छवेर्निवेशनं द्वारसमीप एवासीत्। सोऽद्य लिच्छवीनां भयमुत्पत्स्यत इत्याह। पुष्करिण्या अन्तर्बहिश्चारक्षा वलवती, उपरि लौहजालं, शकुनानामप्यवकाशो नास्ति। वन्धुसेनापतिः पुना रथादवतीर्यारक्षकान् वेत्रेण प्रहरन्…लौहजालं छित्त्वाऽन्तः पुष्करिणीं भार्यां स्नपयित्वा, स्वयं च स्नात्वा, नगरान्निष्क्रम्यागतमार्गेणैव प्रायात्। आरक्षका लिच्छवीन् व्यज्ञापयन्। लिच्छवयो राजानः क्रुद्धा पञ्चशतरथानारुह्य 'वन्धुलमल्लं ग्रहीष्याम' इति निष्क्रान्ताः। तां प्रवृत्तिं महालिः श्रुत्वा 'मा गच्छत, स हि वः सर्वान् हनिष्यती"त्याह तेऽपि 'वयं गमिष्याम एवे' त्यवदन्। तेन हि चक्रस्य यावत् नाभितः प्रविष्टप्रविष्टस्थानं दृष्ट्वा निवर्तध्वं, ततोऽनिवर्तन्तः पुरतोऽशनिशब्दमिव श्रोष्यथ, तस्मात्स्थानात् निवर्तध्वम्, ततोऽनिवर्तन्तो भवन्त रथधुरैषु छिद्रं द्रक्ष्यथ, तस्मात्स्थानान्निवर्तध्वं पुरतो मा गमत'। ते तस्य वचनेन न निवृत्तास्तं अन्वधावन्नेव। मल्लिका दृष्ट्वा, रथाः प्रज्ञायन्त इत्याह, तेन हि एकस्यैव रथस्य प्रज्ञानकाले वदेरिति। स यदा सर्व एकीभूय प्रज्ञायन्त तदा 'एकमेव रथशीर्षं प्रज्ञायत' इत्याह। वन्धुलस्तेन हीमा रश्मीर्गृहाणेति तस्यै रश्मीर्दत्त्वा रथे स्थितो धनुरारोपयत्, रथचक्रं यावन्नाभिपृथ्वीं प्राविशत्। लिच्छवयस्तत्स्थानं दृष्ट्वाऽपि न न्यवर्तिषत। इतरः स्तोकं गत्वा ज्यामस्फोटयत्; अशनिशब्द इवाभवत्, ते ततोऽपि न न्यवर्तन्त वन्धुलो रथे स्थित एव एकं शरमक्षिपत्। स पञ्चशतेषु रथशीर्षेषु छिद्रं कृत्वा पञ्चशतान् राज्ञः परिकरवन्धस्थाने विनिविध्य पृथिव्यां प्राविशत्। ते आत्मनो विद्धभावमज्ञात्वा तिष्ठ रे तिष्ठ रे, इत्यवदन्नेव। वन्धुलो रथं स्थापयित्वा; यूयं मृतकाः मृतकैस्सार्द्धं मम युद्धं न भवितुमर्हतीत्याह। मृतका नामास्मादृशा भवन्तीति। तेन हि सर्वे पूर्वस्य परिकरं मुञ्चतेति। तेऽमुञ्चन्, स तत्क्षणमेव मृत्वा न्यपतत्। अथ सर्वेऽपि यूयं एतादृशा आत्मनो गृहाणि गत्वा स्वविधेयं वेधाय पुत्रदारान् अनुशास्य कवचानि मुञ्चत।"

अनेकासम्भवातिशयोक्तिपूर्णेऽस्मिन् वृत्ते कोसलसेनापते र्वृजीनां युद्धम्, तन्निमित्तम्, तदुपकरणानि च न तिरोहितानि प्रेक्षावताम्।

(क्रमशः)





* महापरिनिर्वाण सूत्रम्। † धम्मपद —अट्टकथा ४—३।

# भारतीयं चिकित्सितम्।

श्रीमान् विद्यावाचस्पतिः शालग्राम शास्त्री, साहित्याचार्यः, कविराजः।

लोके हि रोगाणां प्रशमोपायाश्चिकित्साशब्देनोच्यन्ते। रोगाणां प्रशमः पुनर्दिव्येन विधिना वा स्यात्, मानवेन दानवेन विधिना वा स्यात्, यन्त्रेण मन्त्रेण वा स्यात्, अन्येन केनापि प्रकारेण वा स्यात् सर्वमपीदं चिकित्सापदविषय इति प्रतिपद्यन्ते जनाः।

अत्रेदं विवेचनीयम्, किमु सर्वोऽप्ययं विधिश्चिकित्सापदेन शक्योऽध्यवसातुं न वा? एवं हि श्रूयते यद् वाहीकेषु कदाचित् कस्मिंश्चित् जट्टग्रामे काषायपरिधानः कश्चन साधुः समापतत्। तत्रत्या च जनता साधुमेनमपरिचिन्वत्यपि वाहीकस्वभावात् सविशेषमुपससर्प। अत्रैवान्तरे च तत्र ग्रामे कस्यचन जट्टयूनः पत्नी सुतमेकमसूत। अथ वृद्धजनविरहितौ तौ दम्पती अपूर्वेण सुतलाभेन सानन्दावपि शिशोर्मध्येमूर्धं सततं संजायमानं त्वचः कम्पमालोकमालोकं व्याकुलीबभूवतुः। ततश्च पत्न्या साधुसकाशं प्रेषितोऽसौ जट्टो युवा सविनयं न्यवेदयत् यद् भगवन्, कथंकथमपि भवच्चरणाऽनुग्रहेण देवान् समाराधयन्तौ आवां समुपलब्धसुतमुखदर्शनौ स्वः, परमस्माकं भाग्यदोषात् जातमात्रस्य अस्य शिशोर्मूर्ध्नि 'लुप्-लुप्' रोगः संजातः, येन अस्य कपालास्थ्नां मध्ये जालपतिता चटकेव त्वक् प्रतिक्षणं प्रवेपते। अथाऽसौ साधुवेषधारी धूर्तो गम्भीरां ध्यानमुद्रां नाटयन् चिरेण उवाच—यद् गृहं गत्वा शिशोर्मूर्ध्नि लोहकीलकमेकं निखन्यतामिति। यथाश्रुतग्राही च वाहीको जट्टस्तथैवाऽनुष्ठितवान्। तद्गुरुयन्त्रणानियन्त्रितश्च शिशुः समापतत् क्षणेनैव। अथाऽसौ जट्टः समाक्रन्दन् पुनः साधुं समापसत्। अवोचच्च यथायथम्। ततश्चात्मानं निगूहमानः कषायवासाः पश्यत एव तस्य कषायाननः कषायनयनश्च संवृत्तः। आचष्ट चैनं साक्षेपम्, यद् धिग् रे मूर्ख, मया ते शिशोः 'लुप्-लुप्' रोगस्य चिकित्सा कृता। अथेदानीं शिशुर्जीवेद् वा म्रियेत वा, किं मे तेन प्रयोजनम्? यो रोगो मया चिकित्सितः स तु समूलघातं हतः। 'लुप्-लुप्' रोगस्तु इदानीं विनष्टः। किमतः परं मे प्रयोजनम्? अत्रेदं विचारणीयम् यदयमपि राक्षसो विधिश्चिकित्साशब्देन उच्येत वा नवा इति?

कस्यचन रोगिणो वेदनाधिक्ये जायमाने अहिफेनसत्वं मार्फियानामकं सूचीभिरन्तः शरीरं प्रवेशयन्ति द्राक्तराः, यद्धि इंजेक्शन (Injection) इत्याख्यायते। अथ तत्प्रभावेण मूर्च्छिते स्नायुजालेषु प्रतिहतेषु च ज्ञानतन्तुषु कियतेचित् अनेहसे रोगी विनिद्राति, दरिद्राति च पुनरन्ते विषस्याऽस्योपद्रवैर्भूयोभूय उपद्रूयमाणो मस्तिष्केण, हृदयेन, कोष्ठविष्टम्भेन च पीड्यमानः।

सञ्जाते च क्वचन ज्वरवेगाधिक्ये एंटीफ़ेब्रिन (Antifebrin) नामकस्य भेषजस्य प्रयोगेण ज्वरोऽसौ मन्दीक्रियते सहैव हृदयेन। वेदनाद्युपशमाय प्रयुज्यमानेन एस्प्रिन (Aspirin) नामकेन भेषजेन नूनं मन्दायन्ते वेदनाः साकं हृदयबलेन। एतेष्वनुष्ठानेषु प्रबलं हृदयं दुर्बलायते, दुर्बलन्तु पुनः अपुनर्निवृत्तये अन्धतमसे विलीयते। अतएव च अनुभविनश्चतुरा द्राक्तराः पूर्वं हृदयपरीक्षां विधाय साकं च हृदयबलाधायकैः एनानि भेषजानि प्रयुञ्जते। अन्यथाकुर्वाणास्तु सर्वथा मारणमेवोत्पादयन्ति।

अत्र विचारणीयम्, किमयमनिष्टावहो विधिरपि चिकि-

स्येत्युच्येत ? चाणक्यमतानुसारं तु नेयं चिकित्सा, प्रत्युत दण्डनीयोऽपराधः । यदि तु रोगप्रशमोपायमात्रं चिकित्से- त्यनुमन्येत तदा लुप्-लुप्रोगचिकित्सामारभ्य ड्राक्तराणां प्राणावाधिकं विषप्रयोगं यावत् सकलोऽप्ययं क्रियाकला- पश्चिकित्सान्तःपाताय समापतेत् । अनिष्टं चैतत्, तस्मात् अनिष्टाननुबन्धो विधिरेव चिकित्सेति शक्योऽभिधातुं न सर्वः । तिक्तौषधपाने स्फोटादिविपाटने च जायमानं तात्का- लिकं कष्टं दुष्परिहरमिति परिणामे योऽनिष्टं नानुबध्नाति सोऽनिष्टाननुबन्धीत्यभिप्रेयम् ।

अथेदं चिन्तनीयम्, कोऽसौ विधिरिष्टानुबन्धी कस्क- श्चानिष्टानुबन्धी । एतदर्थं पुनरिष्टमनिष्टं च पूर्वतरं विवेच- नीयम् । इष्टं सुखम्, अनिष्टं दुःखमिति तु आपामरं जान- न्ति जनाः । रोगेण दुःखम्, आरोग्येण च सुखं भवतीत्यपि प्रातिस्विकोऽनुभवः । तदेतत्सर्वमभिप्रेत्य इष्टाऽनिष्टाऽनुब- न्धिनोः सुखदुःखयोर्लक्षणं स्पष्टमाचष्ट भगवान् पुनर्वसु- रात्रेयः—

'विकारो धातुवैषम्यं धातुसाम्यमरोगता ।
सुखसंज्ञकमारोग्यं विकारो दुःखमेव च ॥ इति ।

धातुशब्देनाऽत्र सकलस्याऽपि चराचरस्य धारकाः वातपित्तकफा उच्यन्ते । पिपीलिकातः प्रजापतिपर्यन्तम् परमाणोश्च सूर्यपर्यन्तम् सर्वस्यापि चराचरस्य धारकत्वं वातपित्तकफेषु वेदबोधितं, यथा च साम्प्रतिकेन विज्ञानेना- ऽप्यनुमतं भवति तथाऽस्माभिर्विस्तरेण निरूपितं 'त्रिधा- तुवादे' च 'आयुर्वेदमहत्त्वे' च । आयुर्वेदानुसारममीषां धातूनां वैषम्यमेव रोगः साम्यं चाऽऽरोग्यम् । आयुर्वेदसंमता हि चिकित्सा न रोगमूला, अपितु दोषमूला । रोगमूलानां चिकित्सानामयं दुर्निवारो दोषो यदाविर्भवति क्वचन नवीने रोगे ताः बहुकालपर्यन्तम् आ-रोगविज्ञानं किंकर्तव्यविमूढा निश्चेष्टाश्च तिष्ठन्ति । तावतैव च कालेन कालः कालः कवलीकरोति परस्सहस्राणि मनुष्याणाम् । अतीतेऽनेहसि भारते एनूफ्लुएंज़ाकोपेन समुपद्रूयमाणेषु भारतीयेषु, 'बेरी- बेरी' नामकेन च व्याधिना विधूयमानेषु जापानीयेषु शत- शोऽनुभूतं जनैरकिञ्चित्करत्वं तदात्वे रोगमूलकचिकित्सा- नाम् । आयुर्वेदेन तु तदानीमत्र यत्साधितं तदपि नाऽप्रत्यक्षं चक्षुष्मताम् । सोऽयं दोषमूलत्वस्यैव महिमा यत् अतीतान् अनागतान् दृष्टान् अदृष्टान् विज्ञातान् अविज्ञातांश्च व्याधीन् दर्शनमात्रादेव निर्णेतुं चिकित्सितुं च पारयन्ते प्रेक्षावन्तः प्रतिभासम्पन्नाश्चाऽऽयुर्वेदविदः । यदुक्तं चरके—

'सर्व एव विकारा निजा नाऽन्यत्र वातपित्त- कफेभ्यो निवर्तन्ते । यथा हि शकुनिः सर्वं दिवस- मपि परिपतन् स्वां छायां नातिवर्तते तथा स्वधा- तुवैषम्यनिमित्ताः सर्वविकारा वातपित्तकफान् नातिवर्तन्ते' इति । १६ चर०, सू० अ० । १६

"तस्माद् वा एतस्मादात्मन आकाशः संभूतः । आकाशाद् वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी ।" इति श्रुत्युक्तदिशा निखिलब्रह्माण्डान्तर्वर्ति सकलमपि वस्तुजातम् आत्मनः सकाशात् समुत्पद्यमानं पूर्वम् आकाशरूपतां प्रतिपद्य तेजो वायवीयां दशामापद्यते ; वायवीयदशातश्च विपरिणममानम् आग्नेयम् रूपं प्रति- पद्यते, ततो जलीयम्, जलीयाच्च पार्थिवं रूपं प्रतिपद्यते । अयं च वैदिकः सृष्टिक्रमः सर्वात्मना ( विनाऽऽत्मानम् ) साम्प्रतिकेन भौतिकविज्ञानेनाप्यनुमोद्यते । तदेवं निखिल- मपीदं चराचरं जडजङ्गमं जगत् वायुरूपात् अग्निरूपम् अग्निरूपाच्च जलरूपं प्रतिपद्य ततः पार्थिवं भावं भजते इति निष्कर्षः । समवायिकारणेन विनाकृतं च न किमपि वस्तुजातं क्षणमप्यवतिष्ठते इति तु वेद सकलोऽपि लोकः । तत्र हि समवायिकारणकलापे च साम्यमप्यपेक्षितं भवति । एवं च वैषम्यं संजायमानं घातकं भवति कार्यजातस्य । एवं च पार्थिवं कार्यमात्रं वाय्वग्निजलानां साद्यं साम्ये च सर्वदा सर्वथा च सापेक्षम् । इदमेव वाय्वग्निजलानां समवायिका-

रणजातं धारकत्वात् धातुरित्युच्यते। आयुर्वेदे च इदमेव त्रिधातुशब्देन वातपित्तकफशब्देन वा व्यपदिश्यते। मनुजे वा दनुजे वा तिरश्चि वा विपश्चिति वा सर्वत्राऽपि शरीरे त्रिधातुवर्गस्याऽस्य साम्यं सांनिध्यं च सदैवाऽपेक्ष्यम्। नाऽनेन विना प्रपञ्चेऽस्मिन् किञ्चिदप्यवाञ्चत्युदञ्चति वा। त्रिधातुसाम्यमेवारोग्यम्, वैषम्यं च रोगः। त्रिधातुवैषम्यं विना न खलु शक्यं केनापि विकारेण भवितुम्। तत् सुष्ठूक्तं भगवता आत्रेयेण यत् 'सर्वविकारा वातपित्तकफान् नातिवर्तन्ते' इति।

यदि पुनः सर्वविकाराणां परिगणनमारभ्येत, न तच्छक्यं पुरुषायुषशतेनाऽपि समाप्तुम्। परस्सहस्रास्तादृशा विकारा ये पूर्वं सन्तोऽपि नेदानीमुपलभ्यन्ते। यश्च भविष्यति रोगवर्गो भविष्यति नाऽसौ शक्यः सुरगुरुणाऽपि गणयितुम्। वर्तमानेऽपि च काले देशभेदात्, कालभेदात् प्रकृतिविकृतिभेदाच्च समुदयमानो विकारसमुदायो न शक्यो नामतः स्वरूपतश्च परिच्छेत्तुम्। इदमेवाऽभिप्रेत्य प्रोक्तवान् भगवान् पुनर्वसुरात्रेयः—

'त एवाऽपरिसंख्येया भिद्यमाना भवन्ति हि।
रुजावर्णसमुत्थानस्थानसंस्थाननामभिः॥'४८

च०, सू०, अ० १९

रुजावर्णसमुत्थानादीनि च तत्र तत्र स्वयमेव भगवता वर्णितानि।

किञ्च—

'स एव कुपितो दोषः समुत्थानविशेषतः।
स्थानान्तरगतश्चैव जनयत्यामयान् बहून्॥'५१
तस्माद् विकारप्रकृतीरधिष्ठानान्तराणि च।
समुत्थानविशेषांश्च बुद्ध्वा कर्म समाचरेत्॥५२॥
यो ह्येतत् त्रिविधं ज्ञात्वा कर्माण्यारभते भिषक्।
ज्ञानपूर्वं यथान्यायं स कर्मसु न मुह्यति॥५३॥

च०, सू०, १९ अ०

अयम्भावः—धातूनां साम्यं हि आरोग्यं, वैषम्यं च विकारः। यद्यपि वैषम्यमेकमेव धातवोऽपि च पुनस्त्रय एव, तथापि प्रकृत्यधिष्ठान समुत्थान विकल्पभेदेन एकमपि वैषम्यं परःसहस्रान् विकारानाविष्करोति। प्रकृतिशब्देनाऽत्र वातादयोऽभिप्रेताः, अधिष्ठानशब्देन मनः, शरीरं च शरीरावयवाश्च। समुत्थानानि पुनर्निदानानि। वैषम्यं च धातूनामन्यतमस्य ह्रासेनापि भवति आधिक्येनापि च। चक्षुषोर्हि वर्धमानः श्लेष्मा कण्डूमास्रावं च जनयति, स एव आमाशये अग्निमान्द्यमरोचकं च वृक्कयोर्बहुमूत्रत्वमुदराणि च। मस्तिष्के प्रवर्धमानो वायुः पक्षाघातमुन्मादांश्च सक्थनि पुनर्गृध्रसीप्रभृतीन् व्याधीन्। एवं ह्रासोऽप्यवगन्तव्यः। अत्र अधिष्ठानभेदवत् निदानभेदोऽप्यनुसन्धेयः। दोषेष्वपि पुनः प्राधान्यं च साचिव्यं च अनुचरत्वं च। तदेवं शतधा सहस्रधा प्रवर्धमानं वैषम्यमेव प्रशमयितुं साम्यं च सम्पादयितुं सर्वात्मना कृतप्रयत्नोऽयमायुर्वेदः। आयुर्वेदानुसारम् इदमेव रहस्यं चिकित्सानाम्। इदमेव च कर्तव्यं सद्वैद्यानाम्, लक्ष्यं च वैद्यविधीनाम्। यदुक्तं भगवता आत्रेयेण पुनर्वसुना—

'याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः।
सा चिकित्सा विकाराणां कर्म तद् भिषजां मतम्॥'

धातूनां साम्याय प्रवर्तमानेन च तेषां वैषम्यं प्रत्यवस्थेयम्। साम्यवैषम्ये च विज्ञातुं त्रिधातुस्वरूपं तत्कार्यादिकं च तत्वतो विनिश्चेतुं, यथोक्तमस्माभिस्त्रिधातुवादे।

पाश्चात्यचिकित्सासु पश्यामो यद् रोगिणः शिरसि संनिपातेन जायमानं रुधिरप्रवाहमपोहितुं हिमं निधीयते, प्रतिश्यायेन स्रवन्त्यां च नासिकायां विद्युद्धाराः संचार्यन्ते। वेदनासु च अहिफेनसत्वमन्तःशरीरं प्रवेश्यते, प्रदरे च पुनः केवलेन संबाधप्रक्षालनेन कृतकृत्यत्वं मन्यते। तदेतत्सर्वम् आपातभद्रं प्रतीयमानमपि आयुर्वेदानुसारं तु अन्धचिकित्सितमेव। संनिपाते पक्षाघाते च शिरसि रुधिरस्य अतिप्रवाहं वारयितुं विनिहितं हिममयमुष्णीषं शैत्येन नूनं शीत-

गुणं समीरमीरयेत् । विकुर्वाणश्च समीरणः स्वविकारानाविष्कुर्वीत । विद्युता च विशुष्यन्नपि श्लेष्मा न प्रतिश्यायं निःशेषयेत्, विकारान्तराणि तु प्रदर्शयेत्, धातुसाम्याभावात् अहिफेनसत्त्वस्य तु न दुरूहो दारुणः परिणामः । प्रदरेषु प्रक्षालनमात्रं पुनर्निपतन्तमाकाशं निरोद्धुकामस्यटिट्टिभस्य ऊर्ध्वं पादप्रसारणमिव ।

येषां धातूनां साम्येन द्यावापृथिव्यौ नियन्त्रितौ, यद्बलेन पृथिवी च पार्थिवानि च, शरीरं च, शारीराणि च सत्त्वानि धार्यन्ते येषां वैषम्यमेव रोगास्तेषां साम्यमसम्पादयद्भिः कथं नाम रोगाणां समूलमुन्मूलनं शक्यं कर्तुम् ? यः खलु मालाकारो जीवन्तं महीरुहमिच्छति तेन तन्मूल एव जलनिषेको विधेयः । यस्तु पुनः प्रतिपत्रं प्रतिशाखं च प्रक्षालयति मूले तु निमीलितलोचनो भवति तेन मुहूर्तमात्राय प्रदर्श्यमानोऽपि हरितिमा न कथंचन स्थायी स्यात् । पर्यन्ते च तरुर्विशुष्येदेव । तस्मात् सुष्ठूक्तं भगवता—

'याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः ।
सा चिकित्सा विकाराणां,कर्म तद् भिषजां मतम्'॥३४

इति च०, सू०, अ० १६

एतच्च धातुसाम्यं विधित्सता सद्भिषजा किं किं कथं कथं च परीक्ष्य भेषजमवचारणीयमिति तु—

"इह कार्यप्राप्ते कारणं भिषक्, करणं पुनर्भेषजम्, कार्ययोनिर्धातुवैषम्यम्, कार्यं धातुसाम्यम्, कार्यफलं सुखावाप्तिः ॥ १३" इत्यादिना प्रपञ्चितं चरके (च०, वि०, अ० ८)

यद्यपि सामान्यात्मकाः रोगपरीक्षाप्रकारास्तथा प्रतिनिबद्धा आयुर्वेदे यथाऽद्यापि विस्मापका लोकलोचनानाम् चमत्कारकाश्च मनीषिणाम्, तथापि करालस्य कालस्य कोपाद् वा अस्माकं भाग्यदोषाद् वा रोगाणां विशेषज्ञानोपायांस्तु अतिस्वल्पानिव पश्यामः समुपलभ्यमानेषु आयुर्वेदसन्दर्भेषु ।

जगतः पितामहेन असुत्पाद्यैव प्रजाः श्लोकशतसहस्रम् अध्यायसहस्रं च अष्टाङ्गस्य आयुर्वेदस्य प्रकाशितमिति शृणुमः सुश्रुतस्याऽऽरम्भे एव, परं न खलु उपलभामहे तादृशान् निबन्धान् न च पश्यामोऽद्यत्वे तत्प्राप्त्युपायानपि । चरकसुश्रुतादिकं यच्च यावच्च अद्योपलभ्यते तत्सर्वमेकाङ्गं च, अत्यल्पं च, काले काले जायमानैः संस्कार-प्रतिसंस्कारैः प्रायो जर्जरितं च तस्मात्केवलेन तेनैव अष्टाङ्गस्य आयुर्वेदमहाभवनस्य सर्वाङ्गीणता सुशका सम्पादयितुमिति तु दुराशामात्रम् ।

चरकादीनां सूक्ष्मेक्षिकया पर्यालोचनेनाऽपीदमेव निश्चिनुमो यद् बहुतरको विज्ञानराशिः प्रनष्टोऽस्माकम् । चरकेण हि दशप्राणायतनीये अध्याये इदमुपनिबद्धम्—'द्विविधास्तु खलु भिषजो भवन्त्यग्निवेश, प्राणानामेके अभिसरा हन्तारो रोगाणाम्, रोगाणामेके अभिसरा हन्तारः प्राणानामिति ।' ततश्चेमान् प्राणाभिसरानुद्दिश्योक्तम् "तथाविधा हि केवले शरीरज्ञाने शरीराभिनिर्वृत्तिज्ञाने, प्रकृति विकारज्ञाने च निःसंशयाः" इत्यादि ( च० सू० अ० २९ )

१—मानवेषु देहेषु अस्थ्नां, स्नायूनां, पेशीप्रभृतीनां, मस्तिष्कस्य, हृदयस्य, कफपित्तवाताशयादीनां च कुत्र कीदृशश्च सन्निवेश इति ज्ञानं हि 'केवलं शरीरज्ञानम्', इत्युक्तं भगवता । यदिदानीं पाश्चात्येषु एनाटमी ( Anatomy ) इत्युच्यते ।

२—'शरीराभिनिर्वृत्तिज्ञानं' च तद् येन शरीराणाम् अभिनिर्वृत्तिर्ज्ञायते । गर्भाधानात् प्रभृति, शुक्रशोणितबीजानां कथंकारं समागमः, केन रूपेण परिणामः, कथं वा कललघनपेश्यर्बुदप्रभृतीनां निष्पत्तिः, कथं वा चेतनाधातोः संक्रमः कस्मिन् कस्मिंश्च काले कीदृशं परिवर्तनम् आ-प्रसवात्, इत्येकं शरीराऽभिनिर्वृत्तिज्ञानम् । प्रसवानन्तरं च कस्मिन् कस्मिन् वयसि के के धातवः शरीरस्य कथं कथं निष्प-

द्यन्ते, कथं वा जीवतः पुरुषस्य मस्तिष्कं परिचालयति क्रियाकलापान्, हृदयम् पुनरविरतमपरिश्रान्तं च परिचलत् किं किं च अनुतिष्ठत् जीवयति जीवान्, दन्तैः अन्त्रैः, वृक्काभ्यां वस्तिप्रभृतिभिश्च शरीराऽवयवैः किं किं कार्यजातं कथं कथं सम्पाद्यते इति च द्वितीयं शरीराऽभिनिर्वृत्तिज्ञानम्। इदं च द्वितयमपि फ़िज़ियालोजी (Physialogy) इत्याख्यायते।

३—तृतीयं 'प्रकृतिविकारज्ञानम्'। प्रकृतिस्थस्य शरीरस्य शरीराऽवयवानां च काऽवस्था, अथ संजाते संजायमाने च विकारे तेषु का का विकृतिरुत्पद्यते इति ज्ञानं हि प्रकृतिविकारज्ञानमित्याम्नायते। इदमेव च भाषान्तरे पैथालोजी (Pathology) इति पठ्यते।

प्राणाभिसरेण बुभूषुणा भिषजा त्रिविधेऽप्यस्मिन् ज्ञाने 'नःसंशयेन' भवितव्यम्। एतेन विना हि नाऽयं प्राणाभिसरो रोगहन्ता वा स्यात्, स्यात्तु रोगाऽभिसरः प्राणहन्ता च इति भगवत आत्रेयस्याऽभिसन्धिः। परमद्यत्वे न तादृशं कमपि ग्रन्थमायुर्वेदीयेषु पश्यामो य एतादृशे ज्ञाने वैद्यान् विनयेत। 'निःसंशयं' च ज्ञानं न विना प्रत्यक्षदर्शनेन संभवति। आयुर्वेदस्य हि शिक्षा न काव्यादिशिक्षावत् शब्दमात्रे परिसमाप्यते। अत्र तु प्रभविष्णुना नियतं प्रेक्षणीयाः क्रियाश्च प्रक्रियाश्च। तस्मादेतादृशमत्यावश्यकं ज्ञानं पूरयितुम् इदानीमस्माभिः समुन्नतस्य पाश्चात्यज्ञाननिधेरेव करणीयः करग्रहः। नहि सर्वः सर्वं जानातीति नयेन ज्ञानविनिमयश्च न कथंचन दोषाय। पूर्वकालिके आयुर्वेदतन्त्रे नूनमासन् तादृशा निबन्धाः। तेषामन्वेषणाय अनुसन्धानाय च प्रयत्येत चेत् तदपि वरतरमेव। यथाकथमपि भवेत् ज्ञानसंग्रह इत्येव नस्तात्पर्यम्।

प्राचीनेषु च नः पूर्वजेषु ज्ञानोपार्जनाय निष्प्रत्यूहा प्रवृत्तिरासीदिति पश्यामो ज्यौतिषनिबन्धेष्वपि। फलितं ज्यौतिषं द्विविधं, जातकं ताजकं च। जातकं तु आस्माकीनानां पूर्वजानां निधानभूतम्, ताजकं पुनस्तैः संगृहीतं यवनाचार्येभ्य इत्यद्याऽपि नीलकण्ठीप्रभृतिषु निबन्धेषु समुज्जृम्भमाणैः इक़बाल, इत्थसाल, इसराफ़, मुत्थसिल, मुधरिफ़, इन्थिहा प्रभृतिभिः शब्दैः सुशकमनुमातुम्। 'आगिकबालस्तत इन्दुवारस्तथेत्थसालस्तत ईसराफ़' इत्यादि।

केनचित्तु कौतुकिना अस्मिन् प्रकरणे संस्कृतेन सह पारसीकभाषाया अपि [illegible] न्यधायि।

यथा—

'भवेदाफ़तावो यदा षष्ठखाने' इत्यादि।

तस्माद् ज्ञानार्जनाय निःसंशयं निःसंकोचं च सदा यतनीयमेवाऽस्माभिः। यथाचाऽस्माभिर्विशेषज्ञानाय पाश्चात्यज्ञानस्य हस्तावलम्बः स्पृहणीयस्तथा सामान्याऽस्मद्ज्ञानमधिगन्तव्यम्, प्रकृतेर्मूलतत्त्वानि विज्ञातुम्, निर्दोषं च चिकित्सातत्त्वं विनिश्चेतुम् आयुर्वेदस्य साहाय्यमवश्यमपेक्षणीयं स्यात्।

तदेवम्-अतीतान् अनागतान् वर्तमानांश्च सकलानपि रोगान् एकपदे अधिकृतया, समूलञ्चोन्मूलयितुम्, अनिष्टाननुबन्धिनं वा रोगप्रशमोपायमधिगन्तुं सर्वैरपि दोषमूलकमिदं चिकित्साशास्त्रम् आयुर्वेदापरनामकमेव शरणीकरणीयम्। तदर्थं च त्रिधातुवादरहस्यमवश्यमवगाहनीयम्। तत्र अन्यतमस्य वृद्धौ कर्षणं क्षये च बृंहणमिति साम्यसम्पादनायसमुपादीयते।

नचेदं मन्तव्यं यत्सर्वेष्वपि देहेषु नियताभिर्मात्राभिर्नियतैर्वा परिमाणैर्वातपित्तकफास्तिष्ठन्तीति। तथा सति शास्त्रेषु निबध्यमानं प्रकृतिविकृति सार-संहनन—सात्म्य—सत्त्वादीनां वैचित्र्यं सकलमप्याकुलीक्रियेत। एतादृशं हि साम्यं सुतपाणमयीषु मूर्तिष्वेव संभाव्यते न प्राणिषु।

अत एवोक्तं सुश्रुतेन—

'वैलक्षण्यात् शरीराणामस्थायित्वात्तथैव च।
दोषधातुमलानां तु परिमाणं न विद्यते ॥ ४३॥
एषां समत्वं यच्चापि भिषग्भिरवधार्यते।
न तत् स्वास्थ्यादृते शक्यं वक्तुमन्येन हेतुना ॥४४॥
दोषादीनां त्वसमतामनुमानेन लक्षयेत्।
अप्रसन्नेन्द्रियं वीक्ष्य पुरुषं कुशलो भिषक् ॥४५॥
स्वस्थस्य रक्षणं कुर्यात्, अस्वस्थस्य तु बुद्धिमान्
क्षपयेद् बृंहयेच्चापि दोषधातुमलान् भिषक् ॥ ४६॥
तावद्, यावदरोगः स्यान्नरो रोगसमन्वितः।
समदोषः समाऽग्निश्च समधातुमलक्रियः।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ ४८

सुश्रुते सूत्रे, अ० ११

एवंच—अनिष्टाननुबन्धी एव रोगप्रशमोपायश्चिकित्सेति शक्यो वक्तुम्, सच धातुसाम्यं विना न संभवति, धातुसाम्यं च [illegible] च वेदमायुर्वेदं च विना न संभवतीति सिद्धम्।

# नागरिकता

ले०—श्रीजितेन्द्रियाचार्य्यः ।

'नागरिकता' पदस्य वैयाकरणसमयसिद्धोऽर्थः कोऽपि भिन्न एव स्यात् । आधुनिकास्तु प्राचीनयावत्सम्प्रदायव्यवहारादित्यागपूर्वकं विश्वतोमुखेन सम्प्रदायव्यवहारादिषु पाश्चात्यानुकरणं नागरिकतेति कथयन्ति । यावदेतादृशी नागरिकता आभारतवर्षं विसृमरी भविष्यति तदैवेयं सर्वंसहा पारतन्त्र्यशृंखलात उन्मुच्येतेति च तेषां हृदयेशय आशयः—तदेव तेऽनुतिष्ठन्ति पुत्रादिद्वारा अनुष्ठापयन्तिच ।

केचन विरला नेतृवृद्धा अत्रापि वैमुख्यमाचरन्ति । एते तु ईदृशीं नागरिकतावन्धकां प्रतिवन्धकीमधगच्छन्ति । केचन नेतारस्तु वृद्धाभिप्रायं शिरःकम्पेनानुमोदन्ते परानुपदिशन्ति च एतेऽपि परिवृढा देशशुश्रूषाजनितयशोराशिविशदीकृताशाशरीराः । एते तन्तून्वयन्ति. देश्यमेवाऽऽभीरवेषसाधारणं वेषं बिभ्रति । स्वोपदेशानुसारम् आगर्भश्रीला गगनचुम्बिसौधतलविहारिणोऽपि देशसेवायै सपुत्रमित्रकलत्रं सहर्षं कारागृहमधिवसन्ति. कोकविरहातिदीर्घं परस्परवियोगमपि सहन्ते परमेतानपि नागरिकताऽवसरे नैव जहाति.

प्रसह्यैतान्स्वानुरक्तान्विधत्ते. पक्ष्मणी वियोज्यावलोकयत । एतेषामपि मनीषायां क्षयादिगदाघाते भारतावनिर्हेया, आयुर्वेदीयमौषधं रोगापनुत्यै नालंभूष्णु, चिकित्सितुं देशीयाऽगदंकारी न प्रभवति, स्विट्जरलैण्ड ( Switzerland ) जनपदा एव शरणं, अतस्तत्र गत्वा विदेशीयौषधभिषग्यात्रासु लक्षशो रूप्यकाणि लोष्टवत् प्रकिरन्ति-"किंतद्देशीया अमराः" किंवा तत्र क्षयरोगान्न म्रियन्ते ? उत वा भारते क्षयरोगान्नोल्लाघो भवति भारतीयौषधसेवनया, आहोस्विन्नास्ति किं भारतवर्षे क्षयरोगक्षपणक्षमः चिकित्सकः, कामदोग्ध्री भारतभूतधात्री धात्रीव किं किं नातनोति स्वात्मजाय, अहो वत दयनीया एते " प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते" इति न स्मरन्ति । यदि तावद्वित्तं भारते व्ययीक्रियेत चेत् महती रोगिशाला ( Hospital ) आविर्भूयेत एवं नागरिकता आधुनिकयुवकेष्विव गलद्दन्तपंक्तिषु निर्याणोन्मुखेषु जरत्स्वपि स्वप्रभावमप्रतिहतं प्रदर्शयति । तीर्थक्षेत्रादिष्वपीयं राज्ञीव स्वाधिकारं प्रचारयति । केवलं निसर्गरामणीयकेषु तीर्थक्षेत्रमन्दिरेषु आस्तिकोत्तंसकानां श्रद्धां ह्रासयति । पश्यतेदानीं सर्वाण्यपि देवतामन्दिराणि प्रायः सोपानत्कपादसुलभगमनानि विद्युद्दीप्तीनि धनिकसदनानीव दिदृक्षया यियास्यन्ते, न पुनर्दैवताश्रद्धाभक्तिभरेण, श्रद्धोत्पादकानां प्राचीनसम्प्रदायानां इत्संज्ञाविधानात्, अतो मन्दिरान्तर्गतो लोको देवतासमक्षं बहिस्त्यक्तोपानत्प्रसितचित्तः यावन्निमेषद्वयं दृश्यं किमपि चेद्दृष्ट्वा निर्याति, भारतावनिसिन्दूरायमाणश्रीबदरीक्षेत्रं बहुदिवसक्लेशशक्ययात्रं प्राय एकमेवस्थानं नागरिकताभीत्येव दूरे हिमाचलासन्नस्थले राराज्यते । यत्स्थानं केचिदेवार्जितापूर्वसंचया भयभक्तिपश्चात्तापभरकुब्जाः प्रथीयसा प्रयासेन प्रयान्तिस्म । तदेव स्थानमिदानीं घटिकाद्वयपरिमितानेहसा वियदध्वना गिरिसुषमादिदृक्षया चित्राकर्षकयन्तहस्ता व्रजन्ति । परम् किमुभयोरपि समान-

फलं स्यात् ? कदापि नैव । पादचारिणस्तु, भक्तिभरेण श्रीनरनारायणदर्शनेनात्मानं विपङ्कयितुं यान्ति । इतरे तु, केवलं धनशौण्डतया नयनविनोदनाय यान्ति । श्रीभगवानपि भजनानुरूपफलदाता । "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं" इति किल गीतं श्रीकृष्णचन्द्रेण । आर्थिकदृष्ट्याऽपि भारतवर्षस्य नागरिकता अहिनकुलायते । यत्कार्यं प्राचीना अल्पव्ययेन भारतीयेनैव वस्तुजातेन सम्पादयन्तिस्म तदेव साम्प्रतमनणीयसा व्ययेन श्रमेण च, विदेशीयवस्तुना तदादिष्टपद्धत्या च कुशाग्रधिषणम्मन्यैराधुनिकैरातन्यते सर्वत्र । आधुनिकानां कृषिव्यवसायमार्गे किञ्चिन्मनो नुदत । कृषिर्हि-भारतीयानामपश्चिमा अतिपश्चिमा च वृत्तिः । एतत्कृते भारतीयैः कृषीवलैः क्वापि विश्वविद्यालये कस्मादपि गुरोः किमप्यध्येतव्यं वर्तते । कृषकाः केवलं वृद्धपरम्परागतसरणिमनुसृत्य, कार्यक्षेत्रेऽवतीर्य बलीवर्दसाहाय्येन विदधति कृषिव्यवसायम् । समये समये वृष्टये स्पृहयन्ति चातका इव । आधुनिकास्तु पञ्चषहायनानि सहसहस्राधिकरूप्यकैः क्वापि विश्वविद्यालये विदेशीयकृषिव्यवसायाभ्यसनाय क्षपयन्ति । अभ्यस्यापि तैरस्मत्कृषीवलवत्किमपि कर्तुं न पार्यते कार्यक्षेत्रे । यद्येते क्वापि अधिकारे नियुक्तास्युस्तदा कथञ्चित्प्राणीयुः । नो चेत् एतेषाञ्जीवनमपि सङ्कटे पतेत् । अभ्यसने कृतधनव्ययाः किं कुर्युरेते । एवमेव चिकित्साविभागोऽपि पाश्चात्यानां भारतस्य रिक्थरिक्ततां वितन्वन्निप्रियमेवातनुते । प्रायः सात्विकराजसाहाराणामस्माकमायुर्वेद एव हितकारी । तदनुसारमेव प्रचलतां "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" × इति न्यायेन रोगस्याप्राणीभवनमेव । अल्पव्ययसाध्यं कन्दमूलादिसुलभलभ्यपदार्थोत्पाद्यमानमौषधं क्वचित् हितमकुर्वदपि, न विकरोति । अनैवंविधं विदेशीयमौषधं तद्बहुसेवनेन (Small pox) प्रभृतिरोगा उत्पद्यन्ते । परङ्केचिदिदानींतना आयुर्वेदात्सनासासङ्कोचं साचीकृतलपनं जुगुप्सन्ते भारतीयवृद्धपरम्परागतं नागरिकताविकलताऽऽपादकमिति दूराज्जहति आयुर्वेदीयमौषधम् । पाश्चात्यकरकमलगलितमेवौषधञ्चरमेऽपि समये विष्णुपादोदकवदाचामन्ति । विदेशीयरोगहारिणः स्वौषधे किङ्किम्मिलितं, किञ्च तस्य उपादानमिति नैव जानन्ति । एवमेव भारतीयानामाङ्गलशिक्षा स्वस्य स्वदेशस्य कस्यचिन्मशकस्यापि कृते हिताय न प्रभवति । नापि आङ्ग्लाभ्यसनमेतदुद्देशेन कुर्वन्ति । उपाधिमासाद्य प्रतिवीथि पर्यटन्त्युन्मुखा वृत्तये । अलब्धवृत्तयस्तु, उभयभ्रष्टा "इतो भ्रष्टस्ततो भ्रष्टश्च" इतिवृथा भवत्येतेषाञ्जीवनम् । न वै गृहे कथमपि स्वजीवनं निष्पादयितुं जानन्ति शक्नुवन्ति वा । राजकार्यविभागा "अधिकालङ्कार"—लक्ष्यभूता इति नावकाशं एतेषां तत्रापि । भवने तूष्णीमासतामप्येतेषां वेषभूषावाहनादीनाङ्कृते दशाधिकरुप्यकाणामावश्यकता जागर्ति । गृहेऽपि नागरिकतान्यूनतापादकं गृहकार्यं न कुर्वन्ति । भारते तु वेषकृतं कार्यतारतम्यं वर्तते । यौरोपीयास्तु सर्वेषा भिन्नभिन्नं कार्यं विशङ्कं कुर्वते । भारतीया अत्र यौरोपीयान्नानुकुर्वते । अहो नागरिकतामहिमा, यद् ग्राह्याग्राह्यविवेकविधुरान्विदधाति लोकान् । एतत्सर्वं दर्शं दर्शं पिशाचिकाव इव नागरिकतातो दूरे भवितव्यम् । भारतोद्धारस्य भारतीया एव ग्रन्था व्यवहारसम्प्रदायाश्च सुतरां प्रभवन्तीत्यलम् ।

# श्रीकाशीशतकम्

श्रीमान् पं० नारायणपति त्रिपाठी

( प्रकाशितादग्रे )

अद्यापि काश्यां नहि कोऽपि जीवो,
बुभुक्षितस्तिष्ठति नापि शेते ।
तत्रान्नपूर्णैव विसृज्य भोज्यं,
ददाति वादो ह्यतिजागरूकः ॥५५॥
मार्गेषु रथ्यासु यदन्तराले,
यद्वासिनां पङ्कमलान्यघानि ।
प्रक्षालयन्त्याकलितस्ववार्भि-
र्गङ्गा स्वयं क्षामजला विभाति ॥५६॥
यां स्वर्धुनी नो विजहाति यत्नात्
कदापि तत्पङ्कमलं वहन्ती ।
प्रेम्णातिबद्धेव सखीसमाना,
मुक्तिप्रदत्वादिगुणप्रकर्षात् ॥ ५७ ॥
जगद्गुरुश्शङ्कर एव साक्षात्,
प्राणप्रयाणावसरेषु जन्तोः ।
तत्तारकब्रह्ममनूपदेष्टा,
धन्यासि वाराणसि ! मुक्तिकाशी ॥५८॥
जरज्जगज्जन्मजुषां जनाना-
मघासुराश्लिष्टशिरोरुहाणाम् ।
विदारिका घोरकरालिकेव,
नो काशिका त्वं कलिकालिकाऽसि ॥५९॥
ओंकाररूपा शिवयोर्निवासाद्
गङ्गातटस्था धनुषाकृतित्वात् ।
तत्तारकादेशकरी तरिस्तु,
काशि ! त्वमेका भवतारिकाऽसि ॥६०॥
कामारिकर्णेजपकारणत्वात्—
काले कराले कलिकल्मषाढ्ये ।
काम्ये कलाकौशलकर्मकाण्डे,
काशि ! त्वमेका कमनीयकीर्तिः ॥६१॥
साधारसाधारणधारणाभिः,
सकारणावेक्षणरक्षणाभिः ।
प्राणप्रयाणावसरेषणाभिः,
प्राणी न निर्वाणमणु प्रयाति ॥६२॥
अतस्त्वदीये स्तवने प्रवृत्तो,
मातर्न जात्वस्तु कृतघ्नता मे ।
यतस्त्वदङ्घ्र्याश्रयणीयसौख्यं,
भवेन्ममाहोस्विदमुत्र चाऽत्र ॥ ६३ ॥
न कामयेऽहं कलुषस्वभावात्
कदाचिदध्यात्मविचिन्तनादि ।
अपास्त "गीतो" क्तनिवृत्तमार्गे—
त्वदाश्रयेणैव चरामि लोके ॥६४॥
यथाऽभवं चास्मि तथैव काशिके !
तथा भविष्यामि गतिश्च नान्यथा ।
हठाद्यदा मामुररीकरोषि चे—
तदा महत्त्वं प्रथितं भवेत्तव ॥६५॥

मुक्तिप्रदानादतिगर्विता त्वं,
महागसाचारबलात्तथाहम् ।
प्राप्ते रणे नौ भविता परीक्षा,
जयाजयौ नो करगौ द्वयोस्तः ॥ ६६ ॥

कालप्रभावात्प्रकृतौ विपर्ययो,
भावी ह्यवश्यं न विचारणा ततः ।
हे काशि ! मय्यम्ब ! दया विधीयतां,
जाते कुपुत्रे कलिराज्यवर्तिनि ॥६७॥

अनेकदुश्चिन्तनया मनो मे,
कदाऽपि नो सुस्थिरतां प्रयाति ।
परन्तु काश्यां सुरशैवलिन्या-
स्तीरं समालम्ब्य समेति शान्तिम् ।

तव स्तवे षण्मुखशेषमुख्या,
नालं बभूवुर्यदि काशि केऽन्ये ।
स्फुटद्विजिह्वा मम लेखनीयं,
कथं समर्था भवितेति चिन्त्यम् ॥६९॥

स्वयं प्रकाशीकृततत्त्वसारा,
गुणत्रयातीतपथप्रचारा ।
विद्यासदाचारगतिप्रसारा,
विभाति काशी शिवगाङ्गधारा ॥७०॥

देशान्तरादेत्य सहस्रशोऽत्र,
विद्यार्थिनो देश-विदेशवासाः ।
पठन्ति विद्यां विविधां विभिन्ना-
मनेकभाषासु कृतप्रयत्नाः ॥ ७१ ॥

अनेकशास्त्रार्थविचारदक्षा,
प्रमाणपत्राङ्कितसत्परीक्षाः ।
छात्रा निजाध्यापकलब्धकक्षाः,
भवन्ति विद्योन्नतिकृत्समीक्षाः ॥ ७२ ॥

यस्यां सम्प्रति भूरिशो बुधजना विद्योदधेः पारगाः,
सच्छिष्येषु निवेशयन्ति विविधाग्रन्थान् विचारान्निजान् ।
ग्रन्थानां रचनादनेकविषयेष्वन्ये महाबुद्धयः,
आविष्कुर्वत ऐहिकं हितमथो दिव्यं तथामुष्मिकम् ॥७३॥

सच्चित्प्रकाशामनुभूतिगम्या-
मानन्दमूलामपवर्गभूमिम् ।
काशीं नुमः काशितहृत्सरोज-
ब्रह्माङ्कुरां कामपि वागवेद्याम् ॥ ७४ ॥

यस्यां जनाः प्राणविसर्गकाले, रुद्रात्मसञ्चारकमन्त्रयोगात् ।
परं पदं यान्त्यपुनर्भवं यत्, प्रोक्तं श्रुतौ नारजनैः फलन्तत् ॥७५॥

स्नातुं ब्राह्मे मुहूर्त्तेऽप्यतिशयशिशिरे बालवृद्धान्नार्यः ।
यस्यां गङ्गाप्रवाहे निजनिजसदनान्नग्नपादाः प्रयान्ति ।
विश्वेशञ्चाभिषिच्य प्रतिदिनसुमया सार्द्धमत्रत्यदेवै-
र्गार्हस्थ्यान्कर्मसङ्घाननलसितहृदा सादरं पारयन्ति ॥७६॥

प्रायो देशविदेशतो बहुजना देशाटनार्थं क्वचिद्,
वाणिज्यव्यवसायतोऽपि च यदा काशीं समायान्ति चेत् ।
गङ्गायां धनुषाकृतेः शिवपुरः शोभेक्षणाच्चित्रिताः ।
नौकास्थाः प्रतिबिम्बचित्रमनिशं ह्युत्तारयन्ति क्षणात् ॥७७॥

यदापणे विक्रयिणो बहुज्ञाः,
क्रेतारमाहूय महादरेण ।
विक्रय्यवस्तूनि सुदर्शयन्ति,
गृह्णन्ति मूल्यादधिकञ्च वित्तम् ॥ ७८ ॥

मध्यस्थवृत्त्या बहवो "दलालाः"[१]
स्ववाङ्मनोहारिगुणप्रभावात् ।
विक्रेतृवस्तूनि निधाय हस्ते,
क्रेतुस्सकाशाद्धनमाप्नुवन्ति ॥ ७९ ॥

(१) दलं आलान्ति इति ।

यस्यां वाराणसेयाम्बरवयनकला—
भिज्ञताख्यातिमाप्ताः ।
भूयांसस्तन्तुवाया निजकररचना—
पाटवं दर्शयन्तः ।
कौशेयान्यंशुकानि प्रखचित-रजत-
स्वर्णसूत्राङ्कितानि,
कुर्वन्तो मूल्यवृद्ध्या नगरगुणिगणान्
ख्यापयन्तो वसन्ति ॥ ८० ॥

रथ्यासु गावो विचरन्ति यस्यां,
प्रायस्समस्ते नगरेऽपि वीथ्याम् ।
देहेऽथ शृङ्गे पततो नरान् या
न मारयन्ति प्रहृताः कदापि ॥८१॥

अनेकविद्यार्णवपारगामिभि-
र्विदेशभाषाप्तविशेषबोधकैः ।
अनन्तवर्णाश्रमिकोविदैर्जनै-
रहर्निशं शासितशास्त्रिभिर्वृता॥८२॥

स्वशिल्पवाणिज्यकलाविचक्षणै,
स्तपस्विविद्यार्थिगणैर्विलक्षणैः ।
विलाससोल्लासहृतात्मलक्षणै-
र्वृता विदेश्यप्रहितेक्षणक्षणैः ॥८३॥

चिरन्तनागःप्रकरप्रणाशिका,
अमोघविद्यालयशास्त्रभासिका ।
प्रतिक्षण-प्रार्चितदेवहासिका,
जयत्यसौ सम्भृतभावकाशिका ॥८४॥

पुरी विशाला पुरुपाठशाला,
खेलत्सुबाला सुकृतैकमाला ।
महाघकालानलदीप्तभाला,
संसारजालादवतात्करालात् ॥८५॥

निषिद्धकर्माचरणप्रवृत्ते,
वर्णाश्रमाचारविनाशहेतौ ।
अस्पृश्यतादोषनिवारकेऽस्मिन्
काले कठोरेऽसि कुठारिका त्वम् ॥८६॥

ब्रह्मैव सत्यं जगदस्ति मिथ्या,
ब्रह्माविभिन्नं नहि किञ्चिदस्ति ।
विदेशभाषाप्तमहाप्रबोधे,
लोके नवीने चलिता प्रथेयम् ॥८७॥

न स्पर्शदोषो न च भक्ष्यदोषो,
न पेयदोषो नहि सङ्गदोषः ।
दोषास्समस्तास्तु पुरातनेषु,
विक्षिप्तमस्तिष्कमनःसु सन्ति ॥८८॥

यद्यप्येतत्प्रकृतिनिहितं मानुषाः सर्व एके,
तत्राप्युच्चैर्विमलमतिभिर्दृश्यते भूरिभेदः ।
केचिद्वर्णाश्रमपथजुषः केचिदार्या विभिन्नाः,
देवागारागमनविषये काश्यवादो दृढोऽस्ति ॥८९॥

काश्यां नीचान्त्यजाताःश्वपचरजकजा देवतामन्दिराणि,
नैवायान्ति प्रविश्य प्रणिहितमनसो दूरतो दर्शयन्ति ।
"गान्धी" वादे प्रवृत्ते "हरिजन" पदवीमादधाना इदानीं ।
गन्तुं द्रष्टुं प्रवेष्टुं प्रविहितमतयस्तर्कवादं ब्रुवन्ति ॥९०॥

यत्रस्थ-चाण्डालसहानुभूत्या,
गौराङ्गराट् शास्ति समस्तदेशम् ।
तत्रत्यविज्ञो यदि लोकशास्ता,
भवेद्विचित्रं हि किमत्र चिन्त्यम् ॥९१॥

पुराणपौरा वयमेव काश्यां,
वदन्ति केचिन्निजमानवृद्ध्यै ।
परं पुराणोक्तपुराणवासी,
[illegible] ॥ ९२ ॥

महाश्मशाने विहितश्मशाने,
श्मशानशायी महितो महेशः ।
कथं श्मशानस्थलवह्निदाता,
चाण्डालवर्गो न गणेषु गण्यः ॥ ९३ ॥

अयि काशि ! विकाशिभिर्गुणै-
र्गणनां येऽगणिता गता जनाः ।
अथ तन्निलयं स्वयं ददौ
विधिरेकं प्रथितं तदेव खम् ॥ ९४ ॥

काशी-काशीतिवादी प्रभवति
मनुजः काशिवासाप्त्युदर्की,
काशीवासी तु साक्षात् त्रिपुरहरगणः
को भ्रमस्तत्र जीवे ।
जीवात्मा यत्परात्मा जलनिधिजल-
वद्वाष्पमेघादिरूपात्,
को वा तत्संशयीत प्रकटितघटना-
प्रेक्षको बुद्धिचक्षुः ॥ ९५॥

यस्यां मातान्नपूर्णा प्रतिदिनमनिशं
सर्वसंसारिजीवान्,
अन्विष्यान्विष्य भिक्षां वितरति सदये
हैहिकामुष्मिकां वा ।
क्षुत्क्षामः कोऽपि शेतां नहि पुरि वसतां-
मध्यवर्ती मनुष्यः ।
कीटो भृङ्गोऽथवा स्यात्कथयति नितरां
किम्वदन्ती प्रसिद्धा॥ ९६ ॥

यदन्तराले विलसत्पताके,
विस्तीर्णदेवायतनप्रकोष्ठे ।
प्रतिक्षणं पूजनशङ्खघण्टा-
नादैर्हिनादात्मकता परीक्ष्या ॥ ९७ ॥

बहूनि देवायतनानि यस्यां,
समेतसत्राण्यनुवासरं हि ।
विद्यार्थि-सन्यासि-बुभुक्षितेभ्यो,
ददत्यहोऽन्नान्यथ भोजनानि ॥ ९८ ॥

अत्यद्भुतस्ते महिमा दुरापो,
यद्देहपाताद्धि विदेहतास्तु ।
परन्तु गङ्गाधरता कथं वा,
मौलौ कृता चन्द्रकला कुतश्च ॥ ९९ ॥

यत्पादपद्मस्मरणान्मनुष्या,
ब्रह्मादिदेवैरपिसात्यवृत्तिम् ।
प्रयान्त्ययत्नात्स शिवो हि यस्यां
विराजते तां प्रणमामि काशीम् ॥१००॥

यस्यामयोध्यादिकपत्तणगव्यं-
स्समं प्रयागादिकतीर्थवर्गैः ।
महेशविष्ण्वर्कगणेश्वराद्यै-
र्वसन्ति मुक्तिश्च कुतो न तत्र ॥१०१॥

वक्तुं न शक्यो महिमा त्वदीयो,
विरञ्चिशक्रादिकदेववर्यैः ।
अल्पज्ञमर्त्येन कथं स वाच्यः,
कामादिषड्वैरिविमर्दितेन ॥ २ ॥

भूमण्डलान्तर्गतभूरिदेशा-
दद्याप्युपेत्यात्र जनैर्जनीभिः ।
आरुह्य नौकामवलोक्यते ते,
गङ्गातटस्थानविचित्रशोभा ॥ ३॥

अहर्निशं देवनिकेतनेषु,
घण्टादिशंखध्वनिसच्छलेन ।
या घोषयन्तीव विभाति काशी,
मुक्तिप्रदानाय समाह्वयन्ती ॥४॥

यस्यां शम्भुकपालफालगलिता बालैन्दवी चन्द्रिका,
रात्रौ पान्थगता गतिप्रविहिता स्तम्भेषुवाराच्छलात् ।
विद्युज्ज्योतिरुदेति घोरगहनान्धः क्षेपयन्ती क्षणात्,
प्रत्यध्वं प्रतिमन्दिरं प्रतिपथं प्रस्युत्सवादिस्थलम् ॥५॥

देशान्तराद्भारत—भूरिभागात्,
सिस्नासवो यात्रिगणास्समेत्य ।
लक्षाधिकाः पर्वमहोत्सवेषु,
तन्वन्ति मेलां ग्रहणादिकेषु ॥१०६॥

यस्यां गङ्गाप्रवाहो हिमगिरि-
चलितो यन्त्रिताऽम्भः प्रणाल्याम्
प्रेम्णा काशीजनानां
प्रविहित विधये वक्रभावं समेत्य ।
मूल्यं लब्ध्वैव याति प्रतिपथ—
नलिकातो जनानां गृहेषु,
पानस्नानादिकृत्यं प्रतिदिन-
मनुवर्त्यैति यामद्वयान्ते ॥ १०७ ॥

दत्वार्द्धं हरये हिमाचलसुतायै स्नेहतोऽर्द्धं वपु-
र्विश्वेशोऽप्यभवच्छरीररहितः काशीधरावल्लभः ।
अद्वैतं श्रुतिचोदितं निगदितं वेदान्तशास्त्रेषु यज्,
ज्योतिर्लिङ्गमयं विशिष्टविहितं द्वैतं परं ब्रह्म तत् ॥८॥

दुष्टं भ्रष्टं प्रकटविकटाघौघजुष्टप्रकृष्टं,
कष्टाक्लिष्टं निकटतटिनीघट्टसंघट्टभट्टम् ।
नष्टाष्टाङ्गं सुघटघटनातुष्टमट्टाट्टहासं
का वा माता घटयति वटुं नैव पुष्ट्यातिपुष्टम् ॥१०९॥

क्रन्दन्तमालोक्य निजाङ्कजातं
दुष्टात्यशिष्टं वृजिनौघकूटम् ।
स्ववत्सलाम्बा करुणाभिपूर्णा,
नापेक्षते दीनमुखं तनूजम् ॥११०॥

क्वचिद्रामलीला क्वचित्कृष्णलीला,
सवाकूचित्रलीला क्वचिन्नाटकादि ।
क्वचिद्वाद्यसंगीततौर्य्यत्रिकञ्च,
जनैर्दृश्यते श्रूयते वा विनोदात् ॥१११॥

यस्यां द्विजा नीचतमा जनाश्च,
स्नानव्रतार्चादिककर्मनिष्ठाः ।
प्रातश्च सायं कृतनित्यकृत्याः
भव्यस्वरूपा हि विलोकनीयाः ॥११२॥

कामान् विकुत्सितकरांश्च विकर्षयन्ती,
कामाङ्कुरान्तु विकृतानधिकारयन्ती ।
कारुण्यकूटकलितापि कठोरकण्ठा,
काशी प्रकल्पकलिका कलिकल्पवल्ली ॥१३॥

धर्मार्थकामयुतमोक्षचतुस्स्तनेभ्य-
स्स्तन्यामृतं निजशिशूनिह पाययन्ती
हृद्वल्लभा पशुपतेः प्रणयं वहन्ती,
काशि ! त्वमेव कथिता कलिकामधेनुः ॥१४॥

मात ! स्त्वदुत्संगभवोऽपि वृद्धो,
युवेव सत्कर्मविगर्हणार्हः ।
सदा कदाचारविकत्थनीय—
स्तथापि बालो न घृणास्पदः किम् ? ॥११५॥

वाराणसीति कथिता यजुषामृचासु,
काशीति शङ्करपुरी च पुराणवर्गे ।
सा काशिका जगति काशिततत्त्वबुद्धिः,
ख्याता वना[१]रस-"वनारस"-नामधेया ॥११६॥

"काशीपुरा"-विदितनाम महालये या,
काशी स्वयं प्रकटमूर्तिमतीह देवी ।
काशी निवासिजनरक्षणदत्तचित्ता,
वन्द्या भवाब्धितरणी धरणी विमुक्तेः ॥११७॥

१ वनानां रसा समन्ताद्रसो यस्मिन् ।

यस्यां स विश्वेश्वर आदिदेवो,
ज्योतिर्मयश्चन्द्रकलावतंसः
नीराजमानस्सुमनोभिरर्च्यो,
दृश्योऽस्ति रुद्रप्रतिमस्त्रभक्तैः ॥ ११८ ॥

यत्रान्धसेतौ² बहुचर्मकाराः
स्ववंशधर्माचरणप्रवृत्ताः।
उपानहां निर्मितकाल एव,
गायन्ति रामायणमर्थयुक्तम् ॥ ११९ ॥

कः संशयीताऽथ विलोक्य धर्म्यं,
म्लेच्छेषु भावं किल काशिकायाः।
मुक्ति प्रदानेऽप्यतिपावनत्वे,
धर्माजिरत्वे प्रतिभाविहीनः ॥ १२० ॥

म्लेच्छा महानीचतरा हि यस्यां
भङ्क्त्वापि देवालयमत्र काश्याम्।
"नमाज" माहुः प्रति पञ्चवार—
मत्रानिमित्तं स्वमतानुसारम् ॥ २१ ॥

पुण्यानि भग्नान्यपि मन्दिराणि,
जातानि यस्यां महजिदपदानि
अल्लां स्मरन्तो बहुशः पठन्ति
म्लेच्छा नमाजं धृतधर्मभावाः ॥२२॥

म्लेच्छाश्च विश्वेश्वरमन्दिरस्य,
भित्तिस्थितां मज्जितमेव यस्याम्।
"औरंगजेबेन" कृतां वदन्ति,
"दिल्ली" जुमा मज्जिदतोऽपि पुण्याम् ॥२३॥

शैवाश्शाक्ता गाणपत्याश्च सौराः,
कार्ष्णा रामा वैष्णवा नारसिंहाः।
बौद्धा जैना नास्तिकाः ख्रीष्टतानाः,
काश्यां कौला भैरवा भूतभक्ताः ॥१२४॥

तपोवनं या मुनिवृत्ति विप्रैः,
शाक्याश्रमो या शमिभिक्षुवृन्दैः।
विज्ञानिभिस्त्वष्टगृहं विचित्रं
विद्यार्थिभिः शास्त्रगुरोः कुलं या ॥ १२५ ॥

धारा वसूनामथवेदविद्भिः
सद्भिश्च या साधुसमाजभूमिः।
गन्धर्वपूर्गायनतत्वविज्ञैः
कामाङ्गणं या गणिकाप्सरोभिः ॥ २६ ॥

चिन्तामणिभूरियमर्थिसङ्घैः,
संगीतशालेति च लासकैर्या।
द्यूतस्थली बन्दिजनैर्विदग्धैः,
सांयात्रिकैर्या निजलाभलक्ष्मीः ॥ २७ ॥

पापात्मभिः संयमिनी पुरीति,
पुण्यैर्जनैर्याप्यमरावतीह।
मोक्षार्थिभिस्तारकमन्त्रमूर्ति—
रगृह्यतेयं प्रथितास्ति काशी ॥ १२८ ॥

भुजे समुत्थाप्य निजे स्वयात्रिकान्,
समाह्वयन्तीव मुदा शिवाज्ञया
ददाति कैवल्यपवित्रसत्रकं,
समस्त जीवेभ्य इयं हि काशिका ॥१२९॥

यस्यां जना वारिविहारकाले,
वंशं समालम्ब्य सकाष्ठपृष्टम्।
विश्रान्तिमायान्ति सदा पवित्रे
गङ्गाप्रवाहे प्रणमामि काशीम् ॥१३०॥

यस्यां दृढप्रस्तरखण्डबद्धाः
घट्टा अनेके कृतिभिर्निबद्धाः।
ते साम्प्रतं जीर्णतराश्च शीर्णाः
प्रायो विदीर्णास्सलितान्तराले ॥१३१॥

२ अंधरापुल

केचिद्विभक्तास्त्रुटिताश्च घट्टाः,
जाता जनप्राणहरा अयोग्याः ।
येषु प्रभाते बहुबालवृद्धाः,
स्त्रियः पतन्तीह भयावहेषु ॥ १३२ ॥
जीर्णेषु शीर्णेष्वपि घट्टकेषु,
महा-प्रयत्नैर्ग्रहणादिकेषु,
बाला युवानः शिशवः स्त्रियश्च,
स्नान्त्येव भक्त्या निपतन्ति गर्त्ते॥१३३॥
न साम्प्रतं केऽपि तथा वदान्याः
ये कारयन्तु स्वधनेन पूर्तिम् ।
यतो भवेद्दुर्बलबालवृद्ध—
नृणां न हानिर्निजजीवनेषु ॥ १३४ ॥
प्राणाधिके प्रियतमे ! मम धर्मकर्म—
सम्मानमानधनधान्यसमृद्धिभूते ! ॥
काशीपुरि ! त्वयि यथा मम जन्म जातं,
तद्वन् निजाङ्कशयनस्य कुरु व्यवस्थाम् ॥१३५॥
"तद्विष्णोः परमं पदं त्वयि यथा दृश्यं महीमण्डले,
तद्वज्ज्योतिरुदेति मङ्गलमयी नो खे क्वचित्काशिके ।
गर्भे ते वसतिर्यथा मम जनिर्वंशप्रतिष्ठान्विता
भूयात्पूर्वपवित्रपुण्यनिचयाच्छुभ्या चिदानन्ददा॥१३६॥
विषमविषयजातज्वालजालाकुलान्तं,
सुतधनजनचिन्ताजीर्णशीर्णान्तरालम् ।
कलिकलुषकुलोग्राङ्गारतप्ताङ्गसङ्घं,
निजकरपरिवेशं धेहि काशि ! प्रसादात्॥१३७॥
मत्पूर्वजन्मकृतकर्मफलप्रभावा—
ज्जातं यथा मम जनुर्जननि ! त्वदङ्के ।
तद्वद्विधेहि करुणां निजनामयोर्या,
ज्योतिः प्रकाशय समोऽस्तु यतो निरस्तम्॥१३८॥

महः प्रकृतिपूरुषं शिवशिवार्द्धनारीमयं
मदीयतनुविक्रयप्रभवदाममूल्याञ्चितम् ।
त्वया निजदयालवाज्जननि ! काशिके ! वासिके
स्वकीयपदकिङ्करे मयि वितीर्य्यमेवान्ततः॥१३९॥
देशो यस्य पवित्रभूमिसरयूपारस्थपिण्डी--" पुरे
शाण्डिल्यस्य मुनेस्तपोधनवतो गोत्रं पवित्रं परम् ।
विद्वद्वृन्दनुता त्रिपाठिपदविः ख्याता कुले यस्य सा
काशीमाप दिवाकरः स्वनिलयाद्विद्याभिलाषोत्सुकः ॥१४
मत्पूर्वजाग्र्यः पुरुषस्त्रिपाठी,
"दिवाकरो" वंशदिवाकरो यः ।
काशीपुरीं सारवपारतोऽत्र,
समेत्य विद्यां विविधामवाप ॥१४१॥
अधीतविद्यः स महातपस्वी,
विद्वल्ललाटंतपतामुपेतः ।
श्रीविश्वनाथस्य विभोः प्रसादाच्
"श्रीविश्वनाथं" तनयं समाप॥१४२॥
तस्यात्मजो "मधुकरो"ऽजनयत्स
"रामानन्दा" भिधं कविवरं बहुशास्त्रत्तम् ।
येन स्वकाव्यनिकरे कुतुकाद्व्यधायि,
"काशीकुतूहल" मिति प्रथितः प्रबन्धः ॥२४३॥
तद्वंशजाता वयमत्र काश्या—
मत्युग्रतत्पुण्यफलप्रभावात् ।
स्वच्छन्दवृत्त्या कलितस्वभावा
शिवप्रसादान्निवसाम एवम् ॥१४४॥
यद्यपि "काशीखण्डा,, दधिकं
वक्तुं न शक्यते यत्नात्
तदपि च मलिना वाणी,
कथमपि संशोधनीया मे॥१४५॥

स्ववाङ्मनसयोर्भवेद्विविधभावनादूष्ययोः,
कथञ्चिदिह शोधनं मलवतः शरीरस्य मे ।
विचारमधिकृत्य तद्भगवतः कृपालेशतो,
व्यधायि शतकस्तवः प्रथितकाशिकाया मुदा ॥१४५॥

काशीपतिः श्रीकमलापतिश्च,
तथैव कैलासपतिस्तृतीयः ।
श्रीकोशलेशः करुणापतिश्च
पञ्चाङ्गजास्ते चिरजीविनस्स्युः ॥१४६॥

काशीखण्डानुवादावसरकृतमतिर्वृद्धसंसारजालः,
कालापेक्षाप्रवृत्तः स्वमनसि बहुधाऽलस्यदोषाभिभूतः
काशीवासीह नारायणपतिधरणीदैवतः स्वात्मतुष्ट्यै
काश्यामेवात्र काशीशतकमररचद्विश्वनाथप्रसादात् १४७

अब्दे षष्टितमे स्वकीयवयसः प्राप्ते पुनः पार्थिवे,
खाङ्काङ्केन्दु (१९९०) मिते महेशकृपया
मेषस्थिते भास्करे ।
वैशाखे गुरुवासरेऽक्षयतृतीयायां तिथौ पूरितं,
"श्रीकाशी–शतकं"
स्वमुत्करमिदं,
काशीश्वरायार्पितम् ॥ १४८ ॥

इति श्रीकाशीशतकम् ।

---

# संस्कृतशिक्षादुरवस्था संस्कृतज्ञानां कर्तव्यञ्च

श्रीमान् गोस्वामी गोपाललालः,

निखिलवाङ्मयप्रवर्तकै र्महर्षिवृन्दैर्निरन्तरं संसेवितायाः, कलिकालमाहात्म्यात् विरलप्रचारं गतायाः, सहृदयमुखकमलनिर्गलन्मकरन्दायमानवचोधाराभिस्तद्विदां चेतांसि प्रमोदयन्त्या अमुष्यास्त्रिदिवभारत्या यादृशी अनिर्वचनीयादुरवस्था वरीवर्ति, मन्ये कूपान्तःपतिता गर्तनेत्री,-आवर्तभ्रमितैषा नातिक्रमेदस्मदीयदृग्विषयतामिति, विबुधभारतीलघिम्नि तदरातयस्तु चेष्टां कुर्वन्त्येव, पर विषादस्यायं व्यतिकरो यत् एतदीयाः कृतघ्नाः संस्कृतज्ञबन्धवोऽपि अदसीये ह्रसिम्नि सहायभूताःसन्ति, अन्यथा विचार्यताम्! सत्यपि तदितरभाषीयसमाचारपत्रभूम्नि कथं स्याद् तदीयविविधपत्राणामभावः, भावेऽपि तदीयग्राहकनैयून्यम, तेनैवाद्य विबुधभारत्या उपरि किं संस्कृतज्ञाः कुर्वन्ति, ते तु उदरम्भरिणो जीवाः, नैते किमपि कर्तुम् शक्नुवन्ति, न वास्यां किञ्चिद्दिरवलं व्यवसायमपि .... न साम्प्रतं न्याया-लयेष्वतिमान्या, नच सार्वजनिकसभासु लब्धा-

दृश्यते । न वास्यां कानिचित्प्रसिद्धानि मासिकपाक्षिकाणि साप्ताहिकानि वा पत्राणि प्रकाश्यन्ते । यद्यपि द्वे वा कुत्रचित्प्रकाश्येते तर्हि तेऽपि ग्राहकाभावतया नात्मानं वर्द्धयितुं शक्नुतः, अधुना हि परिमितेषु केषुचिद्भारतीयविद्वत्स्वेवात्मानं प्रकाशयत्येषा इति, वितण्डालापेन, विभिन्नाक्षेपकराणि वचनानि समुद्गिरन्ति दोषग्रहणपटवः । परं च इत्थं निधीयमानानामाक्षेपाणां सन्निधौ सत्यपि महाविद्वांसो मौनमश्नुवते, ते वर्तमानसंस्कृतपत्रादिषु स्वकीयाशयखचितनिबन्धार्पणे भारतभारतीप्रचारकविविधोपदेशे वा निजपमानमिवाकलयन्ति । विपक्षिणो धर्मविषये मर्म्मभिदो वचोराशीः प्रयुञ्जते । प्राचीनसंस्कृतग्रन्थांश्च दूषयितुमापार्ष्णिमस्तकं स्वेदस्रावं कुर्वन्ति, परं महान्तस्तूष्णिकामुपासते । लघवः किंकर्तुं क्षमेरन् । तेषां प्राचीनग्रन्थावलोकनाऽलंकर्मीणतायाम् न प्रौढत्वम्, नापि जागत्कानुभवातिशय्यम्, महाप्रज्ञानां च तटस्थता, इत्थं भविष्यति च तत्सन्नियोगेन गीर्वाणवाण्याः धर्मस्य च ह्रसिमा । भाषामूलक एव धर्मो भवति तस्य प्रचारो लेखेन वक्तृतया वा भवितुमर्हति तस्मादस्माकं कर्तव्यं तु सर्वभाषाप्रधानभूताया अस्याः कथमेतादृश्यवनतिरभूत् , इदानीं कथमस्याः पुनः सार्वजनीना प्रवृत्तिर्भवेत् । किम्वा साधनमेतस्याः प्रचारायेति संधारणीयम् । यस्याः कस्या अपि भाषायाः पल्लवित्वे मुख्यतो द्वे एव कारणे स्तः । एकं तद्भाषाभाषिणां जीविकासौलभ्यमपरो व्यवहारपद्धतिषु तद्भाषोपयोगिता च–इति कारणद्वयमपि लक्षीकृत्य एतदेवास्ति, यदि ब्राह्मीं वयं प्रतिगेहं प्रचारयिष्यामः, सर्वे प्रतिक्षणं-संस्कृतभाषिणो भविष्यामः, मित्रादिभिः साकं पत्रव्यवहृतौ किलेमामेवोपयोक्ष्यामः, एतस्या दैनिकसाप्ताहिकपाक्षिकमासिकपत्राणि प्रचार्य तद्ग्राहकभूयस्त्वाय चेष्टामहे, तदैव गर्तनिपतितायाः निर्जराणां भारत्याः सर्वाङ्गीणोन्नतिपथमन्वेषणवन्तो भविष्यामः; नान्यथा, परमधुना तत्प्रत्यनीकैव विभाव्यते । कोऽधुना गीर्वाणवाण्या संलपति, पत्रव्यवहारकाले तु अमरसरस्वत्युपयोगे च जिह्रेति, त्रिदिवभारतीसमाचारपत्रानयने च द्रविणस्य कालस्य वा अपव्ययो भवति, यदि केचित् स्वानुरागाटोपप्रदर्शनाय आनाययन्त्यपि संस्कृतपत्राणि; तानि तथैव बद्धानि तिष्ठन्ति । दर्शनस्य तु कैव कथा—आस्ताम् , अहह—चेतस्ताम्यति, लेखनी स्रंसते, परं शत्रूणां कृते प्रमोदमोदकाः । यदि श्रीमतां महानुभावानां सरस्वतीसेवनपूतचित्तानां मानसमस्माभिः स्वभावजटिलाः लेखाः कुत्र प्रकाश्या इति शंका दुनोति चेत्तर्हि भवन्त एतज्जानन्त्येव यदेतत् संस्कृत—साहित्यसमाजमुखपत्रं सुप्रभातमिति नामाङ्कितम् त्रिदशभारत्युपासकानां कृते-तदीयविविधप्रबन्धलेखनधाष्ट्र्योत्पादनाय निर्जराणां कल्पतरुरेवाविर्भवति । तदेव सुप्रभातमिदं घनालपत्वेऽपि नानाटोपघोषितानि—दूषणानि—दूषयत् राराजते ।



# 'पत्रं पुष्पम्'

श्री ईशदत्त पाण्डेयः 'श्रीशः' 'कविरत्नम्'

१

अथ सुन्दरतोऽतिसुन्दरं
श्रुतलोकोत्तरमोदमन्दिरम्
कमपि प्रियमूर्तिमाश्रये
धृतवेणुं मधुरं मनोहरम् ॥

२

कृतभीषणविघ्नभंजनः
सुरसेव्यो जगदेकरञ्जनः
तरुणारुणपंकजाननो
दयतां मे भगवान् गजाननः ॥

३

सिवभारत-भूति-भूषितः
प्रणताङ्घ्रिर्नरदेवनायकैः
वितरत्वमलां धियः कलां
स-रमो मे परमेश्वरः प्रभुः ॥

४

जननी जगतो महासती
गुणगौरी गिरिराजनन्दिनी
स्वगतैः करुणैः कटाक्षकैः
तनुतां मे स-शिवा शिवा शिवम् ॥

५

नवशारदकञ्जभा सदा
सुखदा ज्ञानविधौ विशारदा
अधिलोकमुदारसारदा
नमनीया नहि केन शारदा !

६

मतितो गतितोऽप्यदूषणां
जनयन्तीं सुधियं सुधीजने
प्रणुमो नवचन्द्रभाननां
सुरवाणीं भुवनैकभूषणाम् ॥

७

सदये शिशुखञ्जनेक्षणे !
क्षणमेकं निजनेत्रवीक्षणैः
अवलोकयसे न चेदहो !
भविता का मम दुर्दशाततिः ॥

८

शरणागत एष बालको
यदि कल्याणि ! न यास्यति प्रभाम्
भुवने प्रचलिष्यति ध्वनिः
जगदम्बा न हितैषिणी सुते !! ॥

९

तदिमां विनिशम्य कातरां वचनानामवलिं सरस्वति !
नवनीतमिवातिपेलवं मयि धेयं निजपाणिपल्लवम् ॥

# भारतसीमन्तिनीनामायुर्वेदस्यावश्यकता।



लेखिका–श्रीमती सिद्धेश्वरी देवी, श्रीनगर, पुर्नियां।



अयि "सुप्रभात"–प्रियजनते !

भारतीय-ललनानां आयुर्वेदज्ञानं सुतरामावश्यकम्। तदज्ञानादेव भारते प्रतिगृहं किंशुककुसुम[1]वदापातमात्ररमणीयाः कृशाश्च दरीदृश्यन्ते लोकाः। पुरुषा आयुर्वेदमभ्यस्यागतं रोगं चिकित्स्य निवारयेयुः। स्त्रियस्तु "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरं" ( Prevention is better than cure ) इति न्यायेनायुर्वेदज्ञानाद् रोगागमनायैव कण्टकायिता अवसरन्न वितरेयुः। आहारादेव सकलव्याधयः प्रायः समुत्पद्यन्ते। सचाहारो भारतीयानां गृहिणीवशे वर्तते। श्रीकृष्णपरमात्मा "आयुःसत्व बलारोग्य-सुखप्रीतिविवर्धनाः। आहाराः" इति गीतया—सात्विकाहारसेवनं आयुरादीनभिवर्धयतीति किलाभिप्रैति। किञ्च, आहार एव कापथ सञ्चारिवैरिषड्वर्ग[2]निग्रहेलिमः। मनः प्रसन्नता, सुखञ्च तस्मादेव निष्पद्यते। इदानीं प्रसन्नताविरहात्पुमांसौ समीपकोपौ च्युतमती परस्परं कलहायतः। अशान्तिमुत्पादयतः। शरीरञ्च सादयतः। श्रीकृष्णभगवांस्तु "प्रसादे सर्वदुःखानां हानिरस्योपजायते। प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते।" 'नास्ति बुद्धिरयुक्तस्य नचायुक्तस्य भावना। न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्॥' इत्यनेन प्रसन्नतायाः सर्वदुःखनिवारकत्वं सुखमूलत्वञ्च प्राशंसत्। लोके आरोग्यात्परतरं किमपि नास्ति सुखसाधनम्। सम्पद्रूपयौवनादिसुखसामग्रीसमवायेऽपि, आरोग्यभाग्यवैधुर्ये जीवनमेव व्यर्थं भवति। दूरे गता शर्मलेशस्याप्याशा। अतः सर्वसुखमूलभूतारोग्यमाहारवशवर्ति। तस्य च योषितां हिताहितज्ञाने व्याधिमात्रं भारतादन्यत्र स्थानान्तरं गवेषयेत्। आगर्भं स्त्रिय एव परिपालयन्ति प्रजाः। शिशुसंरक्षणं कर्तुं केवलं जननी पारयति। शैशवमेव भाविनव्यभव्यभाजनं, शैशवं सुरक्षितं, "यन्नवे भाजने लग्नः संस्कारायोपजायते" इति वचनेन यावज्जीवं सुखयति। यत्र हि "शतायुर्वै पुरुषः" इति श्रुतिजेगीयमानाऽऽयुःपरिमाणं केवलं श्रुतिगोचरमेवावशिष्यते। लोके तु–तत्सामिभाग एवायुषि कालकवलिता अवलोक्यन्ते लोकाः। प्रपञ्चेऽस्मिन्निखिलजनपदेभ्योऽपि भारत एव सकलव्याधिमन्दिरं इति वृत्तपत्रानुभवाभ्यां प्रतीयते। आयुर्वेदज्ञानशून्या भारतभामिन्यः पथ्यापथ्य–शाक–पाक–विवेक–विकला आमन्त्रयन्ति रोगान्। भारतललनासु सम्यगायुर्वेदप्रचारेऽबलाः पुरुषाः शिशवोऽबलाश्च दृढकाया नीरोगिणो [3] जैवातृका धीमन्तः सुखिनश्च भवेयुः।

१ पलाशे किंशुकः पर्णो इत्यमरः। २ निग्रहेलिमः–निग्रहीतव्य इत्यर्थः केलिमर उपसंख्यानमिति वार्तिकात् ३ जैवातृकः स्यादायुष्मान् इत्यमरः।

# मेदपाट-गौरवम्



समालोचयिता—श्रीदीनानाथशर्माशास्त्री सारस्वतः (मुलतानस्थः)



जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ।

पाठक महाभागाः ! अद्यत्वे जन्मभूमेर्भारतवर्षस्योद्धाराऽपपातनं धर्म्मपराङ्मुखत्वं वा वर्तमाननेतृभिः क्रियते, नैतन्निह्नुतं भवेच्छ्रुमतां दृग्गोचरात् । इमे कामं वाह्यदृष्टौ 'खद्दरा' दिपरिधानाद्याडम्बरप्रदर्शनेनैव भारतमातुः स्वच्छन्दताऽपदेशं प्रदर्शयेरन्, परन्तु यदा शरीरकष्टप्रदं किमपि कृत्यं कर्तुमापतेत् स्वदेशोद्धारनिमित्तम्, तदैते कंकण परिधानं कृत्वा गृहे स्त्रीयिता एव तिष्ठन्ति । 'वचने का दरिद्रता' इत्यनुसृत्यैव 'वाचा शक्ता न कर्म्मणा' इत्येतन्निदर्शनायमाना इमे केवलं व्याख्यानदानद्वारैव देशमुद्दिधीर्षन्ति । परकीयत्तव-( नासाध्वनि ) शब्दं श्रुत्वैव गव्यूतिं धावन्त इमे, व्याख्यानमञ्चमञ्चतः काष्ठपीठिकायां हस्तप्रहारेणैव स्वशौर्य्यं परिचाययन्ति । छदिषि विडालपतनशब्दं निशम्यैव समाश्रितवेपथवो नीशार ( रजाई ) वेष्टितमुखा इमे धर्म्मकृत्यविनाशन एव भारतीयसंस्कृतिविनाशकाऽऽन्दोलनप्रचारण एव बद्धपरिकराः स्ववीरतां परिचाययन्ति । जनान् विदेशे धनप्रेषणार्थं प्रतिषिध्य तेभ्यस्तद् गृहीत्वा वैदेशिकस्वविलाससामग्रीरादाय स्वयमेव विदेशे धनप्रेषणे कारणानि भूत्वा धन्यम्मन्या भवन्ति । पदा[illegible]मनु दूरऽपेतम्, निकटतमस्थानोपढौकनेऽपि एषां कृते विविधयानानि भूयान् धनराशिश्चाऽपेक्ष्यते । यदि कश्चिद्धार्मिक एतेभ्यस्सदुपदेशं वितरणयति, तर्हि त एतेन स्वापमानमवबुध्य तस्मै कोपरोपणं कुर्वन्ति, स्थाने स्थाने सभां कृत्वा तं मिथ्यालाञ्छनैस्तिरस्कुर्व्वते । एषां कार्य्य परिपाटी तु—'आरम्भगुर्वी क्षयिणी क्रमेण' भवति हा ! किमयमेव देशोद्धारप्रकारः ? किमियमेव 'स्वराज्य' परिभाषा ? किमिदमेव देशभक्तिलक्षणम् ? हन्त !

अयि नेतारः ! ईदृग्विधैर्दुर्विलसितैस्तु भवन्तो भारतवर्षमवनतिसन्निकर्षमेव नेतारः । यदि भवन्तो वस्तुत एव देशमुद्दिधीर्षव उन्निनीषवश्च सन्ति, सत्यं वा स्वराज्यमभिलाषुकास्सन्ति, तर्हि भवतां प्रथमङ्कर्त्तव्यमेतद् यद्—भवन्तो धर्म्मस्वातन्त्र्यं दवयितुं मा प्रयस्यन्तु । भवन्तो धर्म्मदृष्टिकोणेन स्वराज्यमधिगन्तुं यतन्ताम्, नतु नीतिदृष्ट्या । भवतां धर्म्मस्यैवोन्नत्या, प्राचीनधर्म्मयैव स्थित्या देशस्योन्नतिः; नत्वीदृग्विधैर्व्वर्त्तमानदुश्चेष्टितैः । इतिहासपृष्ठानि पश्यन्तु । पुरातनानां स्वराज्यमीप्सूनाञ्च चरितानि पर्य्यालोचयन्तु । तेषामाचरणैः स्वकीयाचरणानि तुलयन्तु । अन्येषां कथापथस्त्यज्यताम्—तत्र मेवाडाधिपतेर्नाकनायकीभूतस्य श्री प्रतापसिंहस्यैव वशीकारकारि-सदाचरणसरण्यां दृक्पातः पादपातो वा विधीयताम् ।

रसायनसार-प्रणेता



स्वर्गीय आयुर्वेदमार्तण्ड, तर्कालङ्कार
श्यामसुन्दराचार्य-महोदयः

महात्मना-'ये वर्षन्ति ते न गर्ज्जन्ति' इति सार्थक्यमानिन्ये, न भवतां राद्धान्तः 'ये गर्ज्जन्ति ते न वर्षन्ती'ति। तेन कीदृंशि × कष्टानि सोढानि, कथं वा स्वार्थत्यागः कृतः । कथं चोपवासानामपि समादरः कृतः, अरण्ये वासोऽपि स्वीकृतः, जीवनस्य वलिरपि दत्तः, अन्तपर्य्यन्तमपि स्वीकृताद् व्रतादपेतता नाऽकारि। एतस्मादधिकं स्वधार्मिकस्वातन्त्र्यं नाऽपहारितम्। स देशभक्तो जायमानमपमानमपि सम्मानमवाबुद्ध, भीरुतां तु सस्माराऽपि नैव, जनानां धनेन स्वविलाससामग्रीं न सञ्जिघृत्ताञ्चकार। असावन्यस्मात् सम्मतिं प्राप्य स्वाऽपमानं नैव मेने। गेहे नर्द्दिताश्च नाऽशिश्रियत्। तस्य द्वेष आसीद् विलासेन, नतु स्वप्राचीनधर्म्मबन्धुभिः। तस्य प्रीतिरासीद् देशेन, न किल स्वदेशिकजन-धनेन। तच्चण्डकोदण्डस्य लक्ष्यमासन् विधर्म्माणो न तु सधर्म्माणः। इत्येवंविधस्य महात्मनश्चरित्राणि यदि प्रणिधानेनाऽनुकुर्य्युर्नेतारः, तर्हि वैपरीत्येन योऽद्यत्वे देशोद्धारस्थाने देशोऽपकारो जायमानो निभाल्यते, स न स्यात् । अथ च सत्या देशभक्तिर्जागरूकतामापद्येत, तेन चास्मद्देशगौरवमपि जागृयात्।

अस्तु—सन्तु नेतारः कुपथगामिनो ज्ञानाद्वा, अज्ञानाद् वा, अस्माकमकृतज्ञाः संस्कृतज्ञा एवाऽत्र किं कुर्वन्ति ? तेऽपि सदैव दैवपतिताः सुप्ता एव सन्ति । "इदानीन्तननेतृवृन्दाऽनुष्ठिताऽवैध-देशध्वंसकर-भारतीयसंस्कृतिविनाशकाऽऽन्दोलनबहिर्मुखतारूपं स्वापं" तु तेषां वयमपि प्रशंसाम एव, परन्तु—"भारतीयधर्म्माऽनभिज्ञ—नायकाऽऽभासप्रचारिताऽऽन्दोलनविरुद्धाऽऽन्दोलनकर्तृत्वाऽभावसमानाऽधिकरण-स्वधर्म्मप्रचारोपायचिन्तनप्रयाग्रभाववत्त्वरूपेण 'विमर्शिविद्वत्' परिभाषित-स्वापेन" तु तेऽद्यापि युक्तास्सन्त्येव; यदपोहनाय 'शिवाजी–प्रतापसिंह-गोविन्दसिंह–वीर वैरागी–' प्रभृतीनां चरितान्यधिकृत्य निर्म्मितानामुत्साहकानां संस्कृतकाव्यानां निर्म्माणस्य, तेषाञ्च संस्कृतज्ञमण्डले प्रचारणस्य च, नितान्तमेव प्रयोजनीयता वर्त्तते, येन संस्कृतप्रसार-व्याजेन धर्म्म-देशभक्तेरपि प्रचारः स्यात् संस्कृतज्ञेषु। तत्र 'शिवाजी' चरितमधिकृत्य 'शिवराजविजयः' श्रीमदम्बिकादत्त व्यासमहोदयेन प्रणिन्ये; यत्र सुवहुसाफल्यमवाप्तं तत्प्रणेत्रा। एवमन्येषामपि काव्यानां नितान्तमपेक्षा वर्त्तते। तत्र 'प्रताप'—प्रतापमधिकृत्याऽपि कैश्चन काव्यानि प्रणीतानि स्युरिति सम्भाव्यमेव । परमस्मद्दृष्टिपथेऽधुना 'प्रताप'—प्रतापप्रख्यापकं 'मेदपाटगौरवम्' नाम काव्यं नव्यशैल्या प्रणीतं प्राप्तम्, यस्य प्रणेता नव्योत्साही 'डूण्डलोद' वास्तव्यः श्रीयुतमहावीरप्रसाद—जोशी काव्यतीर्थो वर्त्तते। इदं काव्यं प्रायो ' दोहा ' च्छन्दोभिर्निवद्धं वर्त्तते। संस्कृते दोहा-कवितादिषु रचना प्रथमं मेदपाटीय-श्रीकृष्णरामभट्टकविना-यो जयपुरराजकीयसंस्कृतपाठशालायामायुर्वेदाऽध्यापक आसीत् प्रचालिता । तत इतो ध्यानं जयपुरसंस्कृतपाठशालायां साहित्याऽध्यापकस्य भट्टश्रीमथुरानाथशास्त्रिणः साहित्याचार्य्य—महोदयस्य

× कीदृंशि । क्लीवे झलन्तलक्षणो नुम्, तस्याऽनुस्वारः । एतद्विषये मामकीनः 'परीक्षागुणदोषविमर्श' शीर्षको निबन्धः 'श्रीनगर' प्रकाश्यमान-' श्री ' पत्रिकायास्तृतीयवर्षीय-३-४ सङ्ख्ययोर्द्रष्टव्यः ।

प्राप्तम्। यत्फलस्वरूपे 'साहित्यवैभवं' प्रथितम्। ❀ ततोऽधुनाऽनेन नव्यभव्यकविनाऽपि पूर्वपण्डितगणक्षुण्णे वर्त्मनि प्रचलितुमुदसाहि। परीक्षापिशाच्या दुष्प्रभावाद् यदि कश्चिदुत्साही नव्यकाव्यं प्रकाशयति चेत्; परीक्षाग्रन्थपठनमात्रलुब्धानामौदासीन्यात् कोऽपि तज्जिघृक्षुर्नोदेति, (एषैव संस्कृत-समाचारपत्राणां कथा) एवञ्चोत्साहिनामुत्साहश्शीघ्रमेव भज्यते। परीक्षासु नव्यग्रन्थानां नियमनेऽपि काठिन्यम्भवति, यावद्विश्वविद्यालयीय—पुस्तकनियामकानां चाटुकारिता, तेभ्य उत्कोचप्रदानं, तदीयोदरपूर्त्तिः, तैस्सह सम्यक् परिचयश्च वा न भवेत्; तावन्नव्यकाव्यं तत्र न नियमयितुं शक्यते। तस्य काव्यस्याऽऽस्वादयन्ते उपजिह्विका—जिह्वा एव गृह्णन्ति। अत एवाऽद्यत्वे नवोदीयमानकवीनां न्यूनता भवति। परं 'कर्म्मण्येवाऽधिकारस्ते मा फलेषु कदाचन' इति मत्वा ये केऽपि नव्यकाव्योन्मेषे व्यग्रचेतस्कास्ते धन्यवादाऽर्हाः। तेष्वेवाऽयमस्माकं प्रेमपात्रं कविः। तेन यथाशक्ति काव्येऽस्मिन् रससञ्चारेण यमकाऽनुप्रास-श्लेषोत्प्रेक्षाऽपह्नुत्याद्यलङ्कारनिवेशनेन सहैवाऽन्तराऽन्तरा स्वकल्पनाशक्तिचमत्कारेणाऽपि कथावस्तु सजीवं कृतम्, 'नहि कवेरितिवृत्तमात्रनिर्व्वहणेनाऽऽत्मपदलाभः, इतिहासादेव तत्सिद्धेः' इति च सार्थकीकृतं व्यतिरेकेण। वर्ण्यवस्त्वपि यथेष्टं वर्णितम्, येन देशभक्तिर्नितरां हृदये पदं ददाति।

'दोहादि' च्छन्दस्सु समपादान्तेऽन्त्याऽनुप्रासो हठादाकृष्याऽपि स्थापनीयो भवतीति प्राचीनच्छन्दोभ्योऽत्र काठिन्यम्, कविना चाऽत्राऽपि साफल्यं प्राप्तम्, प्रायोऽत्र हठादाकृष्टता न दृष्टा। प्रणेत्रनुरोधतोऽस्याऽस्माभिःसंस्कृतिरपि कृता। यद्यपि क्वचित् २ कविस्वदोहादिच्छन्दस्सु अस्मन्मतेन लयभेदो दृश्यते, एवमन्यत्राऽपि स्यादेव त्रुटिः क्वचिदिति सम्भाव्यते; तथाऽपि मानुषकृतौ सर्व्वथा दोषाऽभाव एवाऽऽश्चर्य्यविषयः; स्खलनानां परमेशाऽतिरिक्त-जीवशेमुष्याऽविनाभावत्वात्। अस्तु—विस्तरभिया काव्यस्याऽमुष्य कात्स्न्र्येन समालोचनामकृत्वैतदनुरुध्यते, यत् संस्कृतज्ञैरेव स्वयं नेतृत्वमादाय वैधेयाः + स्वविधेया विधेयाः, तेषामेव देशभाषासम्बन्धेन देशनेतृत्वे सत्यं स्वत्वम्। तेषाञ्चोचितमेतद्, यत्—ते वर्त्तमान—नेतॄणां × दुरुदर्कशालिकार्य्याण्यपसार्य्य ईदृशं कार्य्यक्रमं प्रकटयन्तु, येन वास्तविको देशोद्धारः स्यात्, अथवाऽस्मत्पूर्व्वजानां यशोराशिः क्षीरनीरनिधिनीरप्रतिस्पर्द्धी स्यात्, कवयितुश्चान्तर्लक्ष्यं पूर्णं स्यात्। किमनल्पजल्पनेनेति शम्।

❀ श्रीकृष्णकविमहोदयानन्तरं काशीस्थसुप्रसिद्धविद्वद्वरैः श्रीदुःखभञ्जनकवीन्द्रैः, तत्तनूजैश्च महामहोपाध्याय—देवीप्रसादकविचक्रवर्तिमहोदयैश्च दोहा—कवितादिछन्दः सुसंस्कृतकाव्यानि रचितानि सन्ति। विगताब्देषु प्रकाशितान्यपि सुप्रभाते। —सम्पादकः

+ वैधेयाः—मूर्खाः, विधेयाः—आज्ञाकारिणः, विधेयाः कर्त्तव्याः।

× नेतॄणाम् [illegible] दीर्घः, मुद्रकास्त्वत्र ह्रस्वमात्रां योजयन्त्यज्ञानात्।

# "शिक्षितेषु क्रान्तिरुत निष्क्रिया-समस्या"



लेखकः—साहित्यधुरीणः पं० श्रीमहावीर प्रसाद जोशी 'काव्यतीर्थः' डूंडलोदाभिजनः

सम्प्रति भारते निष्क्रिया-समस्या प्रतिदिनं जटिलैव वोभवीति। यत्रापि कुत्रचिन्नेत्रे निधीयेते तत्रैव निष्क्रियाणां सैन्यं सम्मुखीनं भवति। हन्त! ते नववयस्काः—यैर्निज-पितरौ निधनादपि भयंकरेण निर्धनता-पाशेन सन्दानितौ, निजं च स्वास्थ्यं स्वःस्थं कृत्वा बी. ए, एम. ए. इत्याद्युपाधिर्विविधोपाधिभिस्सहैव समवापि,—तेऽपि समाचार-पत्रेषु—'आवश्यकता'—शीर्षकमन्विष्य प्रार्थना-पत्रेषु सप्रश्रयमात्मानं 'योर मोस्ट ओवेडिएन्ट सर्वेन्ट, ( your most obedient servent ) इत्युद्घोषयन्त एव दरीदृश्यन्ते। किमधिकम्? ते कार्यालयानां विकटकपाटौ खटखटायन्तः श्रान्तिं प्राप्यापि न शान्तिं प्राप्नुवन्ति। यतो हि परितो 'नो वेकैंसी' 'नीड् नोट' इत्यादि हृदयोत्पाटन-पटुः कर्ण-कटुर्ध्वनिरेवाभिमुखमापतति।

एवंविधदयनीयदशायां, करुणाकरपरिस्थितौ च पूर्णतो निराशा-कुहकाच्छन्नाः किमु ते वराकाः कुर्वन्तु?—इति गभीरविचारणा—परायणाः पाठका एव निर्णेतारः। यतो हि—शारीरिकश्रमस्तु तैः कर्तुमेव न प्रभूयते इति दूरे तावदास्तां श्रम-साध्य-कृषि-कौसलादेश्चर्चा। सर्व—प्रथमं द्रविणापेक्षी वाणिज्य-व्यवसायश्च "सर्वारम्भास्तण्डुल—प्रस्थमूलाः' इत्याद्याभाणकं सर्वथा चरितार्थं निर्मिमाणो दृश्यते। इत्यतो नाऽत्रापि तेषां गतिप्रसृतिः। आवश्यकताश्चतेषां सामयिकशिक्षा-दीक्षितत्वेन महतीं समुन्नतिमधिगताः। यद्यपि महान् व्ययभारस्तेषां शिरसि समारूढो निभाल्यते, किन्तु न सभ्यता-साधनेषु न्यूनं भवति।

एवं सभ्यता-विलास-प्रकाशेनैव भारते साम्प्रतमुन्माद-रजनि-जनिरजनि। काष्ठ-पीठिका (टेविल) स्थितकाच-पात्राणि (तस्तरी) विना तदीयं भोजनमेव न रुचिकरम्भवति। हैट, कोट, पैंटलूनादिकं विना न तेषां वेश—विन्यासः प्रकाशितस्स्यात्। उपनयनं विना तु न पादमप्येकं प्रचलितुं प्रभवन्ति। 'सीग्रेट' पानमपि तेषां नित्यं नैमित्तिकं कर्म भवति। केवलं 'सीग्रेट' विक्रयण एव बहवो वैदशिका धन-कुवेरा जाता इति स्वतः प्रमिएवन्तु प्रवीणाः पाठका यत् कियान् धन-राशिरेवं विलीयते।

मन्ये सीग्रेटं पिवन्तस्तु 'ग्रेट सी' (Great sea)* पायिनं मुनिमगस्त्यमपि लज्जा—निमज्जितं कर्तुं प्रयतन्ते। अपिच को न सामयिक-सभ्यता-परिचितस्सम्प्रति दैवस्याभिशापमिव कुन्तल-कलापं शिरसि न वहति? को न वा तत्प्रसाधनाय साबुन-तैल-कङ्कतिका-क्रमणे द्रविणं तृणाय मन्यते। हन्त! नैतावतैव व्यय-वंहिमा वर्णयितुं शक्यते, अपितु प्रायशो बहवो भारतीयाश्शिक्षिता अशिक्षिताश्च मद्य—पानेऽपि सद्यो धनं निश्शेषयन्ति। सायमशनीयन्तः पार्श्वपरिवर्तनेन

ल्पाः क्षपयन्तोऽपि मद्यपानमेव कामयन्ते। केन चित् कविनोक्तम्

'दो चार आने रोज के भी जो कुली मजदूर हैं
संध्या समय वे भी नशे में दीखपड़ते चूर हैं ॥
मर जाँय चाहे बाल बच्चे भूख के मारे सभी
पर छोड़ सकते हैं नहीं इस दुर्व्यसन को वे कभी॥

किं बहुना! इत्येते दुर्व्यसन-ग्रस्ता उदर-दरी-पूरण-समस्यामपि पूरयितुं न न प्रभवन्ति। 'मुद्गसाहचर्येण घुणोऽपि विनाशमुपासामास, इति लोकोक्तिमनुसरन्तो बहवो निर्धना दूरीकृत दुर्व्यसना अपि शिक्षिता निष्क्रियावशेन 'हा कार्यम्! हा अन्तम्' हा अन्तम्' इति प्रलपन्तः परां दुर्दशां दिशन्ति। किन्तु कः शृणोतु? पण्डितास्तु पण्डां विहाय कूप-मण्डूकतानुशीलनाय देश-दशाज्ञानावापं पापं मन्वते। वित्त-वित्ताश्च नान्य-वृत्ते चित्तं निदधति। नेतारस्तु स्वत एव दुर्णीतिपथनेतारः। राज्य-सचिवाश्चैतत् श्रोतुं न समयमयन्ते। एवं निष्क्रियाःपाश-पतितास्ते दुष्कर्मण्येव शर्म चिन्तयेयुश्चेत् किमाश्चर्यम्?

यदा राजभाषाध्ययन-प्रवृत्तानामपीदं वृत्तम्, तदा का चर्चा सरलानां संस्कृत-प्रणायिनाम्। तेऽपि महतीं दुर्दशां प्रदर्शयन्ति! अद्यावधि बी. ए. एम, ए० महोदयास्तु बहवो धनिकोपानत्परिष्कार परायणाः श्रुताः, किन्तु सम्प्रति संस्कृतज्ञानामपि व्यथा-कथाः कर्णाभ्यर्णमापतन्ति।

साम्प्रतमेव न्यशमि—यत्केचन मत्परिचिताः सज्जनाः प्राप्तव्याकरण-साहित्य-शास्त्रि-पदवीकाः कुत्रचनाऽऽङ्लपाठशालायां (High school) संस्कृताध्यापक-पदं प्राप्तकामास्तदर्थं विनय-पत्रं प्रेषितवन्तः। अधिकारिभिरादिष्टे च समये परिचय-प्रदानाय तत्र गन्तुं समुद्यता अभवन्। आंग्ल पाठशाला तु शास्त्रिणां निवास-स्थानात् गव्यूतिद्वय-परिमितमन्तरमावहतिस्म। इत्यतः शास्त्रिमहोदया यथा कथंचित् कृतभोजना एव तत्र गन्तुमनस आसन्। यदा च सूर्यो मध्येव्योम प्रकाशामास, तदैव तैस्तीव्रतरातपमप्युपेक्ष्य यातुं प्राक्रमि। किन्तु मरुदेशीय-तप्त-सिकता-प्रदेशे परिसरणव्यथां भुक्त—भोगिन एव जानन्ति। तद् वर्णने न वाचः प्रसरन्ति, न वा लेखने लेखनी प्रभवति। 'वस्तुतो रविरपि न ताद्दग्दहति' इत्याद्याभाणको मरुभूमावेव स्फुटं सत्यतामाश्रयन्निभाल्यते। अस्तु, शास्त्रिमहोदया यदा स्वाभिमतप्रदेशमशिश्रियन्, तदा स्विन्नचीवराः क्लिन्नकलेवराश्चासन्, चित्तमपि चिरं खिन्नताया शरणं प्रपन्नमभवत्, तथापि शास्त्रि-महोदयास्तत्साहसित्वं वावहन्तस्तदैवाधिकारिणां सेवायां समुपस्थिता अभूवन्। अधिकारिणश्च तदीयं विशीर्णमुत्तरीयम्, विश्रान्तिशरणौ धूलि धूसरौ चरणौ विविधाशान्तिसदनं वदनम्, अवशिष्टप्राणमात्रं गात्रं च गम्भीरस्पृशा-दृशा कौतुकनोदिता पिपृच्छिषितं साकूतं शीप्सन्तिस्म। शास्त्रिमहोदया अपि निज-गृहदशा वर्णनपूर्वकं स्थानप्राप्त्यै विशेषमभिनिवेशं प्रादर्शयन्।

ततो विरक्ता अधिकारिणा उन्मत्त—प्रलपितमिव तल्पितं मन्यमानः 'किञ्चिद् बहिः स्थीयताम्' इत्युक्त्वा निज—कार्या—परायणा अभूवन्। शास्त्रिणः कर्तव्य-विमूढा इव बहिरस्थिषत। किन्तु तदीयमनः प्रबलतरमुद्वेलितमासीत्। सार्द्धेऽपि व्यतीते प्रहरेऽधिकारिणां 'किञ्चित्' नावधिमाप।

* महा-सागरः।

# * सूक्ति-सुधा *



निर्म्माता-साहित्यधुरीणः पं० श्रीमहावीरप्रसाद जोशी काव्यतीर्थः



( १ )

सद्यः सूक्तिसुधाकरे कुवलयानन्द-प्रदानोद्यतं
सन्तोषं तनुयादलं न जलजव्रातस्तु चेत्का क्षतिः ॥
गाङ्गं चङ्ग-तरङ्ग-भङ्गि-वलितं पीयूष-कल्पं पयो
निन्दन्त्येव सपङ्क-पल्वलजलाकृष्टा वराहा भृशम् ॥

( २ )

कस्तूरीकृत-भावनोऽपि सुरभिस्स्यात्किं पलाण्डुः क्वचित् ?
षण्ढो वा सुरकामिनी-सहचरोऽप्यानन्दमातन्वते ??
भेको मान-सरोगतोऽपि नलिनी-मुग्धश्च जायेत किम् ?
शब्दज्ञः कविता-प्रियोऽपि सरस-स्वान्तः कथं संभवेत् ??

( ३ )

मृद्वीका-मृदुतामवैत्तुमधमः किं पारयेद्वायसः ?
जायेत प्रिय ! नारिकेल-रसने श्वा पारदश्वा कथम् ??
अन्धो वाप्यभिरूप-रूप-रचना-रागं कथं धारयेत् ?
आजिघ्रेत् कविता-कला-कमलिनीं शब्दज्ञ-भेकोऽपि किम् ॥

---

समय-प्रतीक्षण-खिन्न-मनसाः शास्त्रि-महोदयाः किमप्यस्फुटं कोपमन्तर्वहन्तः पुनरधिकारिणां पार्श्वमाशिश्रियन्। अधिकारिभिः क्षणमक्षि निक्षिप्य सभ्रूविक्षेपमुदैरि "किमपि पुनः स्थीयताम्" शास्त्रिभिः प्रत्यपादि—" यदपि किंचिद्वक्तव्यं तदधुनैव वक्तव्यम् वेला साम्प्रतमत्येति।" साटोपमधिकारिणोऽपि व्याजह्रुः—"एवम् ! अस्तु, श्रीमन्तः सभ्यसमाजे शब्दमात्रमपि न वक्तुं शक्तास्तदा का चर्चा हाईस्कूलाध्यापन योग्यतायाः? अतो वयं श्रीमन्तं नियोक्तुं न प्रभवः" इत्यभिधाय पुनस्स्वकार्य-परा अभवन्। शास्त्रिणोऽपि त्वरां व्यग्रतां च विन्दयन्तो गृहमगच्छन्निति।

( ४ )

काल-व्याल--कराळ-काल-वदने पीयूष-कोषो भवेत्,
भव्याकाश-विकाशि-काश-कुसुमे सद्गन्ध-बन्धोऽपि वा ।
स्याद्वा लोचन-गोचरोऽपि शशकः प्रोत्तुङ्गशृङ्गान्वितः,
किन्तु क्षन्तुमिह प्रभुर्न सुकवेः कीर्तिं जनो निन्दकः ॥

( ५ )

हंसो मानसमुग्ध-मानस-तट-स्निग्धो न गंगातटे
हर्षं हीरक—पञ्जरे न मनुते कीरो निकुञ्जे वसन् ॥
पञ्चास्योऽपि न काञ्चनाञ्चितगृहे मोमोत्ति शैलं श्रितः
नाहं प्रीति—परः पुरन्दर—पुरे देशं गतो भारतम् ॥

( ६ )

स्वच्छन्दं विचरेः शश-प्रिय-शिशो ! शङ्का किमङ्के धृता ?
भीतः किं पृथु-वेपथुं प्रथयसि त्वं कृष्ण-साराभर्क !
'चाटुं' मा कपटे पटो वृक ! कृथा लक्ष्यं न मे त्वत्कुलम् ,
पश्यन्त्वद्य मतंगजा मदकलाः शार्दूल-विक्रीड़ितम् ॥

( ७ )

स्निग्धं दुग्धमलं विमुग्धभुवनं स्याद्भोगिभोगे विषम्
लोकालोक-करो विलोकन-हरो जातो रविः कौशिके ॥
विख्यातः कुसुमाकरस्त्रिभुवने जाती-रिपुर्जायते,
स्यादाधारवशाद् ध्रुवं क्षितितले भूषाऽपि दोषाकरः ॥



## सर्वतन्त्रस्वतंत्र-षडदर्शनाचार्य्य-पण्डितराज-श्रीपद्मनाभशास्त्रिभ्यः

# सम्मानपत्रप्रदानम्



श्री १०००८ श्रीमज्जगद्गुरूणां श्रीवैष्णवाचार्य्याणां प्रतिवादिभयङ्कराणां श्रीअनन्ताचार्य्यस्वामिनां सभापतित्वे सनातनधर्मावलम्बिनां हिन्दूनां परिषदेका श्रीवेङ्कटेशभगवतो भव्यमन्दिरे भाद्रपदकृष्णनवम्यां प्रकाण्डपण्डितेभ्यः श्रीपद्मनाभ शास्त्रिभ्यः सम्मानपत्रप्रदानार्थं मोहमय्यां समजनि। परिषद्यस्यां माननीयाः पं० श्रीरमापति मिश्राः; रायबहादुर श्रीपरांडे न्यायाधीशाः; विल्सनकॉलेज प्रोफेसर श्रीभार्गवशास्त्रिणः; श्री वीरशंकरशास्त्रिणः व्याकरण-साहित्याचार्य्याः; पं. श्री मुनिचन्द्रजी न्यायाचार्य्याः; पं. श्रीनिरीक्षणपति व्याकरणाचार्य्याः; पं. श्रीआशुतोषभट्टाचार्य्य न्यायाचार्य्याः, श्री मनुभाई चन्द्रविद्यानन्द पण्ड्या M., A. L. L. B. सोलिसिटर; श्रीमगनलाल खख्खर J. P. पू० अच्युताश्रम स्वामिनः; श्रीमोतीराम कल्याणजी शास्त्रिणः विद्यासागराः। व्या० वा० श्रीधनंजय-मुरारिपांधि महाशयः; सनातनधर्ममार्तण्ड--धर्मशास्त्राचार्य्य-तर्कालंकार-श्रीरेवाशंकरमेघजीपुरोहितशास्त्रिणः, अन्ये च विद्वांसः सद्गृहस्थाश्च समुपस्थिता आसन्।

काशीस्थ-संस्कृत-साहित्यसमाज—परिव्राजकमहामण्डल—श्रीभारतधर्ममहामण्डल-राजकोट-जामनगर-प्रभृति धर्मसंस्थानेभ्यः हर्षानुभूतिसूचकतापत्राण्यपि बहूनि समागतान्यासन्।

चिराय सनातनधर्मकार्ये संलग्नानां सर्वदर्शनशास्त्रप्राविण्यवतां, त्यागेनैकेनामृतत्वमानशुरिति वचनानुसारं सर्वस्वव्यवहारमपहाय धर्मरक्षामेव स्वकर्तव्यं मन्यमानानां पण्डितराज श्रीपद्मनाभ शास्त्रिणां विविधधर्मकार्यदक्षतादर्शकाणि विद्वद्व्याख्यानान्यभूवन्।

संहतिः कार्यसाधिकेतिनयेन सर्वैरेकत्रीभूयोपस्थितानां धर्मापत्तीनां प्रतिकारोऽवश्यं विधातव्य ईदृशानां च धर्मसेवकानां स्वकार्यदार्ढ्यार्थं समेधनीयः समुत्साहः सम्मानपत्रप्रदानादिकेन विधिनेति सर्वेषां व्याख्यानानां सारांशः।

अन्वर्थस्वनामभिः प्रतिवादिभयंकरैः श्रीअनन्ताचार्यवर्यैस्त्विदं प्रतिपादितं यदस्माभिर्न केवलं मानपत्रप्रदानमेव कर्तव्यं स्वीकर्तव्यं-किन्तु-एषां धर्मकिङ्कराणां कार्यमार्गे साहाय्यमपि प्रदायसदनुकरणमपि विधातव्यमिति।

मोहमयीस्थाः प्रायः सर्वेऽपि विद्वांसः समुपस्थिता आसन्नस्यां परिषदि।

यत्सम्मानपत्रं वितीर्णं तदस्मिन् पत्रे मुद्रितम्।

ॐ

ब्राह्मणस्य च देहोऽयं क्षुद्रकामाय नेष्यते ।
कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ॥

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि

# ॥ सम्मानपत्रम् ॥

## श्रीमन्तः सर्वतन्त्रापरतन्त्राः षड्दर्शनाचार्या वाराणसेयाः पण्डितराजश्रीपद्मनाभशास्त्रिणः

मोहमयीस्थानां विदुषां सद्गृहस्थानां च परिषदियं श्रीमतां गुणगणमहिम्ना संतुष्टा सम्मानपत्रेणार्चनं विधत्ते स्वीकरणीयं श्रीमद्भिः स्नेहसम्मानमिदम् ।

चतुर्दशविद्यास्थाननिकषरूपायां शिवरूपनिलीनम-हामहोपाध्यायशिवकुमारमिश्रादिकाशीस्थविदुषां परिषदि दर्शनशास्त्रतत्त्वपर्यालोचनावसरे संततधारं शास्त्रतत्त्वनिरूपणेनानेकवारं धन्यवादेन प्रोत्साहितास्तत्रस्थविद्वद्भिर्लब्धप्रतिष्ठाश्च काशिकविद्वत्सभास्ववश्यं सम्मानार्हा भवन्त इति वितीर्यते सम्मानपत्रमिदम् ।

अत्रभवन्तः पूर्वं हिन्दुकालेजाभिधे महाविद्यालये ततो विश्वविद्यालये च दर्शनशास्त्राध्यापकपदे परमगौरवकारणे विराजमाना आसन् । परं तत्र किंचिदिव धर्ममर्यादातिक्रमं दृष्ट्वार्थं तृणाय मत्वा परित्यक्तं श्रीमद्भिस्तत्पदमिति त्यागेन विद्यया च पूर्वतोऽप्यधिकतरं गौरवपदमारूढा भवन्त इति मन्यते परिषदियम् ।

हिन्दुकालेजाध्यापकपदपरित्यागसमकालमेव सनातनधर्मप्रचारकार्ये संलग्ना भवन्तोऽनेकवारं भारतीयप्रान्तेषु भ्रामं भ्रामं व्याख्यानप्रवचनाभ्यां भ्रान्तभारततरुणतदनुयायिनां कुशंकानिरसनेन च धर्मपथादपयान्तीं जनतामपवारयन्तस्तथासंपादितं धार्मिकसेवाकृत्यं तत्तत्प्रान्तेषु यथा क्रियावद्विद्वद्गणनाप्रस्तावे श्रीमतां नामधेयं स्मर्यते सज्जनैः ।

वर्णाश्रमस्वराज्यसंघस्य प्रस्थापनानन्तरं तस्य कार्येषु बद्धपरिकरा भवन्तोऽविगणय्य प्रवासादिक्लेशान् विधाय च स्वकीयार्थस्यैव व्ययं निद्रादिसौख्यमप्यवधूय पंचनदयुक्तप्रान्तगुर्जरवंगादिदेशेष्वाटमाटं सघीयोद्देश्यप्रचारं कृतवन्तो भवन्त इति तु प्रथितमेव भावत्कमुज्ज्वलं यशः सर्वत्र इति तद्विषये न किंचिद्वक्तव्यमवशिष्यते ।

अत्र भवद्भिर्हरद्वारकुंभसंमेलने, उज्जयिन्यामिन्दोरराजधान्यां च "न दैन्यं न पलानम्" इति स्वसिद्धान्तमनुसृत्य धर्मप्रचारं कुर्वद्भिर्बन्धनादिकष्टजातं राजपुरुषैर्दीयमानमप्यनुभूय प्रान्ते च मानपुरःसरं तैरेव निर्मुक्ताः परिभाव्य नास्तिकवृन्दं विशिष्टप्रकारेण धार्मिकप्रचारकृत्यं संपादितं येनाहितानामपि स्वान्तेषु बलादादरं दरंश्च स्थापयामासुः ।

श्री १००८ मद्भिः शारदापीठाधिश्वरजगद्गुरुमाधवतीर्थशंकराचार्यचरणैरत्रभवतां भवतां दर्शनशास्त्रप्रावीण्यं प्रतिभानुगतं वक्तृत्वं धर्मकार्यधुरंधरत्वं च सम्यगनुभूय यथासमयं "सर्वतन्त्रस्वतन्त्रः षड्दर्शनाचार्यः पंडितराजः" इत्यास्पदत्रयसंप्रदानेन पूर्वं संमानिता भवन्तः, संप्रति श्रीवैष्णवाचार्यवर्यैर्विश्वविदितपांडित्यैरन्वर्थप्रतिवादिभयंकरपादैः श्री१००८ जगद्गुरुभिरनन्ताचार्यमहाराजैरपि संमान्यन्ते—इत्यतः परं किं स्यात्परमामोदस्थानं परिषदोऽस्या इति शम् ।

१९९१ वैक्रमेऽब्दे भाद्रपदकृष्णनवम्यामेनिवासरयुतायां श्रीवेंकटेशभगवतो भव्यमन्दिरे वितीर्णम् ।

# संस्कृत-समाचाराः

## संस्कृत साहित्य-समाजस्य विशिष्ट-मधिवेशनम् ।

संस्कृत-साहित्य-समाज-भवने सायं ७ वादने समाजस्य विशिष्टमधिवेशनं महता समारम्भेण सम्पन्नम् । महामहोपाध्यायाः पण्डितप्रवर-फणिभूषणतर्कवागीशमहोदयाः सभापतिपदं समलं कृतवन्तः ।

समुपस्थितेषु विद्वत्सु महामहोपाध्यायाः श्रीमुकुन्दझावख्शीमहोदयाः, श्रीकमलकृष्णभट्टाचार्याः, श्रीहाराणचन्द्रभट्टाचार्याः, श्रीहरिनाथशास्त्रिणो दर्शनाचार्याः, श्रीसत्यनारायणशास्त्रिणो भिषक्शिरोमणयः, श्रीगोपालशास्त्रिणो दर्शनकेशरिणः, श्रीतारादत्तपन्ताः साहित्याचार्याः, श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः, श्रीदेवीनारायण एडवोकेटमहाशयाः, श्रीदुर्गादत्तशास्त्रिणः आयुर्वेदाचार्याः, अन्ये महान्तो विद्वाँसश्छात्राश्च समुपस्थिता आसन् ।

मङ्गलानन्तरं कलिकान्तास्थ-भिषक्चूडामणिभ्यस्तर्क—व्याकरणादितीर्थेभ्यः श्रीमत्पण्डितप्रवरश्रीताराचरणचक्रवर्तिमहोदयेभ्यः सादरमभिनन्दनं प्रदत्तम् । तदनन्तरञ्च संस्कृतसाहित्यसमाजस्यान्यतम-सदस्यानां विद्याभूषण—सांख्य-सर्वदर्शनतीर्थ-श्रीदामोदरशास्त्रिभिषगाचार्य-महोदयानामायुर्विज्ञानविषये महत्वपूर्णं संस्कृतभाषणमभूत् ।

ततश्च पण्डितप्रवराणां हाराणचन्द्रमहोदयानां श्रीगोपालशास्त्रिणाञ्च भाषणानि समभवन् । अन्ते च सभाविसर्जनं सधन्यवादं सभापतिभाषणञ्च सञ्जातम् ।

## संस्कृत—साहित्य—समाजस्य विशिष्ट-मधिवेशनम् ।

कार्तिकशुक्लचतुर्दश्यां शनिवासरे [६-११-३५] सायं षड्वादने सुप्रसिद्धे मानमन्दिरे महता समारम्भेण सम्पन्नम् । अत्र पञ्चभूत—त्रिदोषादिपरिषदि सम्मिलितानां भारतप्रसिद्ध-विदुषां वैदिक-विज्ञान-महार्णवानां समीक्षा-चक्रवर्त्तिनां श्रीमन्मधुसूदनझा विद्यावाचस्पतिमहोदयानां शुभाभिनन्दनं तेषां वैदिकविज्ञानविषये भाषणञ्च प्रधानविषय आसीत् । पञ्चवादनादारभ्यैव संस्कृतच्छात्राणां महान् सम्मर्द आसीत् । यथासमयं पूर्वनिर्वाचिताः पण्डितसम्राजो भारतप्रसिद्धविद्वांसो महामहोपाध्यायाः श्रीमन्तः प्रमथनाथतर्कभूषण—भट्टाचार्य महोदयाः सभापतिपदं समलङ्कुर्वन् । समुपस्थितेषु काशीस्थप्रधानविद्वत्सु मीमांसाकेशरिणः श्री पं. चिन्नस्वामिशास्त्रिणः, षड्दर्शनाचार्याः श्री पं. बालबोधमिश्राः, रायबहादुर त्रिलोकनाथमिश्र महोदयाः, महामहोपाध्यायाः पं. मुकुन्दझावख्शीमहोदयाः, श्री पं० हाराणचन्द्रभट्टाचार्याः, श्री पं. दाऊजी दीक्षितदैवज्ञवाचस्पतिमहोदयाः, श्री पं. चन्द्रशेखरधरमिश्राः चिकित्सक-चूडामणयः; श्री पं. व्रजबिहारीझा महोदयाः, श्री पं. सत्यनारायण शास्त्रिणो भिषक्शिरोमणयः, श्री पं. सीतारामझा ज्यौतिषाचार्य-महोदयाः, श्रीपं. मदनमोहन शास्त्रिणः, श्री पं. दामोदर शास्त्रिणो भिषगाचार्याः, श्रीपं. पट्टा-

भिरामशास्त्रिणः श्री पं. विन्ध्येश्वरी प्रसादशास्त्रिणः, श्री पं. गोपालशास्त्रिणो दर्शनकेशरिणः श्री देवीनारायण एडवोकेट महोदयाः, श्री पं. तारादत्तपन्ताः साहित्याचार्याः, श्री पं. रामदेवद्विवेदाः व्याकरणाचार्याः, अन्ये च भूयांसो विद्वांसः समुपस्थिता आसन्। स्थानाभावात् बहवो विद्वांसस्तु परावृत्ताः।

सर्वप्रथमं सभापतिमहोदयानां प्रार्थनया श्री विद्यावाचस्पतिमहोदयैर्वैदिकविज्ञानविषये प्रवचनं समारब्धम्। यज्ञोपवीत-विज्ञान-विषये सार्द्ध-घण्टापर्यन्तं भाषणमभूत्। तदनन्तरञ्च सभापति महोदयानामाज्ञया मन्त्रिभिः शुभाभिनन्दनपत्रं पठितम्। तच्च सभापतिमहोदयैः सुललितभाषणेन सह सादरं सविनयञ्च झा-महोदयेभ्यः समुपायनीकृतम्।

अन्ते च सधन्यवादं सभाविसर्जनं रात्रौ नववादने समभूत्। घण्टाद्वयं यावत् व्याख्यानेऽपि जनतायाः सन्तोषो न समजनीति समाज-सदस्यानां महतानुरोधेन प्रार्थनया च द्वितीयदिने श्राद्धविषये व्याख्यानदानमुररीकृतम्।

द्वितीये च दिवसे महामहोपाध्यायानां श्रीमुकुन्दझा-बख्शी-महोदयानां सभापतित्वे पुनस्तत्रैव मानमन्दिरे सभा समभूत्।

सपादपञ्चवादने सुप्रभात-सम्पादकेन श्री केदारनाथशर्म्मणा प्रस्तुते विषये सभापतिप्रार्थितैर्विद्यावाचस्पतिमहोदयैः श्राद्धविषयेऽद्भुतं व्याख्यानं प्रादायि। होराद्वयं यावदद्यापि भाषणं समजनि। भाषणविषये किंवदामः ? अद्भुतमेवासीत्तेषां भाषणम्। तच्च स्वातन्त्र्येण प्रकाशितं स्यात्।

अन्ते च समाजमन्त्रिभिर्गोपालशास्त्रिभिः कृते धन्यवाद-भाषणे सभाविसर्जनं समभूत्।

श्रीमन्महामान्यानां जयपुर-राजसभा-प्रधानपण्डितानां
वैदिक-विज्ञानमहार्णवानां महामहोपदेशकानां
समीक्षाचक्रवर्त्तिनां
पण्डितराजश्रीमधुसूदनझा-विद्यावाचस्पतिमहोदयानां

# शुभाभिनन्दनम्।

अयि निखिलविद्यापयोधिपारङ्गताः !

साम्प्रतं सर्वतः समाप्लुतायामस्यां भारतावनौ, शनैः शनैः सङ्कोचमञ्चन्त्यां क्षीण-क्षीणायां भगवत्यां सुरभारत्याञ्च विलुलितायां श्रीमत्सदृशैरेव समर्थैः पण्डितप्रकाण्डैरस्या गौरवं सर्वथा समेधमानमालोक्यते। श्रीमतां गभीरतम-वैदुष्यविभूतितेयं गीर्वाणवाणी सम्प्रति करालेऽपि कलिकाले सर्वथा स्वात्मानं धन्यम्मन्यते।

श्रद्धेयाः !

सर्वाण्यप्याधुनिकान्याधिभौतिकविज्ञानप्रवर्तितानि चमत्कृतिजनकानि भौतिकरत्नानि सनातनवैदिक-विज्ञानस्य पुरत अकिञ्चित्कराणीति सर्वेषामेव समीक्षा-विचक्षणानां परीक्षकाणां पुरतः प्रकाश्य भारतीयं वैदिक-विज्ञान-गौरवं सर्वथा समेधयताम् वर्तमान-वैदेशिक-चाकचक्य-सञ्चार-विदूषितान्तःकरणेष्वपि नवशिक्षित-समाजेषु स्वीय-गभीर-गवेषण-प्रभावेण प्रसह्य भारतीयं ज्ञान-विज्ञान-गौरवमासजतां विविधानुसन्धानैः सुरभारतीभाण्डागारं प्रवर्द्धयतां सनातन-वैदिक-धर्मस्य ज्ञान-विज्ञानस्य च सर्वोन्नतं निगूढतत्त्व-महिमानं गवेषयितुं प्रचारयितुञ्च बद्ध-परिकराणां

श्रीमतामदम्योत्साहं विलोक्य सर्वे काशीस्था अपि विद्वांसश्चकितचकिताः, प्रमोदमानमानसाः सन्तस्तत्रभवतां शुभाभिनन्दनं विधातुं सर्वथा सन्नद्धाः सन्तिष्ठन्ते।

अयि आर्य्याः!

श्रीमतां सुरगवी-गगन-चङ्क्रमण-चन्द्रमसां सारस्वत-वैभवम्, वाग्वैदग्ध्यम्, गुण-गौरवम्, प्रतिपादन-सरणिम्, भाषण-पाटवम्, गभीरतमं वैदिकविज्ञानगवेषणम्, सरस-सरसं मधुर-मधुरं वचनामृतञ्च समाचामतां श्रोतृचकोराणां पुरतः प्रस्फुटमेव प्रकाशते।

किम्बहुना, श्रीमत्सदृशानामेव विदुषां प्रचण्ड-पाण्डित्यगौरवेण सम्प्रति भारतभूरियं काशी-स्था विद्वन्मण्डली चात्मानं बहुमन्यमाना सर्व-स्मिन् विषये स्वात्मानं गौरवास्पदं मन्यते।

इत्येवं सर्वतोऽपि प्रसिद्ध-प्रकाण्ड-पाण्डि-त्यानां सनातनधर्म-मर्यादा-संरक्षण-बद्धपरिकराणां वैदिकविज्ञानानुसन्धान-सन्नद्धानां श्रीमतां शुभं स्वागतं विदधदयं काशीस्थः सुरस्वती-सेवन-सन्नद्ध-परिकरो विद्वत्प्रतिनिधिस्वरूपः संस्कृत-साहित्य-समाजः,

'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति' इति श्री मद्भगवदनुशासनं स्मारं स्मारं श्रीमत्कर-कमले-इदं शुभाभिनन्दन-पत्रं समर्पयति, आशास्ते च यच्छ्रीमन्तोऽपि उपर्य्युक्तपद्यस्योत्तरार्द्धं संस्मर-न्तोऽवश्यमिदं 'प्रदीप्त-किरणाय सहस्रभानवे' दीप-प्रदानवदकिञ्चित्करमपि स्वीकृत्येमं विद्वत्-समाज-मनुग्रहीष्यन्तीति।

## संस्कृतरत्नाकरस्य वैदिकोऽङ्कः

विद्यावाचस्पति श्रीमधुसूदनझामहाभागानाम्

### अभिनन्दनरूपः।

( ३० सितम्बर १९३५ पर्यन्तं सं० रत्नाकरतृतीयाब्दमूल्यं प्रेषितवद्भिर्विना मूल्यं लभ्यः )

मान्यमहानुभावाः,

वैदिकवाङ्मयस्य विशिष्टविदुषां समर्थसमीक्षकाणां मार्मिकगवेषकाणां च जयपुरराजसभाप्रधानपण्डित-विद्यावाच-स्पतिश्रीमधुसूदनशर्ममहाभागानां शुभमभिधानं प्रायः परि-चितं स्याद् भवतामिति संभाव्यते। महाभागैरेभिरासन्नच-त्वारिंशैर्वर्षैरनवरतं परिश्रम्य वैदिकविज्ञानस्य तत्तासां ग्रन्थीनां शिथिलीकाराय फलेग्रहिः प्रयत्नोऽनुष्ठितः, यासां सङ्गतिप्रदर्शनमपि कठिनमासीत् किं पुनर्यथार्थबोधः। अनेकशताब्दीभ्यो लुप्तस्यास्य ज्ञानस्य प्रकाशने विवेचने च महाभागैरेभिस्तथा परिश्रान्तं यथा कार्यमिदमागामिन्याः सन्ततेः पथप्रदर्शकतामुपेयादित्यस्मिन् विषये तदीयकार्य-परिपाटीपरिचितानान्तु संशयलेशोऽपि नोदियादेव।

सौभाग्यमिदं यदिदानीं भाद्रपदेमास्येव ( अगस्त १९३५ ) महाभागा इमे स्वायुषः सप्ततितमे वत्सरे पदार्पणं विधास्यन्ति। वयमध्यवस्यामो यद् यथान्येषां साहित्यसे-विनां कतिपयमहानुभावानामेतदवस्थाप्राप्तावभिनन्दनमनु-ष्ठीयते, तथैव महाभागानामेषामप्यभिनन्दनं विधीयेत इति

एतदर्थं जयपुरे समायोजितैका समितिः। तया समार-ब्धं कार्यम्। समय—कार्यक्रमादिस्थिरीकरणाय वैदेशिकैरपि विशिष्टैर्विद्वद्भिः साकं पत्रव्यवहारो विधीयते। बहुनुमत समयः कार्यक्रमश्चानुपदमेव यथा स्थिरीभविष्यति तथाग्रे पाठकमहाभागानां पुरो निवेदयिष्यामः। इदन्तु स्थिरीभूतं यदस्मिन्नभिनन्दनावसरे संस्कृतरत्नाकरस्य विशेषाङ्को "वैदिकाङ्क" नाम्ना प्रकाश्येत, तदेतदतीतयोरपि संख्ययोः

संक्षेपेण प्राचीकशाम । योऽयमतीतेऽब्दे "आयुर्वेदाङ्कः" पाठकमहाभागैरवलोकितस्तादृश एव, ततोऽपि विशिष्टो वा वैदिकाङ्कः प्रकाश्येतेति विश्वसिमो जगदीश्वरानुग्रहेण। प्राथमिकमस्माकं विशेषाङ्ककार्यप्रकाशनमासीदिति तत्सम्पादने शोधने मुद्रणसौष्ठवे च काश्चित्त्रुटयः समपद्यन्त। इदानीं प्राप्तानुभवास्तादृशत्रुटीनां शरव्यभूता न भवेम इति संभाव्यते। वैदिकाङ्केऽस्मिन् विशेषतः परीक्ष्य योग्यानामेव लेखानां संग्रहः संपाद्येत! अत्र पञ्चविंशतेरन्यूनानि चित्राणि प्रकाश्येरन्, तत्र कानिचिदनेकरङ्गरञ्जितान्यपि कर्त्तुं प्रयत्स्येत, संभूय च पृष्ठानां शतकद्वयादन्यूनाकारः संपादयितुमिष्यते। लेखार्थमधस्तात्प्रकाश्यते विषयसूचिः। एषु विषयेषु, स्वेच्छयाभिरुचिते कस्मिँश्चिदीदृश्येव महत्त्वास्पदेऽतिरिक्तेऽपि वा विषये नातिविस्तृतः प्रौढो लेख इतो मासद्वयाभ्यन्तरे विद्वन्महाभागैः संप्रेष्यः।

## विषय-सूचि—

१ वेदानां सर्वागमप्रभवत्वम्। २ वेदानामपौरुषेयत्वम् ३ मन्त्रब्राह्मणयोर्वेदनामधेयम्। ४ महर्षीणां मन्त्रद्रष्टृत्वम्। ५ वेदेषु विज्ञानम् ६ वैदिकं सृष्टिविज्ञानम् । ७ वैदिकमध्यात्मविज्ञानम्। ८ वैदिकं ब्रह्मविज्ञानम्। ९ वैदिकं अवतारादिविज्ञानम्। १० ऋषिस्वरूपनिरूपणम्। ११ वेदेषु पितृनिरूपम्। १२ वैदिक्यो देवताः। १३ वेदेष्वनेकाभिप्रायका यन्त्राः। १४ पुराणेतिहासानां वेदोपबृंहकत्वम्। १५ वैदिकपौराणिकसृष्टिप्रक्रिययोरैकमत्यम्। १६ पौराणिकोपाख्यानेषु वैदिकतत्त्वरक्षा। १७ वेदेषु भूगोलविज्ञानम्। १८ वेदेष्वितिहासाः। १९ यज्ञानां वैज्ञानिकत्वम्। २० वेदेषु बर्बरप्रथा वर्णनारोपस्तन्निराकरणं च। २१ वेदेष्वभिचारादितान्त्रिककर्माणि। २२ वेदेषु ज्यौतिषम् (गणितं फलितं च)। २३ बृहद्देवताविमर्शः २४ दर्शनानां वेदमूलकत्वम् २५ वैदिकशिक्षायाः सर्वोत्कृष्टत्वम्। २६ वेदानां सर्वमान्यत्वे हेतुः। २७ वैदिकी आत्मतत्वप्रतिपादनपद्धतिः २८ वैदिकी ब्रह्मतत्वप्रतिपादनपद्धतिः। २९ सांप्रदायिकाचार्याणां वेदपरता। ३० सांप्रदायिकोपासनपद्धतेर्वेदमूलत्वम् ३१। वेदार्थनिरूपणशैली। ३२ वेदेषु राज्यशासनपद्धतिः ३३ वैदिका आचारव्यवहाराः। ३४ वैदिकस्य विज्ञानस्य क्रमेण ह्रासः। ३५ अस्मिन् युगे वैदिकप्रक्रियोद्धारका विद्वांसः (अस्मिन् विषये तत्तेषां स्वपरिचितानां विदुषां चित्राण्यपि प्रेषयितुं कृपया विधेयः प्रयत्नः)। ३६ वेदाः पाश्चात्यविद्वांसश्च।

सर्वमिदमायोजनमस्मदनुग्राहकाणामनुग्रह एवायत्तमिति नैतद्विशेषतो विचरीतुमावश्यकम्। योग्यानां विदुषां प्रौढा लेखाश्चैतेत्समये न लभ्येरन् किमस्माभिस्तर्हि क्रियताम्! आर्थिकी स्थितिश्च संस्कृतपत्राणां कीदृशीति नैतत्परोक्षं विद्वन्महाभागानाम्।

विशेषाङ्कायोजनमिदं यद्रत्नाकरेणोपक्रान्तम् न तद्विशेषसाहाय्यमन्तरेण पारयितुं सुशकम्। आयुर्वेदाङ्कप्रकाशने वैद्यमहाभागैः प्रचुरमर्थसाहाय्यं दत्तम् इदानीन्तु वैदिकाङ्के के वैदिकाभिमानिनो वैदिकप्रणयिनो वा कीदृशं साहाय्यं विदधतीति द्रष्टुमिच्छामः। ये विद्वांसः स्वयमर्थसाहाय्यं कर्तुं शक्नुवन्ति ये वा वेदप्रणयिधनिजनद्वारेण साहाय्यं कारयितुं शक्नुवन्ति तैस्त्वर्यतां कृपया। समये लब्धमेव साहाय्यं फलाय कल्पत इति। जाग्रत्स्वपि सकले भारते वैदिकाभिमानिषु वेदाङ्को यदि न यथाभिरुचितं सज्जीकर्तुं शक्येत सुमहांस्तर्हि कलङ्कभारोऽयं वैदिकाभिमानिनां शिरसीति मुहुर्मुहुर्विमृश्यताम्।

निवेदकः

**गिरिधर शर्म्मा चतुर्वेदी**

(महामहोपाध्यायः)

प्रकाशकः— संस्कृत-रत्नाकरस्य, जयपुरम्।

# काशी-पण्डित मण्डली-घोषणापत्रम् ।

## प्रथमा घोषणा

वयं काशीस्था विद्वांसो डाक्टर अम्बेडकरस्य हिन्दूधर्म-परित्याग-सूचनामाकलय्य भृशं क्षुभिताः समुद्विग्नाश्च "हिन्दूधर्मे नास्त्यस्माकं स्थान" मिति तदीयां धारणामज्ञानमूलिकां भ्रान्तिपूर्णाञ्चावगच्छन्तः समुद्घोषयामः—

यदयं हिन्दूधर्मो व्यापकधर्म्मः । अत्रहि मूलसिद्धान्ताऽविरोधिनो बहवः साम्प्रदायिकाः सन्ति, ते च सर्वेऽप्यस्माभिः सह तस्य तदनुयायिनाञ्च सादरं स्वागतं विधातुं सन्नद्धाः सन्तिष्ठन्ते । तेषां हिन्दूधर्म-परित्यागेन कतिपयव्यक्तीनां तात्कालिको लाभो भवेन्न वा, परन्तु स्ववंश-परम्परागते हिन्दूधर्मे सुदृढ़ं विश्वासं विदधतां कोटिशो हरिजनानां कल्याणं कदापि न भविष्यति । अतस्तैस्तदनुयायिभिश्च सधैर्य्यं सविवेकञ्च—

येनास्य पितरो याताः येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्नरिष्यति ॥

इति मानवीय-वचनानुसारं स्वीयं पित्र्यं धर्म्ममपरित्यजद्भिर्भारतीय-प्राचीनार्यसंस्कृति सम्बन्धविच्छेदः स्वप्नेऽपि नाभिलषणीयः ।

हिन्दूधर्मे समवतिष्ठमानानामेव तेषां विकाशः, लौकिकी समुन्नतिः, कल्याणञ्च स्यात् । तैस्तदनुगैश्च सर्वथा सर्वदा च संस्मरणीयम् ।

"श्रेयान् स्वधर्म्मो विगुणः परधर्मात् स्वनुष्ठितात् ।"
"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥"

## द्वितीया घोषणा—

अद्यत्वे ये केचन 'हरिजन' शब्द-सम्बोध्या हिन्दवः सन्ति, ते हिन्दूधर्म-संरक्षण-मर्यादया यवन ख्रिष्टप्रभृति समाजतः सर्वथा अभ्यर्हिता अवगन्तव्याः । अतश्च ते सर्वत्रैव सार्वजनिक-सामाजिके व्यवहारे अन्येभ्योऽधिक-सौकर्य्य—प्रदानतया नूनं समनुगृहेलिमा इति ।

सर्वतन्त्रापरतन्त्रो मध्वसम्प्रदायाचार्यः,
दार्शनिकसार्वभौमगोस्वामि
दामोदरलाल शास्त्री
बालकृष्णशास्त्री

पण्डित सम्राट महामहोपाध्याय
प्रमथनाथतर्कभूषण भट्टाचार्यः
महामहोपाध्याय पण्डितरत्न मुकुन्द झा बख्शी
सभापतिः—काशीपण्डित सभा

काशीनाथशास्त्री सर्वतन्त्रस्वतन्त्रः,
मदनमोहन शास्त्री
ताराचरण भट्टाचार्यः
सत्यनारायण शास्त्री भिषक्‌शिरोमणिः
वामाचरण भट्टाचार्यः
तारादत्त पन्तः (सम्पादक-'वल्लरी') मन्त्री—काशी—पण्डित—मण्डली
गोपालशास्त्री दर्शनकेशरी, मन्त्री—सं० सा० स०
दामोदरशास्त्री भिषगाचार्यः
देवीनारायण एडवोकेट, बी० ए०, विद्यासागरः
वीरमणी उपाध्यायः एम०ए०साहित्या० न्यायरत्नम्
अम्बिकादत्त उपाध्यायः एम० ए०, सांख्याचार्यः
नारायणपति त्रिपाठी, पण्डितशिरोमणिः
ब्रजवलाल झा वेदाचार्यः
विन्ध्येश्वरीप्रसाद शास्त्री धर्माचार्यः
रामदेवद्विवेदी व्याकरणाचार्यः
सदायतनपाण्डेयः, एम० एल० सी०
(भू. पू. सभापति-अ. भा. वर्णाश्रम-स्वराज्य-संघ)
तारापदभट्टाचार्यः काव्यभूषणम्
आचार्य कृष्णानन्दः
राजारामशुक्लः साहित्याचार्यः
बालमुकुन्दशर्म्मा सारस्वतः
महेन्द्र उपाध्यायः
श्रीदत्त मिश्रः
काशीनाथ अग्निहोत्री कर्मकाण्डाचार्यः
शोभाकान्त झा ज्यौतिषाचार्यः
नारायणदत्त त्रिपाठी व्याकरणाचार्यः

हरिनाथशास्त्री दर्शनाचार्यः
महादेवशास्त्री साहित्याचार्यः
कालीप्रसाद शास्त्री व्याकरणाचार्यः
राधाप्रसाद शास्त्री धर्माचार्यः
वामदेव मिश्रः साहित्याध्यापकः
हीरावल्लभ शास्त्री सांख्याचार्यः
राजनारायण शास्त्री व्याकरणाध्यापकः
अम्बिकाप्रसाद उपाध्यायः
विन्ध्येश्वरीप्रसाद शास्त्री, ज्योतिषाचार्यः
गिरिजादत्त त्रिपाठी व्याकरणन्याय-वेदान्ताचार्य
शिवधनी सिंह शास्त्री
यज्ञनारायण उपाध्यायः, एम० ए०, एल्‌-एल०बी०
गौरीनाथ पाठकः साहित्याचार्यः
ब्रह्मानन्द सन्यासी, शास्त्री, वेदान्तशिरोमणिः
रामानन्दमिश्रो ज्यौतिषाचार्यः
रामव्यासपाण्डेयो ज्यौतिषाचार्यः
दीनानाथ शास्त्री सारस्वतः, व्याकरणाचार्यः
दुर्गाप्रसाद पाण्डेयः
विश्वनाथ पाठकः ज्यौतिषाचार्यः
मध्वाचार्य वुर्ली, आयुर्वेदाचार्यः
वीरभद्र शास्त्री धर्माचार्यः
जनार्दनजोशी वेदवाचस्पतिः
जितेन्द्रियाचार्यः
केदारनाथ शर्म्मा सारस्वतः, सुप्रभात-सम्पादक
सुरेश्वरप्रसादमिश्रः, शास्त्रविशारदः
शिवकुमारशास्त्री, काव्यतीर्थः

---

प्रकाशकः—श्रीगौरीनाथ पाठकः, सुप्रभात-कार्यालयः, बनारस सिटी।
मुद्रक—श्रीबालकृष्ण शास्त्री, ज्योतिषप्रकाश प्रेस, विश्वेश्वरगंज, काशी।

The Suprabhatam

वार्षिकम्मूल्यम् —२)

Registered. NO.A. 1348.

छात्रेभ्यः—१)

संस्कृत-साहित्य-समाजस्य मासिक-मुखपत्रम्






तिमिरततिमुदस्यद् भेदतारा विलुम्पन्, नयदधिसुरभाषाभाषि जागर्तिमुच्चैः।
विबुधविहगवादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः "सुप्रभातम्" ॥

| | | |
|---|---|---|
| एकादशोऽब्दः | आग्रहायणी पूर्णिमा १९९२ | नवमी संख्या |

सम्पादकः—
श्रीकेदारनाथशर्मा (सारस्वतः)
स० सम्पादकः—श्रीजितेन्द्रियाचार्यः

निरीक्षकः—
श्रीगोपालशास्त्री, दर्शनकेशरी, साहित्याचार्यः
न्याय-काव्यतीर्थः

प्राप्तिस्थानम्—
व्यवस्थापकः—सुप्रभात-कार्यालयः काशी।

## लेख-सूची ।




एकादशोऽब्दः | आग्रहायणी पूर्णिमा, १९९२ | नवमी संख्या

# गणेशाभ्यर्थनम् ।



अये गणपते ! त्वया किमिति तुन्दिलत्वं धृतम्
तवैव तनया इमे रहित-भोजनाच्छादनाः ॥
शिशौ ननु बुभुक्षिते न जनकं समालक्षये
भवेदशनतत्परस्त्वदितरो धरामण्डले ॥ १ ॥

स्थितोऽसि ननु मूषके मूषितधान्यराशौ स्वयम्
प्रवर्त्तयसि षण्मुखप्रमुखबालकानां बलम् ॥
वृतोऽसि परितो गणैरमर ! नन्दिभृङ्ग्यादिभि-
र्न वेत्सि पितुरर्दनां भुवनपालिकायाः पुरः ॥ २ ॥

गजानन ! निमीलिकां समपहाय वाणीमिमाम्
शृणु कहि पुरातनः समय एष भो ! वर्त्तते ॥
न मोदकमुमापतेः करतलेन धृत्वा मुखे
व्यतीतयतु बालकैः सममशेषकालं विभो ! ॥ ३ ॥

शिवापरिणये त्वया प्रथमपूज्य ! पूजासने
स्थितेन शिवसूनुना शिवमयं स्वकं प्राक्तनम् ॥
प्रदर्शितमहो महः किमपि तद्विचिन्त्याऽधुना
लपन्ति बहुधा मुधा विबुधशत्रवो भूतले ॥ ४ ॥

न तावककथानके भवति चैकके संशयः
समस्तविषये विभो ! श्रुतिगणेन संबोधिते ॥
धिया विरहिता वयम् विगतमान्यता हा ! कथम्
कथां निगमयेम ताम्, भुवि नु कोऽधुना श्रोष्यति॥५॥

क्व सा नियमपद्धतिर्भगवतो मनोः शोभना
पठन्तु द्विजसंघतो निखिलमानवा भूतले ॥
क्व साम्प्रतमगच्छतामितरदेशवासाय वा
न धीरुदयते शुभा, किमु न पश्यसीदं विभो ! ॥ ६ ॥

अभूम धरणीतले वयमतीतकाले शुभे
जगद्गुरु-पदाभिधा निखिल-सभ्यताऽऽधायकाः ॥
सनातनपथेऽधुना बहुतिथे प्रविष्टे खले
खलाधिपतयो वयम् किमनुचिन्त्य नो रोदिषि ॥७॥

अमी विगणयन्ति ते करिमुखस्य नामावलीम्
परैरतितिरस्कृता धरणिमण्डना मानवाः ॥
न चिन्तयसि चेदरं गणप ! भारतीयानिमान्
स्थितामपि परिस्थितिं गणय संशयाऽऽलिङ्गिताम् ॥८॥

—रामजीपाण्डेयशास्त्रिणः

# कुसुम-युगलम्।

---

सद्वर्णा वृद्धियुक्ता विविधगुणयुता हन्त का नाम जातिः ?
ताम्रा रक्ता नु पीता बहुलतर-सिता श्यामला गौरदेहा !
वृद्धिं तासामियाय स्वतनुहितरताऽबाध्यकाचित् सवर्णा
वर्णादाङ् बलीयो भवति फणिगिरां के न जानन्त्यभिज्ञाः ॥

॥ २ ॥

बिभर्षि तनुचक्षुषी सुतनु चञ्चलाचञ्चले।
सुवर्णमयि ! भास्वरं जयसि तेजसा भास्करम् ॥
दधासि शुचितां परामनलवत् सदान्तर्बहि-
स्तथापि मयि संगता त्वमसि नन्दनस्पर्शना ॥

—श्रीगिरिधर शर्म्मा "नवरत्नम्"

झालरापाटनम्।

# सम्पादकीयम्

## राष्ट्रियमहासभायाः स्वर्णजयन्ती ।

युगादारभ्यास्मिन् देशे आर्य्या एव स्वतन्त्र-शासका आसन्नित्यस्माकं निश्चयः । बहवस्तु ऐतिहासिकाः, केचन केकेश-देशतः; केचित् त्रिपिष्टपतः; केऽपि हिन्दूकुशप्रभृति-देशान्तरत आर्याणामत्रागमनं वदन्ति । परन्तु वयन्तु तत्र पाश्चात्यानामिहापि काञ्चन मायामेवाकलयामस्तदनुगानां भारतीयानामपि च बुद्धिविभ्रम एवेति प्रतीमः । यतोहि सृष्टेः प्रथम उद्गमस्तत्रैव भवितुमर्हति यत्र प्रकृतेः पूर्णो विलासः स्याद् यत्र च सर्वेऽपि ऋतवो यथाक्रमं स्वप्रभावं प्रकटयेयुः । इति नियमानुसारेणैव भारते सर्वप्रथमं सृष्टि-प्रादुर्भाव इत्यसन्दिग्धमेव । वेदेऽपि "यस्येमे हिमवन्तो महित्वा" इति हिमालयस्य नाम भारतवर्षस्यैव वर्णनप्रस्तावे समुपलभ्यते । किंबहुना—

"इमं मे गङ्गे यमुने सरस्वती शुतुद्रि स्तोमं सचता परुष्ण्या। असिक्न्या मरुद्वृधा वितस्तयार्जीकीये श्रृणुह्याशुसोमया" इत्यतः स्पष्टमेव प्रतीयते यदिहैव भारते आसीदार्य्याणां प्राथमिको निवास इति । आर्य्यावर्त इति व्युत्पत्त्या भारतवर्षस्यार्य्यनिवासत्वं संसूच्यते । मनुरपि इह भारत एवार्य्याणां निवासं संसूच्य ततः पलायितानां मानवानां व्यवस्थाविधाने प्रसङ्गतः ।

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः । वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ।

पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाःशकाः । पारदाः पह्लवाश्चीनाः किराता दरदाः खसाः" ( मनु० १० । ४३, ४४ ) इति पद्याभ्यामित एवैषां पौण्ड्रादीनां बहिर्गतत्वं सूचयति । यतश्च ब्राह्मणानां तेषु तेषु देशेषु गमनागमनाभावेन वृषलत्वं द्योतयति ।

अनेन च स्पष्टमेव मनोराशयो लक्ष्यते यदयमेव देशोऽस्त्यार्य्याणामादिनिवासभूमिरिति । इत्थञ्चेत्यादिना ग्रन्थेन स्पष्टमेव ध्वन्यते, यदिहैव भारते प्रथममार्य्याणां निवासस्तथा तेषामेवेह प्राथमिकं शासनमासीत् इति । किं बहुना सर्वप्रथमं बालिसुमात्रा-नागलोकामेरिकाप्रभृतिद्वीपद्वीपान्तरेऽपि आर्य्या एव शासका आसन् । महाभारते युधिष्ठिरस्य राजसूयाध्वरे एवं द्वीपद्वीपान्तरस्था राजानः सामन्ततया करोपहारहस्ता एव समागता आसन्निति वर्णितं विद्यते । इत्येवमार्य्याः सृष्टिकालादारभ्य ईशवीयशतकस्यैकादशाब्दीं यावत् भारतस्य स्वतन्त्र-शासका आसन् । तदनन्तरं धर्मे हजरत-मोहम्मदमार्गानुगाः प्रकृतौ विचारे निवासे च भारतीयाः कियन्तः शासका अभूवन् । तेषां शासनं यद्यपि तादृग् दूषितं नासीद् यथा सम्प्रति इतिहासाभासे पाश्चात्यैतिहासिकपाशैश्छलनानिपुणैर्निदिश्यते । तथापि भारतीयार्थिकी दशा तु तदानीमप्यत्युन्नततरैवासीत् । परन्तु तत्कालीनप्रथया परवशीकृता धर्ममार्गे-समुदार-प्रवृत्तयो भारतीया एव शासका अभूवन्न वैदेशिका इति तु वक्तुं शक्यत एव । यतोहि इस्लामधर्म एव तेषां वैदेशिक आसीत्ते तु भारतीया एवासन् । अत्रैव तेषां जनिर्मृतिश्च भवतिस्म, अस्य देशस्यैव समृद्ध्या ते स्वात्मानं समृद्धं मन्यन्तेस्म । निष्कपटं एतत्

निगदितुं शक्यते, यत् तदानीं कियन्तो भारतीया इस्लाम-धर्मावलम्बिनो जाताः। अपरे चार्य्यधर्मावलम्बिन एवासन् इति। यथाहि पूर्वं शैवाः, वैष्णवाः, बौद्धाः, जैना राजानो महा राजाः सामन्ताः प्रजा वा इहत्या अभूवन्। तथैव तदा भारतीयेषु कियन्त इस्लामधर्मावलम्बिनः शिष्य-( सिख्ख ) धर्मावलम्बिनो जाता इति। तदानीन्तनं शासनं वैदेशिक-मासीदिति तु वक्तुमेव न पार्य्यते। इत्यलम्

ततश्च खीष्टाब्दीयाष्टादशशतके गोरण्डानामिह भारताव नौ शनैः प्रवेशः। ते चेमे व्यापार-वाणिज्य-करणायेह समा-गताः। परन्तु शनैः शनैः पादौ प्रसार्य्य तदानीन्तनभार तीयजनतासाहाय्येनैवेह शासकाः संजाताः। एतेषां शासनं वैदेशिकं भविष्यतीति स्वप्नेऽपि तदा नासीद्भारतीयानां विश्वासस्ते तु पूर्वाभ्यासेनैवैषां साहाय्यं विदधुः। ते हि यथापूर्वं द्वयो राज्ञोः संग्रामे कियद्भिरेकस्य पक्षः गृह्यतेस्म कियद्भिश्चान्यस्येति नियमत एवैतेषां साहाय्यं सम्पादित-वन्तः। परन्तु इमे नीत्या छद्मना वा देशमिमं स्वायत्तीकृत्य प्रथममिग्लैण्डहितं स्वजातिबन्धुहितं कुर्वन्ति। पश्चाच्च यदि-तदविरोधि भारतहितं भवति तर्हि कुर्वन्ति नोचेत्तत्राप्युदा-सते। ग्रहणकाले तु एभिरेतादृशं राजधर्मविरुद्धमाचरितं यद्द सप्तपञ्चाशदुत्तराष्टादशेऽब्दे १८५७ सिपाही विद्रोहनाम्ना राज्यविप्लवमेव भारतीयैस्तदानीन्तनैरेतन्नी-तिनाडीज्ञैः कर्तुं व्यवसितमासीत्। परन्तु तत्रासाफल्ये जाते कियतः कालादनन्तरं, पञ्चाशीत्युत्तराष्टादशैसवेऽब्दे दिस-म्बरमासस्य अष्टाविंशतितारिकायां राष्ट्रियमहासभायाः संस्थापनं बम्बई नगरे तेजपालसंस्कृत-महाविद्यालये सम-जनि। यस्याश्च पूर्वं नीतिरीदृशी आसीद्द यद्द भारतीयानां यद्दि अपेक्षितं विद्यते तच्छासकानां पुरस्ताद्द व्यक्तीभवेदिति। तत्र हि सिपाहीविद्रोहत्रस्तानां शासकानामपि साहाय्य-मासीद्द। यत्केनापि प्रकारेण वैधमार्गत एव भारतीयानां भावनायामस्तु भविष्यतीति। तदानीन्तना भारतीया

अपि स्वभावत एव शान्तिप्रियाः स्वीयं भारतीयं हितं शासकेभ्यो विनिवेद्यैव तत्सम्पादयितुमुत्सुका आसन्। परन्तु सापि नीतिः कियतः कालाद्विफलिता जाता पाश्चात्य-महासमरे सर्वतः सर्वथा शासकानां साहाय्यं विधायापि परमसहयोगिना तेभ्य एव 'कैसरेहिन्द' इत्युपाधिमधिगतवता महात्मना गान्धिना यदा रौलेट् एक्ट इत्युपहार उपलब्धस्तदा तस्य नेत्रे उन्मीलिते जाते। तेन चिन्तितं यदेभ्यो वैदेशिकेभ्यः शासकेभ्यः सहयोगदानेन न किमपि लब्धं स्यादिति असहयो-गनीतिरुद्भाविता। ततश्च चन्द्रनेत्राङ्काब्जमिते १९२१ खी-ष्टाब्दे सत्याग्रहसंग्रामे एकदा पुनरपि भारतीयानां सुप्तो भावो जागरितः समजनि। सहस्रशो भारतीयाः सत्याग्रहं कृत्वा अहिंसामार्गमाश्रित्य हसन्तः कारागारमाश्रिताः।

तत्रेयमस्माकं काशीनगरी प्रधानपदमधिगतवती आसी-दिहत्याः संस्कृतज्ञाश्छात्राः सर्वप्रथमं राजकीयसंस्कृत-परीक्षातोऽसहयोगं कृतवन्तः। परिव्राजक-मण्डलस्थाः सन्या-सिनोऽपि भूयस्यां संख्यायां वर्तमान-शासन-दोषमसहमानाः सत्याग्रहं कुर्वन्तो लवणनियमभङ्गं विहितवन्तः। नेत्रान-लाङ्काब्जमिते खीष्टाऽब्दे च राष्ट्रियान्दोलने काशीमण्डल-राष्ट्रियसभायाः वार्षिकाधिवेशनस्य ( जिलाकांग्रेस का ( कान्फ्रेसका ) सभापतित्वमलङ्कुर्वाणा अस्माकं संस्कृत-साहित्य-समाजस्य काशीपण्डितसभायाश्च प्रधानमन्त्रिणो दर्शन-केशरिणः पं० श्रीगोपाल शास्त्रिणोऽपि वर्षं यावत्का-रागारवासमाश्रिता आसन्।

येन चास्माकं सुप्रभातपत्रस्य प्रकाशनमपि विविधान्त-रायपातमनुभूय निरुद्धमासीत् तस्मिन्नेवावसरे 'आज' पत्रमपि शासककृपास्पदीभूय कृतमौनमासीत्। पुनश्च स्थगिते सत्या-ग्रहसंग्रामे विशदीभूते च कार्य्यक्षेत्रे यथा 'आज' पत्रादिकं पुनः प्रकाशितं समजनि। तथैवास्माकं सुप्रभातमपि स्वविघ्न-बाहुल्यमपसार्य्य कार्य्यक्षेत्रे समवतीर्णमस्ति। इत्येतदेवाधुना कांग्रेस-काञ्चन-जयन्ती-शुभावसरे राष्ट्रियमहासभायाः संक्षि प्तविवरणं वयं पाठकानां पुरः प्रस्तुमो यच्चतेषामवश्य-ज्ञातव्यमत्युपयोगि च विद्यते तदभिमुखीभवितुमिति शम्।

## विचारसभा

पूर्वसूचनानुसारतः डाक्टर-अम्वेडकरस्य हिंदूधर्मं विहाय धर्मान्तरजिघृक्षया समुपस्थितायां परिस्थितौ विचारकरणाय (ता० २०।१०।३५ ई) कार्तिककृष्णनवम्यां रवौ षड्वादने गोसांई राम-पुरी-मस्करिणो मठे काशीस्थविद्वन्मण्डलीसदस्यानां सन्यासिनां सर्वेषां साम्प्रदायिकानां नागरिकाणाञ्च महती संसद्, अखिल-भारतीय-वर्णाश्रमस्वराज्यसंघस्य भूतपूर्वसभापतीनां महामान्यानां धर्मधुरन्धराणां श्रीमतां पण्डितसदायतनपाण्डेयमहोदयानां सभापतित्वे महता समारोहेण समारब्धा ।

तत्रेश्वरप्रार्थनानन्तरं श्रीमतां काशीस्थविशिष्ट-विदुषां श्रीमदनमोहनशास्त्रिणां वर्तमानपरिस्थिति परिचायकात्मकभाषणं समजनि । पं० विष्णुदत्ता-चार्य्यस्य महोपदेशकस्य च पण्डितमण्डलीतो भाविन्या घोषणायाः सम्बन्धे भाषणमभूत् । तदनन्तरं श्रीका-शीस्थाः प्रसिद्धविद्वांसः पण्डित श्रीगोपालशास्त्रिणो दर्शनकेशरिणः पण्डितमण्डलीतो घोषणापत्रं पठि-तुमुत्थिताः पठित्वा च धर्मशास्त्राणां वचांस्युद्धृ-त्योद्धृत्य सर्वतः शास्त्रानुसारि घोषणापत्रमिदमिति प्रास्ताविषुः । पं० अम्बिकादत्तोपाध्यायानां एम० ए०, सांख्याचार्य्याणां समर्थने सञ्जाते पं० सत्यनारायण-शास्त्रिवर्य्यैर्भिषगाचार्य्यैः, पं० पूर्णचन्द्राचार्यप्रभृतिभि-र्विद्वद्वर्य्यैश्च कियतां शब्दानां परिवर्धने परिवर्तने च कृते सति यदा सभापतिमहोदया घोषणापत्रे मतं ग्रहीतुं समुत्थितास्तदानीं प्रसिद्धोपद्रवी सर्व्वलिङ्गी लालनाथः स्वौद्धत्यं प्रदर्शयन् कतिपयैर्विधर्मिवर्गतो गृहीतोपद्रवभाटकैर्दुष्टैः सह कोलाहलं कर्तुमारेभे । मठमहन्थस्य गोसाई रामपुरेः स्वामिनोऽपि व्यवहारं शिष्टजनविरुद्धमाकलय्य, श्रीमतां मान्यानां सभाप-तिमहोदयानामाज्ञया संस्कृत-साहित्य-समाज-भवने सभा जाता । तत्र सर्वैर्विशिष्ट-विद्वद्वर्य्यैस्सन्यासिभिः साम्प्रदायिकैर्नागरिकैश्च मिलित्वा शान्तिपूर्वकं विचारं विधाय सर्वा अपि घोषणाः सर्वसम्मत्या स्वीकृताः तासां घोषणानामिदं स्वरूपं विगतेऽङ्के प्रकाशितम् ।

❀ ❀ ❀ ❀

## संगीतप्रदर्शनम्

ता० १३-१२-३५ दिने सायं सार्धषड्वादन-समये सेण्ट्रलहिन्दू-पाठशालायाः शर्मा-भवने मैसूर-प्रदेशादागतानां "गानसरस्वती लक्ष्मीवाई श्रीम-तीनां" सुप्रभात-पत्रिका-सहायार्थं सङ्गीत-प्रदर्शनं महता विजृम्भेण शान्तिपूर्वकं संवृत्तम् । शर्माभवनं श्रोतृवृन्दैर्नागरिकैस्तुन्दिलितमासीत् । तेषु डा० मङ्गलदेवशास्त्रि-श्रीकाशीराम एम्० ए०-गौरीशङ्कर प्रसाद वकील, देवीनारायणवर्मा विद्यासागरः वकील, श्रीरमाशङ्करलाल वकीलमहोदयास्तथा अन्येऽपि बहवो नागरिकाः सुप्रभातीयसङ्गीतप्रेम्णा-सम्मिलिता महोत्सवसुषुमामवर्धयन्त । श्रीशिव-प्रसादगुप्तमहाशयाः श्रीराजा वलदेवदासमहोदयाः श्रीप्रकाशमहोदयाश्च सशुल्कप्रेषणं कार्यान्तरपार-

घोषणा एतस्मिन्नङ्के प्रकाशिता स्थलसङ्कोचात्...

तन्त्र्यात्स्वानुपस्थितिः क्षन्तव्या वयं हृदयेनोपस्थिता एव इति समसूचयन्। श्रीमतीभिः कानिचिद्गानानि हिन्दीभाषायां तथा संस्कृतभाषायां तथा दक्षिण-देशीयभाषासु च अगायिषत।

श्लोकास्तु-सपदच्छेदं सुस्पष्टञ्च गीताः। सर्व-तोमुखेन नादः श्रीमतीनां निर्विकल्पः कोमलो मधुर-श्चासीत्।

अत एव सदस्यैर्ललित-ध्वनि समावर्जित-श्रोत्र-वृत्तिभिर्भाषायां दृष्टि नैवन्यपाति। अस्मिन्नुपलक्ष्ये वाराणसेयप्रसिद्ध संगीताचार्याणां श्रीशिवप्रसाद महोदयानां

तथा रामनाथानां मृदंगवादकानामपि स्व-स्व कलाप्रदर्शनं समुल्लेख्यमासीत्। श्रीमतीभिस्तत्रस-म्प्राप्तं यावद्द्रविणं उदारहृदयेन सुप्रभाताय सम-र्पितम्।

वयमपि श्रीमतीभ्यः सौभाग्यमायुरारोग्यं च श्रीविश्वेश्वरात्कामयामहे।

एतत्कार्यसम्पादनाय स्थानदानेनानुगृहीतवद्-भ्यः सेण्ट्रलहिन्दूस्कूल-प्रधानाध्यापक-श्रीपं० राम-नारायणमिश्रमहोदयेभ्यः बहून्धन्यवादान् वितरामः। एवमेव एतदुत्सवसौष्ठवानुष्ठापने दत्तसहयोगानां श्रीराजनारायणद्विवेदि-प्रकाशनारायण-कृष्णानन्द सुरेश्वरप्रसादमिश्र-गोपाललाल-गोविन्दाचार्य महा-शयानां तथा नवयुवकमण्डलसदस्यानां श्रीकिशोरी-लाल महोदयानां च कृते नितरामधमर्णं सुप्रभातम्।

❀ ❀ ❀

## भ्रम संशोधनम्।

प्रगताङ्केषु 'संस्कृत वाङ्मयस्य क्रमविकाशः' शीर्षको लेखः श्रीमतां मोहनलालशास्त्रिणामासी-दिति तत्र 'कश्चित्' स्थाने तेषामभिधानमवगन्तव्यम्।

# संस्कृतवादविवादोत्सवः।

श्रीहर्षचन्द्रः जैनः वकील्

अयि महनीयचरिता माननीया सुरभारती-कृपा-कटाक्षकञ्चुकिता विपश्चित्प्रवराः !

अनादिकालात् सर्वज्ञैर्महर्षिभिः "कामदुघा' इय-मिति सादरं संभाविताऽक्षय्यकोशा सर्वभाषाप्रसूरियं सुरभारती कलिकालप्रभावादद्यत्वे शिथिलितमन्यैः समु-त्सार्यमाणापि सरससरलनिरवद्य-गद्यपद्यरचनाचतुरविरि-ञ्चिवल्लभानुगृहीत-सूरिसमुदाय-समुद्यदधरीकृतपीयूषमा-धुरीकसूक्ति-गुम्फविजृम्भणैः कमप्यनिर्वचनीयं प्रमोदं विदाञ्चेतःसु जनयन्ती दिशन्तीव समाधिसुखमना-दिरनन्ता संविदिव भगवती साम्प्रतमप्यनुभूयते विरल-शिथिलसन्धिबन्धा गीर्वाणगीर्विद्वद्वरैः।

अस्याः सर्वाङ्गपोषपुरःसरं सुप्रचारं कामयमाना देशकालपरिस्थितिविदश्चतुरा नेतारः सुरगिरमिमं विवादशैलीप्रचारमप्यमोघेषूपायेषु परिगणयन्ति।

विद्वज्जनपुरस्कृतां तामेव प्रणालीमनुसृत्य समजनि सानन्दं श्रीस्याद्वादमहाविद्यालये 'प्रचलिता बलिदान-प्रथा साधीयसी न वेति विषयावलम्बिवादविवादो-त्सवः पौषकृष्णद्वादश्यां (ता० २२-१२-३५) भानु-वासरे मध्याह्ने विद्वच्चूडामणीनां श्रीमतां डा० मंगलदेव शास्त्रि एम० ए० महोदयानां, वी० विश्वनाथन् आई० सी० एस० महोदयानाम् प्रो० चिन्नस्वामिशास्त्रि महो-दयानाञ्च निर्णेतृतायाम्। वक्तृत्वकलाविदग्धतया लब्ध-ञ्चैकैकं राजतपदकं श्रीस्याद्वादविद्यालयीय-विद्यार्थि-राजकुमार—ताराचन्द्राभ्यां नास्त्यस्तिपक्षावलम्बिभ्यां विजयचिह्नमपि च (राजतीमूर्तिः) स्याद्वादविद्या-लयेन बहुलकृतभावागताः।

# राष्ट्रिय-महासभायाः संस्थापनम् ।

श्री नटवरलालशर्मा

एकोनविंशतिशताब्दीत अयं देशः स्वतन्त्र आसीदेतद्देशीयानामेवेह शासनमासीत्। तदवधि पाश्चात्यसभ्यताया अपि प्रभावोऽभावसदृश एवासीत्। वि० १८०७ वर्षतमात्प्रागाऽङ्ग्लदेश औद्योगिकीक्रान्तिः समजनि। पूर्वं सोऽपि देशः कृषिप्रधान एवासीत् । तस्मिन्समये तत्रत्यास्स्वनिर्मितवस्तु विक्रयार्थमन्यदेशीयाऽऽपणान्वेषणतत्परा बभूवुः । किन्तु तदा सर्वत्र गमनाऽऽगमनाऽसुलभत्वात्केवलमसाधारणवस्तुप्रेषणमेव भवतिस्म परदेशे । भारतस्याऽन्यदेशैस्सार्धं तदानींतने व्यापारे न काऽप्यार्थिकी क्षतिरभूदितीतिहासः प्रमाणयति । वि० १८२२ तमे वर्षे 'ईष्ट इण्डिया कम्पनी' नामिकया संस्थया मुगलबादशाह—शाह—आलमतो वङ्ग-विहार-उड़ीसा-प्रान्तेषु न्यायालयस्य (दिवानी) अधिकारः सम्प्राप्तः । तदा प्रभृति तेषु प्रान्तेषु भूमिव्यवस्थां—कर्तुमेवंप्रकारेण भूकरग्रहणमारब्धं कम्पन्या यथा प्रथममेवार्य्यावर्तस्य प्राचीनभूकरव्यवस्थापि परिवर्तिता जाता। यदा सा कम्पनी शिक्षणनिमित्तं व्ययंकर्तुम् निरणयत् तदा तस्यास्संस्कृतादिदैशिकभाषोन्नतिनिमित्ताऽऽर्थिकव्ययकरणे पक्ष आसीत्, काश्यां 'संस्कृत कालेजः' इति नाम्ना तथा कलिकातायां कालिकाता मदरसा' इति शिक्षालयौ संस्थापितौ च। पण्डितादिभ्यः पुरस्कारं दत्वा प्राचीनग्रन्थानां पुनः प्रकाशनाय नूतनग्रन्थनिर्माणाय चाऽऽयोजना व्यरचि । कम्पन्या राज्ये 'ईसाई' मतावलम्बिनां भारते स्वधर्मप्रचारं कर्तुमाज्ञा नासीत्।

तस्याः कम्पन्या अनुमतिं विना न कोऽप्यांग्लजनो (अंग्रेज) भारत उषितुमप्यशक्नोत्, एवं न किञ्चिदपि विक्रेतुम्। तदानींतनाधिकारिणामेवं कथनमासीद्यदाङ्ग्लजना भारतीयधर्ममाचारं च सम्यङ् न जानन्ति। भीतिरतो महत्यविद्यत यत्रो भारतीयानां भावनाया आदरं न करिष्यन्तीति । कम्पनीयमार्य्य-प्राचीन-प्रथानुसारेणैवाऽऽर्य्याऽनार्य्याणां सर्वेषां धार्मिकस्थानानां प्रबन्धं निरीक्षणञ्च कर्तुमप्यारभत। मन्दिरादीनां धार्मिक—सामाजिक स्थानानामाय-व्ययलेखनं-जीर्णोद्धारं पूजादिप्रबन्धमपि कम्पनी स्वहस्ते कृतवती।

तत्समयेऽत्रेसाईजनानामतीव दयनीया दशाऽऽसीत् । यदि कश्चिद्भारतवासी 'ईसाई' धर्मं गृह्णातिस्म तर्हि धर्मपरिवर्तनानन्तरं तस्य पूर्वोपार्जितसम्पत्ति-स्त्री-सन्ततिष्वधिकारो नातिष्ठत् । मद्रासप्रान्ते ईसाईजनेभ्य उच्चकर्मचारिणां स्थानमपि सा कम्पनी न ददौ। राजसभादिषु आङ्ग्लभाषा—व्यवहारस्य बीजारोपणमपि जातम् । तन्निमित्तमनुवादोऽपि स्मृत्यादीनामाङ्ग्लभाषायामभूत् । वि० १६२० तमे संवत्सरे धर्मस्थानानां पूर्णतया प्रबन्धः स्वायत्तीकृतो राजसत्तया। वि० १९२१ तमे वर्षे न्यायालये ये केचन पण्डिता मौलविनो ( मौलवी ) ऽवशिष्टा आसन् तेऽपि ततो दूरीकृताः। इत्थमार्य्यानार्य्याणामुभयेषामपि-परंपरागतप्रथाया ध्वंसः सञ्जातः। भारतवासिनोऽपि व्यचिन्तयन् यदिमे 'ईसाई' धर्मप्रचारायोद्युक्ता अस्मानस्मद्धर्माद्विचाल्य स्वधर्मं ग्राहयितु-

मभिलषन्ति। एतादृशपरिवर्तनात् तथा लार्ड डलहौजी शासनस्य कुटिलनीतिवशाच्च वि० १९१० तमे वर्षे महती क्रान्तिः सहसाऽस्फुटत् कथमपि क्रान्तेः शान्तेरनन्तरं आर्य्या निःशस्त्राः कृताः। आङ्ग्लभाषाध्ययने भारतीयानामभिरुचिः स्यादित्यस्य साधु प्रबन्धस्तदानीन्तनैः शासकैर्विहितः। तेन गौरण्डीयानां भाषाभूषणादिसर्वं आङ्ग्लशिक्षाशिक्षितवर्गं प्रालोभयत्। येन आङ्ग्लजनानां स्वदेशनिर्मितं वस्त्रादिकं विक्रेतुमिह सुलभताऽभवत् फलतः शनैः शनैः भारतीयकलाकौशलं मृत्युमुखं प्राविशत्। आङ्ग्लदेशे भारतीयाऽऽमसमग्र्या (Raw material) अतीवावश्यकत्वाद् भारतीयाभ्यन्तिकव्यापारं विनाशितुमेव शासकैर्यत्नः कृतः। तेषां देशोत्पादितसामग्रीं विक्रेतुं भारतं कलाकौशलरहितं सत् सदा कृषिप्रधानदेशो भूयादिति तैर्वाञ्छितमाचारे स्थापितश्च। किन्तु भारतेऽपि यदा वस्त्रनिर्माणार्थं यन्त्रालयानामुद्घाटनमभूत्। तदा लंकाशयव्यवसायिभिर्भारते यन्त्रसम्पादितसामग्र्याः करं ग्रहीतुं भारतशासनं विवशनमकारि यतो भारतीयव्यवसायिनः स्पर्धायां न तिष्ठेयुः। ते च सार्वजनिककर्म–विभागं (Public works Department) संस्थाप्य मार्गान् (Roads) निर्मायाऽनेकेषु ग्रामेषु नगरेषु स्वाङ्ग्लभूम्युत्पादितवस्त्रादिसामग्रीं विक्रेतुमारब्धवन्तः। भारतस्याऽऽमसामग्र्या (Raw Material) अपि निर्यातवृद्धिः सञ्जाता। अस्याः प्रभावः कृषेरुपरि न्यपतत्। भारतीयास्तादृशीं कृषिं कर्तुमुद्यता यत्कृष्योत्पादितमधिकं निर्यातं भवेत्। यौरापीया व्यापारिणोऽपि भारते धनरहितानां श्रमजीविकानां (मजदूर) परिश्रमेण चा कहवा जूट-नील्यादीनां कृषिकारिणो बभूवुः।

वि. १९२३ तमे वर्षे कालिकातायां श्रीसुरेन्द्रनाथबेनर्जी—आनन्दमोहनबोस—महोदयानां परिश्रमेण 'इण्डियन एसोसियेशन' सभा संस्थापिता। श्रीमेजिनमहाशयलेखेन श्रीयुतबनर्जीमहोदयस्यान्तःकरणं सुप्रभावितं जातम्। इटलीदेशस्य स्वतन्त्रताप्राप्तिस्सदैव तस्य भारतवीरस्य दृष्टौ तस्थौ। स 'इन्डियन एसोसियेनसंस्थां' अखिल भारतवर्षीयां कर्तुमभ्यलषत्। एतदर्थं वि० १९४० तमे वर्षे शीततौ कालिकातायां वृहदधिवेशनमप्यकारि महानुभावेन। तस्मिन् मद्रास-मोहमयी-संयुक्तप्रान्तेभ्यो बहवः प्रतिनिधयः सम्मिलिताः। भारतीयानामित्थं राजकीय क्षेत्र-उत्साहपूर्वकमभिवृद्धिमवलोक्य श्रीयुत ह्यूममहोदयैः बेनर्जीमहोदयैश्च स्वमित्रैः सह परामृश्य वि० १९४२ तमे वर्षे 'राष्ट्रियसभा' (कांग्रेस) संस्थापिता भारतीयशासनं भारतीयानामधीनं स्यादिति। इत्थं राष्ट्रियमहासभा प्रादुर्भूतेति विदांकुर्वन्तु भवन्तः। इयं हि (कांग्रेस) राष्ट्रियमहासभाया स्थापनतः प्राक्कालीनावस्था तस्याश्चायं स्थापनोद्देश इति।

---

# अद्वैतवादः क्षणिकविज्ञानवादश्च।



लें०—श्री ज्ञानः बौद्धभिक्षुः।

"असीमं पूर्णं चैकमेव भवितुमर्हति" इयमेव अद्वैतवादे प्रबला युक्तिः। किन्तु एवमुक्ते तदसीमं पूर्णं च वस्तु किम्? इति शङ्का जागर्त्ति। तत्र वेदान्तिनां मतेन विज्ञानमेव तत्।

"विज्ञानं स्थिरं वा क्षणिकं वा" इति संशयः। स्थिरपक्षे सर्वथैव अद्वैतम्। क्षणिकपक्षे विजातीयभेदाभावेन अद्वैतमेव किन्तु सजातीयभेदानां सद्भावात् सजातीयद्वैतन्तु अस्त्येव। स्थिरपक्षे प्रत्यक्षविरोधदोषः। न हि स्थिरं विज्ञानमनुभवगोचरं किन्तु प्रतिक्षणपरिणामशीलमेव। किन्तु स्थिरपक्ष इदं वक्तु शक्यते यदा इदं निर्णीतमनन्तमसीमं च वस्त्वस्ति तदा तदनुरोधेनैकं स्थिरं च विज्ञानमस्तीत्युपपद्यते। अनुमानेन प्रत्यक्षमप्याभासीक्रियते—यथाऽलातचक्रम्। तेन प्रत्यक्षतः क्षणिकत्वप्रतीतिराभास एव।

ननु क्षणिकपक्षेऽपि विज्ञानसन्ततेरानन्त्यमुच्यत एवेति चेत्? न। अनुपपत्तेः। न हि सान्तानां सन्ततेरनन्तत्वमुपपत्तिगम्यम्। दृष्टान्ताभावात्। ननु किं कारणं येन वयमसीमानन्तवस्तुनः सत्तामवश्यमङ्गीकुर्म? उच्यते—सान्तस्य ससीमस्य चानन्तासीमापेक्षयैव सिद्धेः। नन्वेतदपि साध्यमेव। परस्परापेक्षयैव सर्वेषां वस्तूनां सान्तत्वस्य ससीमत्वस्य चोपपादयितुं शक्यत्वादिति चेत्? न। एवं हि प्रतिव्यक्त्येव सान्तत्वमुपपद्यते न तु सन्ततेः।

ननु मा भूतसन्ततेः सान्तत्वोपपत्तिरस्माकं पक्षे हि सन्ततिर्नहि पारमार्थिकं वस्तु, किन्तु सांवृतिकमेव! वस्तुभ्यः पृथक् सन्ततेरप्रमाणगोचरत्वात्। किं च कालदेशयोरपि सांवृतिकत्वमेव। सीमितासीमितविचारश्च कालदेशापेक्षः। संख्यापि दिक्कालभेदावलम्बिनी तयोरभावे निरस्तैव। ततश्च किं कुतोऽयं सीमितासीमितविचारः क्रियते! अस्माकं पक्षे क्षणप्रध्वंसित्वाद्वस्तूनां सान्तत्वं; न तु देशकालसीमापेक्षया। सान्तानां च विज्ञानानां नास्ति समुदायो येन तदपेक्षयाऽनन्तसिद्धिः स्यादुत्पन्नविनष्टानां समुदायाभावात्। न च बुद्ध्यारूढस्तु समुदायोऽस्त्येवेति वाच्यम्। न हि कल्पनयाऽवस्तुनो वस्तुत्वं शक्यम्। ततोऽसीमपूर्णतत्त्वं कल्पनामात्रमेव। तदवलम्बश्च स्थिरविज्ञानवादोऽप्यपास्तः। ततः क्षणिकविज्ञानवाद एवोपपद्यते। ननु क्षणिक-विज्ञानपक्षे कथं पूर्वविज्ञानस्योत्तरविज्ञाने प्रभाव उपपद्यते कारणानन्वितत्वात् कार्यस्येति चेत्? न। स्वभावस्यापर्यनुयोज्यत्वात् स्वभावस्यापर्यनुयोज्यत्वं भवताऽप्यङ्गीकर्त्तव्यमेव। अन्यथा विज्ञानस्यापि विज्ञानत्वं कुत इत्यपि पर्यनुयोक्तुं शक्यम्? अग्नेर्दहनस्वभावः, जलस्य शीतगुणत्वं वा कुत इत्यपि पर्यनुयोक्तुं शक्यम्? वस्तुतस्तु स्थिरभाववादावलम्बेनैवासीमवस्तुन उपपत्तिर्भवति तदवलम्बेन च विज्ञानाद्वैतं नित्यमित्यन्योन्याश्रयदोषोऽपि स्थिरपक्षे विभावनीयः।

यत्त्वाह श्रीशंकराचार्यः—"पूर्वविज्ञाननाशानन्तरमुत्तरविज्ञानोत्पत्तिस्वीकारेऽभावादेवोत्पत्तिः पर्य-

वस्यति ततश्चाभावत्वाविशेषात् सर्वं विज्ञानं निर्विशेषं स्यात् ? अथभावेऽपि विशेषोऽङ्गीक्रियते तर्हि सोऽपि भाव एव स्याद्विशेषवत्त्वात्" इति । विनश्यदवस्थ एव पूर्वविज्ञान उत्तरविज्ञानस्योत्पत्तिस्वीकारात् । ननु उत्पन्नमात्रस्यैव विज्ञानस्य विनाशे किम्प्रमाणम् ? उच्यते–विनाशे निरपेक्षत्वात् । अन्यथा किञ्चिदपि तस्य स्थितौ कदापि विनाशो न स्यात् स्थितिस्वभावत्वादिति चेत् ।

अत्रोच्यते—अत्रेयमाशङ्काऽऽविर्भवति--एवं तूत्पत्तिमात्रेण तस्य सत्स्वभावत्वलाभात् स्वभावस्यानपायितया कदापि विनाशो न स्यात् ? ततः स्थिरविज्ञानोपपत्तावसीमपूर्णतत्त्वमपि सिध्यति । असीमतत्त्वोपपत्तौ च विज्ञानाद्वैतं नित्यमेकमिति सिध्यति ।

ननु यद्येकमेवासीमं पूर्णं नित्यं च वस्त्वस्ति तर्हि द्वैतप्रतीतिः कथं भवति ! अविद्यात इति चेदविद्या वस्त्ववस्तु वा ? यदि वस्तु, तर्हि तस्मादसीमाद्भिन्नमभिन्नं वा ? यदि भिन्नं, तर्हि द्वैतापत्तिः । यद्यभिन्नन्तर्हि सर्वदैव द्वैतप्रतीतिप्रसङ्गः कदापि च तत्त्वज्ञानं न स्यात् । ततश्च सर्वदैव बन्धापत्तिः । न च तत्त्वान्यत्वाभ्यामनिर्वचनीया साऽविद्येति वाच्यं, न हि तत्त्वान्यत्वोभयकोटिविनिर्मुक्ते वस्तुनि प्रमाणमस्ति । यद्यवस्तु, तर्ह्यर्थक्रियाकारित्वविरहेण द्वैतप्रतीतिहेतुत्वं तस्या न प्राप्नोति; अवस्तुनोऽप्यर्थक्रियाकारित्वे शशविषाणस्याप्यर्थक्रियाकारित्वप्रसङ्गः । एतदेव हि वस्तुत्वमवस्तुत्वं च, यदर्थक्रियाकारित्वस्य भावोऽभावश्चेति चेत् ? न,

द्वैतप्रतीतिरपि विवर्त्तमात्रं, न तु पारमार्थिकं वस्तु, यस्या हेतुं भवानन्वेषते । न च द्वैतप्रतीतिर्यदि प्रतीतिमात्रं तर्हि द्वैतप्रतीतेः प्रतीतिरस्तु पारमार्थिकं वस्तु, तस्या हेतुनाऽवश्यं केनापि भवितव्यम् इति ।

[ क्रमात् । ]



## "त्वम्"

श्रीजानकीवल्लभललितललाम शास्त्री

जीवनं वनं कण्टककीर्णम्
तरणं जगतो, मरणं जीर्णम्
सत्त्वन्ते द्वाभ्यामनिगीर्णम् ।

कमनीयकुन्दकोरककषणम्,
रमणीयं परमरमावसनम्
मन्दीकृतमुक्तन्ते दशनम् ।

गतलक्ष्म मृगाङ्कशतप्रमुखम्
पश्यत्स्वयं स्वसुपमासु सुखम्
कमलादमलन्तव मञ्जुमुखम् ।

वर-वेणुवल्लकीगुणरसनम्
आत्मन्यात्मनस्सरसलसनम्
समशर्मवसनर्माय ! तव हसनम् ।

त्वरितं तडिदिव मानसहरणम्
सरणोत्क-मदसु-रोधन-शरणम्
नयनन्ते शिव-शत-सत्करणम्

कामुकतनुहृदयविदयदलनम्
छलनं स्मरस्य। मन्दं वलनम्
पथि पाटलकलनं ते चलनम्

पीयूषशीकरस्यन्दपरम्
संस्फुरणैस्सुमनोमनोहरम्
अनुनयामि ! तव वितथामिधमधरम् ।

रमणीयरहस्यराशिलासिनि !
कोमलकलिकापरिमलहासिनि !
प्राणायिताऽसि मानसवासिनि !

# व्यवहार-वैचित्र्यम्।

( डा० ब्रह्मानन्द संन्यासी शास्त्री पी. एच. डी. )

वयं भारतीया जगद्गुरव इति मन्यमानानां कृतेऽवश्यं विचारणीयोऽयं लेखो भविष्यतीति मत्वा प्रकाशनार्थं प्रेषितः।

आदिजनवर्गस्य ज्ञानं तु स्थावरस्मारकैः, उपयन्त्रैः चित्र-धर्म-जीवनवृत्ति-यत्किञ्चित्प्राप्यते सम्प्रति, तद्द्वारा तथा पुराण—कथा द्वारा, एवं प्रचलितैः साम्प्रतिकैराचारैः सह पूर्वकालीनाचार विचाराणां तुलनया ज्ञायते। अधुनाऽप्येतादृशो जनोऽवलोक्यते यं दृष्ट्वा वयं कथयामः "प्राचीन-पुरुषोऽयमिति ( पुराणा आदमी है )" इति। इत्थं वयं निश्चिनुमः के शिक्षिताः, केऽशिक्षिताः, केऽर्ध-शिक्षिता इति पाश्चात्यानां मतम्।

आस्ट्रेलिया ( Australia ) देशस्याऽऽदिनि-वासिलोकः शारीरिकविषये भाषाविज्ञानविषये च मेलेनसियन (Melansian) देशेभ्यः पार्श्ववर्तिभ्यो-ऽत्यन्तं भिन्नो दृश्यते। स्वनिवासार्थं स्थाय्यस्थायि वा गृहनिर्माणमपि न करोति। कृषिं न करोति, श्वानं विहायाऽन्यपशुपालनमपि न करोति। भाण्डारादिनिर्माणकला त्वतीवदूरे। जीवननिर्वा-हस्तु मृगयासम्पादितमांसेन कन्दमूलेन वा भवति। न तेषु कोऽपि राजा वा प्रधानश्च। वृद्धा अस्मिन् विवादे निर्णयं कुर्वन्ति।

तद्देशस्थजनेषु 'टोटेम' इति प्रथैका धर्मे समाजे च वर्तते। एते निवासिनो अनेक समूहेषु ( Sept ) विभक्ताः सन्ति। प्रत्येक समूह आत्मानं 'टोटमः' (Totem) इति मनुते। आनुकूल्यानुसारेण टोट-मशब्दः तेषां निरुपद्रवखाद्यप्राणिविशेषे भयङ्कराऽ-खाद्यप्राणिविशेषे वा रूढः।

आदौ टोटमजातेः पुरुषस्तेषां संरक्षक आसीत्। यदाकदा भविष्यद्वाणीमपि करोति यत् तत्र यः टोटमजन्तुविशेषो वर्तते स जानाति, स्वयं क्रूरः सन्नपि स्वसंततिं परिरक्षति। व्यभिचरति चेद् दण्डभाग् भवति।

मनुष्येषु टोटमजातिर्मातृवंशपरंपरया वा पितृ-वंशपरंपरया प्रचलति। टोटमेन सह सम्बन्धस्था-पनं तेषु सामाजिककर्तव्यं विद्यते। तैः स्ववर्गादपि ( beyond the tribal relation-ship ) बहिः सम्बन्धः संस्थाप्यते, अतो विवाहः स्वगोत्रे (Consauguineous relation-ship) परित्यज्यते।

टोटमजातिर्न कस्मिंश्चित्प्रान्ते ग्रामे वा वसति, किन्तु तज्जातिसमुद्भवास्सर्वे जनाः परस्परं मैत्र्येण यस्मिन्कस्मिन् टोटमवर्गे निवसन्ति।

सम्प्रति तेषां या विलक्षणप्रथा वर्तते सैव वर्ण्यते। ते कुत्रापि वसन्तु किन्तु सार्वजनिकोऽयं नियमो यत्स्वगोत्रे न केनापि दारपरिग्रहणं कार्य-मिति। "The members of the same To tem are not allowed to enter in to sexual relation with each-other; that is, they cannot marry each-other" अर्थाद्भिन्नगोत्रे ( Exogauny ) विवाहविधिः। व्यभिचरितत्वे कोदण्ड इति कतिपयोदाहरणद्वारा श्रीमतां सुप्र-भातपाठकानां ज्ञानाय प्रदर्श्यते।

आस्ट्रेलियादेशे निषिद्धजातौ भोगविलास ( Sexual intercourse ) करणे प्राणदण्ड एव दण्ड इति श्रीयुत फ्रेजर्स ( fragers ) महोदया भाषन्ते। नायं तत्र विचारो यत्स्त्री स्ववर्गीया वा कुतश्चिद् वन्दीकृत्याऽऽनीता। यस्तामुपभुङ्क्ते स स्वजातिबन्धुभिर्विहन्यते! किन्तु यदि किञ्चित्कालपर्यन्तमितस्ततो गत्वा द्वावप्यात्मानं गोपयतस्तदा तयोरपराधोऽनपराधो भवति।

न्यूसाउथवेल्स ( New South Wales ) देशे पुरुषस्तु कदाचिद्विहन्यत एतन्निमित्तं, परन्तु प्रायः स्त्रीस्त्ववश्यं प्रताड्यते वा प्रासेन निसूद्यते यावत्सा न म्रियते। श्रीमद् होविट ( Howitt ) महोदयाः कथयन्ति विलक्षणेऽस्मिन्नियमे नियमोल्लङ्घनकर्ता घृणास्पदो भवति विहन्यते च।

वंशपरम्परायां दारपरिग्रहणेन न किमपि परिवर्तनं भवति। यथा कङ्गारू (Kangaroo) नामधेयजातेः कश्चित्पुरुषः ईमु ( Emu ) नामधेयजातेः कन्यां परिगृह्णाति तदा तत्संततिः 'ईमु' इति प्रबुद्ध्यते। एतत् 'टोटमनियमानुसारेण स्वगोत्रत्वा'न्मातृभगिन्योर्व्यभिचारार्थं न कोऽपि प्रवर्तते। किन्तु पिता यः खलु कङ्गारूजातेर्विद्यते स स्वदुहित्रा 'ईमूपाधिनाऽलङ्कृतया' सह रमणे स्वतन्त्रः।

यत्र पितृगोत्रपरम्परा विद्यते तत्र पिता यदि कङ्गारुस्तर्हि संततिरपि कङ्गारुनाम्नैव प्रसिद्धा भवति। तत्र पिता स्वदुहित्रा सह भोगविलासे न प्रवर्तते किन्तु पुत्रो यः कङ्गारूरस्ति स स्वमात्रा ( ईमुना ) सह सानन्दं रतिविलासे सम्प्रवर्तते। स्वपत्नीं विहाय स्वगोत्रातिरिक्तस्त्रीभिस्सह क्रीड़ाकरणं महानपराध इति गण्यते। ताभिः सार्धं स्वोदरसम्बन्धेन वर्तितव्यमित्यस्ति नियमः।

श्रीयुत एल. एच. मोर्गन ( L. H. Morgan ) महोदया लिखन्ति। तत्र पुत्रः स्वजनकमेव न केवलं 'हेपितर्' इति सम्बोधयति किन्तु टोटमनियमानुसारेण स्ववर्गस्य सर्वानपि जनान् तत्सम्बोधनेनैवाऽऽह्वयति। स्वजननी केवलं न माता किन्तु सर्वा अपि स्त्रियो मातृशब्देनैवाऽऽहूयन्ते। सोदरा एव न तत्र भ्रातरो भगिन्यश्च। परन्तु स्वजातौ समुत्पन्नाः सर्वे बालका बालिकाश्च। तेषु शारीरिकसम्बन्धापेक्षया सामाजिकसम्बन्धो विशेषतया दृश्यते! श्रीयुत रिवरण्ड एल फिसरः ( Rev. L. Fisor विस्पष्टयति यत् कतिपयपुरुषाः कतिपयास्त्रियो गृह्णन्ति तेनोपर्य्युक्तसम्बन्धो नाऽन्यथा प्रतिपद्यते।

टोटममहासमुदायो वैवाहिकसम्बन्धेन ( Phratries ) द्विधा विभक्तः, पुनरस्य प्रत्येकसमुदायः द्विधा विभज्यतेऽर्थाच्चत्वारस्समुदाया (Subphratries ) भवन्ति। पुनस्तेषु प्रत्येकं समुदायस्त्रिधा विभज्यते।

इत्थं महासमुदायो द्वादशधा विभक्तः। c टोटमवर्गस्थाः e टोटम वर्गस्थैः सह तथा d वर्गस्थाः f वर्गस्थैः सह विवाहादिकं कुर्वन्ति। स्वैच्छिकसम्बन्धस्तु निषिध्यते। टोटमसमुदायस्य प्रत्येकव्यक्तिः समस्तसमूहे $\frac{1}{12}$ स्त्रीसंख्यां वरितुं लभते! तास्वेव कामपि स्वप्रमदां कर्तुं शक्नोति। मुख्यसमुदायस्य द्विधाकरणेन प्रतिपुरुषं $\frac{6}{12}=\frac{1}{2}$ स्त्रीसंख्याऽवशिष्यते। a वर्गस्थः पुरुषः ७, ८, ९, १०, ११, १२ समूहेषु विवाहादिकर्म करोति। पुनर्विभक्तत्वात् $\frac{3}{12}=\frac{1}{4}$ संख्याऽवशिष्टा भवति तेन a वर्गस्थ पुरुषः केवलं १०-११-१२ वर्गस्थैः सह विवाहादिकं करोति।

सम्प्रति तेषां वन्यानां ( Savages जंगलियों

के ) आचारविषये किञ्चिल्लिख्यते । अयमाचारः 'अवगुण्ठनम्' (Avoidance) इति शब्देनैवाऽग्रेऽह मुल्लेखिष्यामि ! अवगुण्ठनमिदं ( लज्जा, वा पर्दासमान है ) न केवलं तस्मिन्नेव देशे विलोक्यते परन्त्वनेकेषु देशेषु स्वराज्यं प्रसारयत्तिष्ठति ।

मेलेन्सिया ( Melansia ) प्रदेशे सुतः स्व-स्वसुर्मातुश्चेदमवगुण्ठनं करोति ।

लेपर्सद्वीपे (Lepers Islands) न्यू हेब्रिड्स (New Hebrides ) जातौ सूनुर्निर्धारितवयसि स्वमातृगृहं परित्यज्य सार्वजनिकगृहे ( Club-house ) निवसति तत्रैवात्ति स्वपिति च । भोजनार्थं गृहे समागन्तुं शक्नोति परं यदि तस्य स्वसा गृहे स्यात् तर्हि भोजनमभुक्त्वैव प्रतिनिवर्तते । यदि सा नो चेद् गृहे स देहलीसमीप उपविश्य खादित्वा गच्छति । दैवाद्यदि स्वसृदर्शनं मार्गे सञ्जातं तर्हि सा शीघ्रं पलायति वा परिवृत्योपतिष्ठति । यस्मिन्मार्गे तस्या अग्रगामिन्याः पादचिह्नानि विलोक्यन्ते तस्मिन्मार्गे भ्राता न गच्छति । परस्परं नामोच्चारणमपि न कर्तुं शक्यते । अवगुण्ठनमिदं यौवनमारभ्याऽऽजीवनमनुष्ठीयते । माताऽपि स्वपुत्राय भोजनं ददाति किन्तु स्पर्शो न क्रियते, तस्य पुरस्तात्स्थाली परिस्थाप्यते । माता स्वपुत्रं तस्य नाम्ना नाऽऽह्वयति यथाऽन्यदेशेषु दृश्यते । ईदृशमवगुण्ठनं न्यूकेलिडोनिया ( New caledonia ) प्रदेशेऽपि दरीदृश्यते यथा कश्चित्स्वभगिनीं मार्गे मिलति तदा सा सहसा पलायित्वाऽऽत्मानमन्तर्धत्ते । एवं भ्राताऽपि विमुखी भूयाऽग्रे प्रचलति ।

न्यूब्रिटेना ( New Britain ) ऽन्तर्गतगेसि लाद्वीपकल्पे ( Gazilla Peninsula ) विवाह-समयमारभ्याऽऽमरणम् स्वश्वश्र्वा सह सा न वक्ति, यदि स्यात्तस्य प्रयोजनं स्वभावं वक्रोक्त्या प्रकटयति ।

न्यूमेक्लेनवर्ग ( New Mecklanburg ) देशे भ्राता भगिनीनिकटे न गच्छति, न किमपि हस्तेन ( स्पर्शेन ) ददाति किन्तु निर्णीतान्तराले तिष्ठन्तौ परस्परं वदतः । तस्या भोगकरणे मृत्युदण्डस्यैव विधानमिति ।

फिजीद्वीपे ( Fiji Island ) अधिकमिदमवगुण्ठनमवलोक्यते । तत्र गोत्रसम्बन्धस्तु गौणः सामाजिकसम्बन्धो मुख्यो वर्तते ।

सुमात्रा ( Sumatra ) देशस्थबट्टा ( Batta) निवासिषु निकटसम्बन्धिष्वपीदमवगुण्ठनं विद्यते यथा स्वस्वस्रा सह सायंतनोत्सवे ( Evning Party ) उपस्थितिरतीव गर्हिता मन्यते । गृहेऽपि कस्याचिदेकस्योपस्थितौ द्वितीयस्य बहिरेवावस्थानं सुनिश्चितम् । पिताऽपि स्वपुत्र्या सह गृहे नाधिकं तिष्ठति यथा पुत्रः स्वजनन्या सह ।

आफ्रिका देशस्य डेलागोवाखातस्थ ( Delagoa Bay ) बोरोङ्गो ( Borongo ) निवासिषु श्यालपत्नीं प्रति विलक्षणव्यवहारो विज्ञायते । दैवात् तयोर्मार्गे मेलनं जातं चेत्सा येनकेन प्रकारेणात्मानं तिरोभावयति । अयमपि न कदापि तया सह भुङ्क्ते, न तस्या मन्दिरं प्रविशति; एवं कुशलवादमप्यतीवभीत इव करोति ।

ब्रिटिशपूर्वाऽफ्रिकादेशे अकम्बा ( Akamba ) जातावपीदमवगुण्ठनं वर्तते । यथा युवावस्थापन्ना कन्या स्वपाणिपीडनपर्य्यन्तं स्वपितुरप्यात्मानं दूरे रक्षति । न मार्गे सम्मुखी भवति वा गृहे पितुः

समीप उपविशति । पाणिग्रहणानन्तरं न कोऽपि प्रतिरोधः।

अनेकस्थलेषु श्वशुरं प्रति श्वश्रूं प्रति च पुरुषस्य नार्या वाऽवगुण्ठनं प्रतीयते ।

बेंक्सद्वीपे ( Banks Island ) अवगुण्ठनमिदमतीव विलक्षणं भाति । पुरुषः स्वश्वश्रूसम्मुखे न याति, यदि दैवान्मार्गे समागमः सञ्जातश्चेत्तर्ह्येकस्तु परिवृत्य तिष्ठति यावद्वितीयो दृष्टिपथं नातिक्रामति ।

वेना लावा ( Venna Lava Pont Pattersan ) प्रदेशे जामाता यन्मार्गे स्वश्वश्रूर्गता तन्मार्गे तावन्नगच्छति यावत्समुद्रोर्मिभिस्तस्याः पादचिह्नानि न स्युर्विनष्टानि । इमौ किञ्चिद्दूरे तिष्ठन्तौ परस्परं वार्तालापं तथा नामोच्चारणमपि कुरुतः ।

सोलोमन ( Solomon Islands ) देशे दारपरिग्रहणानन्तरं जामाता कदाचिदपि श्वश्र्वा सह न परिभाषते । मार्गे जाते सम्मेलने जामाता शीघ्रं पलाय्याऽऽत्मानं गोपायति ।

झुलुकाफिर ( Zulu Kaffirs ) जातौ जामाता स्वश्वश्रूसन्निधौ लज्जते न तस्या वासगृहं प्रविशति । यदि पथि समागमस्तर्हि स स्वमुखाग्रे चर्म फलकं ( Shield ) परिदधाति, सा वृक्षपृष्ठभागे गत्वोपतिष्ठति । यदि नो चेत्किमपि साधनं सा व्यवहारपरिपालनार्थं स्वमुखं तृणानि स्ववदनारविन्दाग्रे परिधृत्याऽऽवर्तयति । तयोः परस्परव्यवहारः तृतीयव्यक्तिद्वारा भवति । अथवा दूरे तिष्ठन्तौ वक्रोक्त्या कुरुतः । परस्परं नामोच्चारणमपि न क्रियते ।

नाइल ( Nile ) नदीतीरे वसतां वसोगास ( Basogas ) निवासिनां जामाता यदि स्वश्वश्रूः केनचिदन्तरायेण व्यवहिता तर्हि तया सह वक्ति, नाऽन्यथेति ।

वनवासिनामशिक्षितानां जंगलिपदवाच्यानामाचारा विचाराश्च संक्षेपेण श्रीमतां सुप्रभातपाठकानां विचारार्थं प्रकाशिताः । विद्वांसो जना ज्ञास्यन्ति के खल्वस्मत्समाजेऽशिक्षितानां जंगलिपदवाच्यानां नियमास्सन्ति ।

विदाङ्कुर्वन्तु श्रीमन्तः सम्प्रत्युपर्युक्ताचारविचाराणां परिपालनं सभ्यताऽसभ्यता वा ?



## ❋ प्रहेलिका ❋

विरिञ्चिभूतेश-रमाधवात्मा
　　को नामदेवोऽवततार लोके ॥
स एव शब्दो लटि विद्यते च
　　विचक्षणैर्धातुरयं सुवाच्यः ॥

अस्यास्तु मान्याः प्रतिभाविशिष्टाः
　　साहित्यवारांनिधिसञ्चरीकाः ॥
पद्यानुसारेण सदुत्तरं नः
　　प्रहेलिकासत्कृतिनो वदन्तु ॥

श्रीगोविन्दाचार्यः सुरपुरम्

# दृश्यादृश्यवाद-मीमांसा ।



दैवज्ञवाचस्पतिः श्रीदाऊजी दीक्षितः, होराशास्त्र-मार्त्तण्डः ।

साम्प्रतं पञ्चाङ्गानामेकीकरणविषये यत्र तत्र महदान्दोलनं प्रचलीचलीति । अस्य साफल्यन्तु संशयग्रस्तमेवास्ति ।

आधुनिकानां पाश्चात्यपद्धतिमनुसरतां गणितज्ञानां सिद्धान्तोऽयं साम्प्रतं प्रचलति यन्नवीन परिपाट्या वेधोपलब्धसूर्यचन्द्रादिना पञ्चाङ्गनिर्माणं समीचीनमस्ति । मोहमयी-पूना प्रभृतिनगरेषु केतकी—ग्रहगणितानुसारं पञ्चाङ्गनिर्माणं भवति । इमे विविधयुक्तिप्रदर्शनद्वारा प्रत्यक्षगणनामेव साधयन्ति, प्रयतन्ते च यद्भारतीया अपि नूतनामेव सरणिमनुकुर्युरिति । भविष्यति काले यत्किमपि वा फलं विचारपरिवर्तनं वा भवतु परमिदानीन्तु ते प्राचीनमहर्षिप्रणीत-दृश्यादृश्य गणनाभेदस्य कारणमज्ञात्वैव तत्र स्थूलत्वदोषमारोपयन्ति । सूर्यसिद्धान्त-प्रतिपादिते वर्षमाने ८३ सार्द्धाष्टपलस्यान्तरं वेधतः साधयन्ति । परन्ते जानन्तु यत् सूर्यसिद्धान्तप्रतिपादितं वर्षमानं प्राचीनवेध-परिपाट्या निरन्तरमेव । यतः—

"अथ समायां भूमावभीष्टकर्कटकेन
त्रिज्यामिताङ्कैरङ्कितेन"

प्राचीनवेधपरिपाटीसिद्धान्तप्रतिपादिते सौरवर्षमाने सावनदिनादिकमद्याप्युपलभ्यते । नास्त्यत्र मनागपि सन्देहावसरः । परन्तु वेधोपलब्धे सौरवर्षे सावनदिनादिग्रहणं प्रत्यक्षगणनयात्र पञ्चाङ्गनिर्माणं स्थिरीकुर्वते । एवंस्थिते प्रश्नोऽयमुदेयात् नवीनपद्धत्या सूर्यचन्द्रद्वारा प्राप्त तिथ्यादिकमस्माकं धर्मकर्मादौ समुचितं नवेति यतः सिद्धान्तकारैस्तु नलिकादियन्त्रद्वारा वेधप्राप्त-बीजविशिष्टग्रहेभ्यः पञ्चाङ्गं निर्माय यज्ञादिनिर्णय एव समुपदिष्टः । उक्तञ्च—

ध्यानं ग्रहोपदेशात्
बीजं ज्ञात्वा सुदैवज्ञैः ।
तत्संस्कृतग्रहेभ्यः
कर्त्तव्यौ निर्णयादेशौ ॥

अन्यत्र-अनन्तसुधारसकरणे विजयलक्ष्मीटीकायाम्—

जीवभौमार्किभोगीन्द्राः
बीजदानेन संस्कृताः ।
निरन्तराधुना सूर्य-
सिद्धान्तादवगम्यते ।

अन्यदप्युक्तं सिद्धान्तरत्नेः-
प्राचीनादित्यसिद्धान्तात्
बीज-संस्कार-संस्कृताः
धर्मपर्वादिकार्येषु ज्ञेया गणकपुङ्गवैः ॥

इत्यादि पूर्वाचार्यकथनेन ग्रहेषु समये समये कालजन्यं शिथिलत्वं यत्समायाति तन्निरासार्थं बीजसंस्कारोऽप्युक्तः । अतो बीजसंस्कृतग्रहेभ्य एव पञ्चाङ्गं निर्माय धार्मिकपर्वादीनां निर्णयो विधेयः ।

अस्माभिः स्वीयप्राच्यसिद्धान्तकीर्त्तिरक्षायै सूर्यसिद्धान्तोपदिष्टसरण्यां ससाधितग्रहेषु काला-

# "प्रेम"

"ललितललाम"

श्रोष्यसि? कथयाम्यद्य समीपे ते हृदयोपाख्यानम्,
द्रक्ष्यसि? पदे पदे पतितं मे मृदुमनोरथं श्यानम् ।
किं न विश्वविश्रुतं श्रुतं मनसो मे मूकाह्वानम्?
चिन्ताग्निज्वलितं न लोकितं मदसुस्तृतश्मशानम्?
अवसानं नासीदाशाया मत्प्रणयास्वीकारे,
आसं नो मूर्च्छितो विस्मरणमात्रोद्गते विकारे ।
मन्तुं किं मन्येय नु निद्रायास्तां नाधिगतश्चेत्!
स्वयमीशिषे, जागरायां शून्यं खं दृष्टं न भवेत्?
पुञ्जीकृताभिलाषो जीवेयं कथं न भूलोके?
हृदयेशाधिष्ठितहृदयं दीर्णं किं नु भवेच्छोके?
निष्ठानिष्ठितसमशक्तिः, स्वयमेव परीक्षा प्राप्ता,
साधना-गता किङ्करीव वश्येयं वसुधा व्याप्ता ।

× × × ×

प्रेम, हेमकषणं यथाऽस्ति
जीवनस्यास्य लुलितस्य,
त्वादृशोऽपि निष्ठुरो भवति
वश्योऽवश्यं प्रिय! यस्य ।

---

न्तरजन्यदोषमपसार्य—बीजसंस्कारद्वारा-सूर्यादिभ्यस्तिथिपत्रनिर्माणं विधेयम् । एवमकृत्वैव ये प्राच्यसिद्धान्तं दूषयन्ति ते सर्वथा-शास्त्रविरुद्धमेव कुर्वन्ति । यदाचार्यैर्बीजसंस्कृतग्रहाः भूकेन्द्रीया ग्रहत्वेनाम्नाता अतो बीजविशिष्टा-एव ग्रहाः पञ्चाङ्गनिर्माणे समुपयुक्ताः ।

अत्र केषाञ्चन विप्रतिपत्तिरियं भवेत् यत् "प्राचीनाचार्यैः पृथिव्याश्चलत्वेऽपि भूकेन्द्रस्य निश्चलत्वमेव स्थिरीकृतमिति बीजसंस्कारदानं सर्वथाऽनुचितमेव ।" परन्तु नैवं विचारणीयम् यतो भूकम्पादिभिर्दैवोत्पातैर्भूकेन्द्रस्यापि परिवर्तनं भवति । एतद्धिज्ञायैवाचार्यचरणै रुक्तम्:—

प्रचलति केन्द्रः काले
भूगर्भस्यापि तत्त्वविकृतेन ।
भूम्युत्पाता विविधा
अग्निनीरवायुसंघर्षधूमैश्च ।
उत्पद्यन्ते ग्रहाणां
दोषाः कालान्तरेऽपि गत्यादौ ।
कारणमेतद्धाने
बीजस्योक्तं महर्षिभिः पूर्वम् ।

अतो भूकेन्द्रीयग्रहेषु बीजसंस्कारदानमावश्यकम् । शास्त्रकारै रेतेषां ग्रहाणा-मदृष्टसंज्ञा विहिता ।

# संस्कृतसाहित्ये स्त्रीणां स्थानम्

[ ले० दर्शनकेशरी पं० श्रीगोपालशास्त्री, साहित्याचार्यः, न्यायतीर्थः, व्याकरणशास्त्री ]

सम्प्रति भारतीयानां बहूनामियं धारणा विद्यते यद्वेदादिषु सर्वेष्वपि संस्कृतशास्त्रेषु स्त्रीणामनादरभावस्तासां पुरुषापेक्षया न्यूनमहत्वं च वर्णित मस्तीति । किं बहुना बहूनान्तु इयं धारणा विद्यते यद् "नरकस्य द्वारं नारी" इत्यादि स्त्रीजाति-निन्दैव संस्कृतसाहित्ये सर्वत्र सम्भृता विद्यत इति । अत्र विषये वेदस्यान्तिमभागस्य वेदान्तस्य सर्वमान्यस्य कियन्ति वाक्यान्यद्याहं विज्ञानां पुर उपहरामि । तेऽत्र दत्तावधाना भवन्तु । स्वयञ्च ते महात्मानोऽत्र सुप्रभाते स्वकीय विमर्शं प्रकाशयन्तु । वस्तुतः संस्कृत-साहित्ये स्त्रीणामवज्ञैवोपनिबद्धास्ति । आहो दृश्यते क्वापि तासामभ्यर्हणा ? यदि संस्कृत शास्त्रे तासां निन्दैव कृता दृश्यते तत्र को हेतुः ? कुत्र च तासां कुत्सा विद्यते कुत्र च तासां समर्चा दृश्यते ? कस्मिन्नंशे कुत्सा कस्मिन्नंशे चाभ्यर्हणा इत्यादिविषये सर्वेऽपि विज्ञाः स्वीयं विमर्शं प्रकाशयन्तु ।

अत्राहं सम्प्रति निदर्शनरूपेण कियन्ति वाक्यानि वेदान्तगानि विज्ञानां पुरस्तासामुन्नतपदप्रतिपादकानि उद्धरामि—

तद्यथा तैत्तिरीयोपनिषदि श्रूयते—

"अथाधिप्रजम् माता पूर्वरूपम् पिता उत्तर रूपम् प्रजासन्धिः प्रजननम् सन्धानम्" अत्र हि संहितोपनिषद्व्याख्यानप्रसङ्गेन अधिप्रजसंहितायां मातुरेव पूर्वरूपत्वमभिधाय पितुरुत्तररूपत्वाभिधानेन स्पष्ट मेव स्त्रीणां पुरुषापेक्षयाऽभ्यर्हितत्वमभिहितम् । तत्रैवोपनिषदि वेदाध्ययनानन्तरं समावर्तनवेलायामाचार्यकृतान्तेवासिसदुपदेशप्रसङ्गेन श्रूयते-'मातृदेवो भव, पितृदेवो भव,' इति अत्रापि प्रथमं मातुरुपादानं ततश्च पितुरुपादानमिति स्पष्टमेव स्त्रीणां पदं पुरुषापेक्षया समुन्नतं प्रदर्शितम् ।

इत्थं हि धर्मशास्त्रेष्वपि-स्त्रीणामेवाभ्यर्हितं स्थानं पुरुषापेक्षया समुपलभ्यते तथाहि—

"उपाध्यायान् दशाचार्य्य आचार्य्याणां शतं पिता सहस्रन्तु पितॄन् माता गौरवेणातिरिच्यते"

इति स्पष्टमेव पितुरपेक्षया मातुः सहस्रगुणाधिक्याभिधानेन पुरुषापेक्षया स्त्रीणां पदमत्युन्नतं प्रमाणितं दृश्यते

अत एव द्वन्द्वसमासे 'स्त्रीपुंसम्' इत्यत्र स्त्रिया एवाभ्यर्हितत्वेन पूर्वनिपात उपलभ्यते । सर्वत्रैव 'पार्वतीपरमेश्वरौ' 'सीतारामौ' 'लक्ष्मीनारायणौ' इत्यादिषु 'अभ्यर्हितञ्चे' त्यनेन स्त्रीणामेव पुरुषापेक्षयाऽभ्यर्हितत्वेन पूर्वनिपातः कृतोऽवलोक्यते । वेदसाहित्ये च आत्रेयी—गार्गी—मैत्रेयी—प्रभृतयः प्रसिद्धाः सर्वमान्यास्त्रियो विद्यन्ते । किं बहुना वृहदारण्यकोपनिषदि विदेहसभायां कुरुपाञ्चालादिसर्वदेशविज्ञानिवर्गविमण्डितायां वाचक्नवी गार्गी एवाभ्युन्नतम्पदमभ्युपगता याज्ञवल्क्यं प्रश्नद्वयेन परीक्ष्य सर्वान् विदुष उवाच "ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्य

जेता" इति निर्णयं दत्त्वा उपरराम। एतेन स्त्रीणां पदं वेदसाहित्येऽतीव समुन्नतं विद्यत इति विज्ञात मेव स्याद्विदुषाम्

सर्वधर्मशास्त्राभ्यर्हितेन मानवधर्मशास्त्रेण तु स्त्रीणां गृहलक्ष्मीत्वमेवोक्तम् "स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन"

यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः" इति

काव्ये पुराणे च विज्जका-मदालसा-प्रभृतयोऽभ्युन्नताः स्त्रियो दृश्यन्ते। विज्जकया तु स्वयमेवोक्तम्। "नीलोत्पलदलश्यामां विज्जकां मामजनता वृथैव दण्डिना प्रोक्ता सर्वशुक्ला सरस्वती" इत्येवं सर्वश्रेष्ठपदासीना नार्य्यः संस्कृतसाहित्येऽवलोक्यन्ते। विवेकशून्यैः केवलं विदेशीयबाह्यचाकचक्यचमत्कृतैः पाश्चात्यदोषानुकरणपरै रेकदा विलुलितायां भारतीय—समुन्नतस्त्रीमर्य्यादायां पुनस्तस्याः संस्थापनं दुस्तरमेव न स्यात् किन्तु असम्भव्येव स्यादिति न विस्मर्तव्यम्।

अवदधतु साम्प्रतिकाः पाश्चात्यसभ्यताप्रिया विकृतमस्तिष्का मानवाः यत्संस्कृतसाहित्ये स्त्रीणां कीदृग् समुन्नतं पदं प्रदत्तं विद्यते। ता हि तत्र गृहाधिष्ठात्र्योऽभिधीयन्ते। सर्वेभ्योऽप्याश्रमेभ्यो गार्हस्थ्यस्य श्रेष्ठत्वम्। तत्र च स्त्रीणामेवाधिपत्यम् दत्तं विद्यते। सर्वथा तास्तत्र समर्थाः। अतश्च गार्हस्थ्यसुखं भारत एव दृश्यते। नान्यत्र देशे गार्हस्थ्यसुखमस्तीति विज्ञा एव विदन्ति। अन्यत्र देशे नास्ति गेहाधिपत्यं स्त्रीणां। तास्तु पुरुषवत् सर्वामपि स्वजीवनयात्रासामग्रीं स्वयमुपार्जयन्ति। ता अपि पुरुषवत् विविधं कष्टं सहन्तेऽर्थोपार्जने पुरुषा अस्मत्तो विरक्तीभूय सम्बन्धविच्छेदं (तलाक) कृत्वा भार्य्यान्तरं न गृह्णीयुरिति पाश्चात्यदेशोद्भवा नार्य्यो विविधैः प्रयासैः पुरुषाणां वशीकरणे व्यापृतास्तिष्ठन्ति। नैव तास्तेषु देशेषु गृहलक्ष्मीत्वमर्य्यादयाऽलङ्कृताः। इह तु मनुनाऽभिहितम्—

पिता कौमारावस्थायां बालिकानां रक्षणं भरणपोषणादिना कुर्य्यात्। यौवनकाले च पतयो निजभार्य्या रक्षेयुः, सर्वथा स्वभार्याणां वस्त्रालङ्करणादिप्रदानेन तत्सत्कारं विदध्युः। वार्द्धक्ये च पुत्राः स्वमातरम् अभ्यवहरणाद्यावश्यकजीवनसामग्री-संप्रदानेन संरक्षेयुः, स्त्रीणां स्वयं स्वजीविकोपार्जनकष्टं कदापि नैवापतेदिति सर्वदैवावधातव्यम्। इत्यभिधानं सर्वप्रत्यक्षमेव विद्यते तथाहि-

पिता रक्षति कौमारे भर्ता रक्षति यौवने
पुत्रश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति।"

इत्येवं सर्वत्रैव संस्कृतसाहित्ये स्त्रीणां समुन्नतं स्थानं दृश्यते। तथापि साम्प्रतिकाः कथयन्ति यद् भारतीयसमाजे नास्ति स्त्रीणां महत्वम्।

तत्त एव जानीयुः। कीदृक् महत्वं तेषामभिलषितं विद्यते। मन्ये पाश्चात्यसभ्यताप्रियास्ते स्त्रीणामुन्नतं पदं तत्तद्देशानुरूपं स्त्रीणां पुरुषायितत्वमेवानुरोचन्ते। अस्तु कालमाहात्म्यमिदं यद्युग कालात्मा भगवान्न कुर्यात्तत्रैवाश्चर्य्यम्।

परन्तु अहन्तु सर्वानेव भारतीयान् विज्ञानिदमेव संक्षेपतो ब्रुवे यत् सति समय एव ते भारतीयां संस्कृतिं संरक्षितुं दृढपरिकरा भवन्तु।

श्रीजगद्गुरुपंचाचार्याः प्रसीदन्तु

# शक्तिविशिष्टाद्वैत-सिद्धान्त-निरूपणम्

अनुवादकः ॥ काव्यतीर्थः, तर्करत्नम्, पं० श्रीवृषभलिङ्गशिवाचार्यः, यिच्चाले बृहन्मठाधीशः

मैसूरु महाराजधानी प्रचलित-तत्त्व-शास्त्र-महा सभायां ( ता-२-४-१९३५ ) दिने वीरशैव-मतोद्धारकैः, नागनूरुबृहन्मठाधीश्वरैः पंडितवर्यैः श्री वे० काशीनाथशास्त्रि— महोदयैः प्रतिपादितं वीरशैवसिद्धान्तनिरूपणपरकविस्तृतभाषणमिदं कर्नाटकभाषया । तदद्य प्रियवाचकमहोदयानामवगाहनार्थं गीर्वाणभाषयाऽनूद्य प्रकाश्यतेऽस्मिन् भारतप्रसिद्धे 'सुप्रभाते" ।

निगमागमप्रसिद्धं वर्णाश्रमनिबद्धं वीरशैवमतमेतदनादिसंसिद्धमेवेति निर्विवादम् । श्री जगद्गुरुरेणुकादिपंचाचार्याः परशिवाज्ञया युगचतुष्टयेऽपि सोमनाथादिशिवलिङ्गमुखै रुद्भूय दिव्यदेहधारिणस्सन्तः मतमिदं वीरशैवनामकं प्रस्थापयामासुरिति शिवागमा मुक्तकण्ठ मुद्घोषयन्ति । एतेषां मताचार्याणां धर्मपीठानि रंभापुरी-( बाळे होन्नूरु ) उज्जयिनी-केदार-श्रीशैल-काशीत्यनुपमप्रथितशिवक्षेत्रेषु पूर्वकालादारभ्य अद्यावधि परिशोभन्ते । एते महाचार्या अस्मिन् लोके मानवनिवहोद्धाराय निगमागमप्रतिपादित-"शक्तिविशिष्टाद्वैतसिद्धान्तं" स्थिरीकृत्य "शिवसूत्र—ब्रह्मसूत्राणामुपरि भाष्यानि रचयित्वा च सर्वत्राऽपि स्वसिद्धान्तप्रचारं चक्रुः, सद्य स्तत्सिद्धान्तस्वरूपमत्र संक्षेपतो निर्दिश्यते ।

शक्तिविशिष्टाद्वैतपदार्थस्तु शक्तिविशिष्टयोशिशवजीवयोस्सामरस्यमित्येवावगन्तव्यम्, पूर्वाचार्यैरपि शक्तिविशिष्टाद्वैतपदव्युत्पत्तिः "शक्तिश्च शक्तिश्च शक्ती, ताभ्यां विशिष्टौ शक्तिविशिष्टौ (जीवेशौ) तयो रद्वैतं शक्तिविशिष्टाद्वैतं;" इत्येव प्रदर्शिता । शक्तिस्तु स्थूलचिदचिदात्मिका, सूक्ष्मचिदचिदात्मिका चेति द्विविधा; जीवः स्थूलचिदचिदात्मक शक्तियुक्तः, शिवः सूक्ष्मचिदचिदात्मकशक्तियुक्तश्चेति तयोरद्वैतं ( सामरस्यं ) शक्तिविशिष्टाद्वैतमित्युच्यते । शक्तिः परशिवब्रह्मण्यविनाभावसंबन्धेन वर्तमाना नित्योच्यते, एतद्विषयं "श्वेताश्वतर-श्रुतिः" :—

परास्य शक्तिर्विविधैव श्रूयते ।
स्वाभाविकी ज्ञानबलक्रिया च ॥

इत्यादि वाक्येन घोषयति । एतन्मन्त्रार्थपर्यालोचनया परशिवब्रह्मणि शक्तिः स्वभावसिद्धाऽऽस्ते, इयं शक्तिर्ज्ञान-क्रियादिरुपेण नानाप्रकारा वर्तत इति च प्रतीयते । "स्वाभाविकी" ति पदमत्र शक्ते नित्यत्वं घण्टाघोष मुद्घोषयति, एतद्विषयमेवैषा-श्रुति रन्यत्र :—

यदा तमस्तन्न दिवा न रात्रिर्नसन्न चासच्छिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी ॥

इत्यादि वाक्येन प्रतिपादयति । अस्यां श्रुतौ पुराणी— अनादिसंसिद्धा, प्रज्ञा=चिच्छक्ति,

तस्मात्=परब्रह्मणः, प्रसृता=क्रियाशक्त्याद्यनन्तस्वरूपकतया आविर्बभूवेति" शक्तेर्विकासः स्फुटतया निर्दिष्टः।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥

इत्येष मंत्रोऽपि ईश्वरस्य शक्तिवैशिष्ट्यमेव प्रतिपादयति। अस्मत्पूर्वाचार्यैर्मायाशब्दः "मं—शिवं-अयति-स्वभावतः प्राप्नोतीति माया" इति सव्युत्पत्तिकमुपवर्णितः, अतोऽद्वैतिभिर्माया मूलाविद्यारूपेति यदुच्यते तदसत्यम्, यतः सा माया विमर्शशक्तिरूपा एव वर्तते। एष मन्त्राभिप्रायः "सिद्धान्तागमे"ऽपि—

मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः।
मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी ॥

इत्यादि श्लोकद्वारा प्रतिपादितो दृश्यते।

आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागः।
सह स्वस्राम्बिकया तं जुषस्व ॥

इत्यस्मिन् "यजुर्वेदमन्त्रे" "स्वस्रा—अम्बिकया" इति पदद्वयपर्यालोचनेन शिवपरब्रह्मणि शक्ति स्स्वाभाविका एव वर्तत इति प्रतिभाति।

"नमः सोमाय च रुद्राय च"

इत्येष "श्रीरुद्र" मन्त्रोऽपि ईश्वरस्य उमारूपशक्तिवैशिष्ट्यं बोधयति। इममेवाभिप्रायं 'कैवल्यश्रुति" रपि—

"उमासहायं परमेश्वरम्"

इत्येतन्मन्त्रेण समर्थयति। एतद्रीत्यैव अनन्तानन्तश्रुतिवाक्यानि शक्तेर्नित्यत्त्वं शिवसमवेतत्त्वं च प्रतिपादयन्ति।

तदीया परमा शक्तिः सच्चिदानन्दलक्षणा।
समस्तलोक-निर्माण-समवाय-स्वरूपिणी ॥
तदिच्छयाऽभवत्साक्षात्तत्स्वरूपानुकारिणी ॥

इयमुक्तिः श्रीरेणुकभगवत्पादाचार्याणाम्। अनयाप्युक्त्या सच्चिदानन्दरूपपरशिवस्य शक्तिः समस्तभुवननिर्माणाय तत्समवेता तदिच्छानुसारेण साक्षात्तत्स्वरूपा एव अर्थात् ( परशिवाद् भिन्ना विमर्शशक्तिर्विश्वोत्पादनकारणीभूता ) वर्तत इति स्पष्टम्।

लोकविख्यातकविकुलतिलकः श्रीकालिदासमहाकविरपि स्वविरचित-रघुवंश काव्यस्यारम्भे-

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

इति मङ्गलमाचर्याऽस्मिन् श्लोके पार्वतीपरमेश्वरौ शब्दार्थाविव नित्यसम्बन्धेन वर्तेते इति स्वाभिप्रायं प्रादर्शयत्। पार्वतीपरमेश्वरावित्यत्र शक्तिशिवावित्यर्थः, शब्दमन्तरा अर्थस्य अर्थमन्तरा शब्दस्येव शिवमन्तरा शक्तेः शक्तिमन्तरा शिवस्याऽपि अनवस्थानं प्रसिद्धमित्येव महाकवेरभिप्रायः।

वीरशैवसिद्धान्ते शक्ति-शक्तिमत्पदार्थयोः भेदाभेदौ प्रोच्येते। "कूर्मपुराणेऽ"पि—

एषा शक्तिः शिवा ह्येतच्छक्तिमानुच्यते शिवः।
शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः ॥
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥

इत्यादि प्रमाणद्वारा पारमार्थिकत्त्वेन शिवशक्त्योः भेदाभेदावुच्येते। वीरशैवसिद्धान्ते नित्यसम्बन्धेन ब्रह्मणः शक्तिविशिष्टत्वप्रतिपादनात्तद्ब्रह्म सविशेषमेव स्यात्, न तु निर्विशेषम्, अन्यथा तस्य चराचरात्मकजगदुत्पत्तिकर्तृत्वमेव न सिध्यतीत्याकूतम्। शक्तिविशिष्टेन परशिवब्रह्मणा समुत्पन्नमिदं जगदपि शक्तिविशिष्टमेव वर्तते, यतः कारणगुणाः कार्यमनुसंक्रामन्ति खलु।

इह प्रपंचे पदार्थपरिशीलनेन तावत् प्रत्येकपदार्थेऽपि एकैकप्रकारा शक्तिर्वर्तत एवेत्यवगम्यते। यथा—पृथिव्यां धारणाशक्तिः, जले आप्यायनशक्तिः, तेजस्युज्ज्वलनशक्तिः, वायौ स्पन्दनशक्तिः, आकाशे व्यापनशक्तिः, आत्मनि बुद्धिशक्तिः, वृक्षादौ जलाद्याकर्षणशक्तिः, लोहचुम्बिकायां सूच्याकर्षणशक्तिः, उष्ट्रे श्वासद्वारा सर्पाकर्षणशक्तिः; इत्यनेन प्रकारेण शक्तिः सकलवस्तुषु दरीदृश्यते। अत एव ब्रह्म-जगद्रूपयोः कारण-कार्ययोः शक्तिवैशिष्ट्यकथनं सङ्गतमेवेति नानुभवापलापापत्तिः।

सच्चिदानन्दरूपं ब्रह्म "अस्मि—प्रकाशे—नन्दामि" इत्यनुभवोपेतं खलु! एतादृशानुभव एव तद्ब्रह्मणो विमर्शात्मिका शक्तिः, यद्येषोऽनुभवः परब्रह्मणि न वर्तते तदा तत्परब्रह्म प्रकाशमयस्फटिकशिलावज्जडमिति कथनप्रसङ्गस्समायाति, सौन्दर्यविशिष्टस्य अन्धस्य स्वगतसौन्दर्यावगन्तृत्वशक्त्यभावेन तत्सौन्दर्यमपि यथा मुधा भवति, तथा ब्रह्मणोऽपि स्वगतसच्चिदानन्दलक्षणविमर्शाभावे तल्लक्षणानामपि वैयर्थ्यमवश्यंभावि खलु! तस्माद्ब्रह्मणि सच्चिदानन्दरूपानुभवशक्तिरवश्यमङ्गीकर्तव्या। एतेन ब्रह्मणः शक्ति-वैशिष्ट्यं सिद्धम् ब्रह्मनिष्ठा विमर्शशक्तिरेव सूक्ष्मचिदचिदात्मकशक्तिरित्युच्यते, परशिवब्रह्मणः सूक्ष्मचिच्छक्तिः सर्वज्ञतारूपमावहति, सूक्ष्मा चिच्छक्तिस्तु सर्वकर्तृतारूपमावहति, एतादृशशक्तिद्वयस्याश्रयीभूता इच्छाशक्ति विमर्शशक्तिरूपाऽऽस्ते। इदं सूक्ष्मचिदचिदात्मकशक्तिविशिष्टं परशिवब्रह्म "अथातो ब्रह्मजिज्ञासा" "चैतन्यमात्मा" इत्यादि ब्रह्मसूत्र-शिवसूत्रमथ वेदान्तप्रतिपाद्यमस्ति।

गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी।

इति वीरशैवमताचार्याणां श्रीजगद्गुरु-रेणुकाचार्याणा मुक्त्यनुसारेण विमर्शशक्तिः सनातनी, ब्रह्मनिष्ठा च वर्तते। अस्यां विमर्शशक्तौ "मयूराण्डरसन्यायेन" सकलचराचरात्मकं जगद् विलीनं वर्तते,अतश्चराचरविश्वात्मिका सा विमर्शशक्तिः स्वविभागपरामर्शावस्थायां सत्त्व-रज—स्तमोगुणरूपयुक्ता भवति। तादृशविमर्शशक्त्यंशे उत्तमकर्तृत्वविनिर्मुक्तज्ञानांशतः सत्वगुणात्मिका विद्याशक्तिः समुत्पद्यते, उत्तमज्ञातृत्वविनिर्मुक्त—क्रियांशतः किञ्चित्सत्वतमोगुणमिश्रा रजोगुणात्मिका शक्तिरुत्पद्यते, निसर्गाद्ज्ञानक्रिययो रैक्ये सत्यपि सृष्टिदशायां ज्ञानक्रियाशक्त्योः पारस्परिकविभागसमुत्पत्त्या 'ज्ञानं क्रिया न भवति, क्रिया ज्ञानं न भवति" इति भेदबुद्धिरूपा तमोगुणात्मिका शक्तिरुत्पद्यते।

सैषा तमोगुणात्मिका शक्तिरेव लोके जडमायेत्युच्यते; यथा सूर्यरश्मिः सूर्यकान्तशकलं संस्पृश्य प्रतिस्फुरणगत्या स्फुलिङ्गरूपो भूत्वा तूलादिकमाविर्भवन्नग्न्याकारमाधत्ते, तथा शिवस्य विमर्शशक्तिरपि जडमायाशक्तिं प्रतिस्फुरणगत्या प्रविश्य सुखदुःखमोहोत्पादिका सत्त्वरजस्तमोगुणात्मिका "प्रकृति" रित्यभिधीयते। एषा प्रकृति र्वीरशैवपूर्वाचार्यै 'श्चित्त' मिति व्यवह्रियते, एतादृशचित्तशक्तिविशिष्टः शिवप्रकाशरूपः शिवांश एव 'जीवः'; एष जीवस्तु स्थूलचिदचिदात्मकशक्तिविशिष्टो वर्तते, जीवस्य स्थूलचिच्छक्तिः किञ्चिद्ज्ञतारूपा, तस्य स्थूलाचिच्छक्तिस्तु किञ्चित्कर्तृतारूपा चेति द्विविधा भवति। जीवस्तु एतादृशद्विविधशक्त्याश्रयीभूतया इच्छाशक्त्या समुपलसितोऽर्थात्तद्विशिष्टो भवतीति सारः। (क्रमशः)

# गवां महत्वम्

लेखकः—श्रीसच्चिदानन्दः "प्रभातकिरणः"



अये ! भारतजननिसुपुत्राः ! भवतां विदितमेव यत् सर्वसुखदायिन्याः मातुर्गोरिदानीं कीदृशी दुरवस्था वर्तते । अहह ! अहह ! यस्याः प्रत्येकं वस्तु महच्छ्रेयस्करम् । यदेव च पाराशरसंहितायां ११ अध्याये स्पष्टीकृतम्—

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
निर्दिष्टं पञ्चगव्यं तु पवित्रं पापनाशनम् ॥
गोमूत्रं कृष्णवर्णायाः श्वेताया गोमयं हरेत् ।
पयश्च ताम्रवर्णाया रक्ताया दधि चोच्यते ॥
कपिलाया घृतं ग्राह्यं सर्वं कापिलमेव वा ।

लोकेऽपि गोमूत्रेण व्याधीनां प्रणाशो भवत्येव गोमयस्तु कृमिनाशकः (Anti Septic) यज्ञे पूजने प्रायश्चित्ते सर्वत्र गोमूत्राणामावश्यकता भवति, इति विचारणीयमस्ति । गोपूजनेनैव समेषां देवानामर्हणं गतार्थं भवति गोः प्रत्यङ्गे देवनिवासात् । यथा भविष्यपुराणे—

पृष्ठे ब्रह्मा गले विष्णुर्मुखे रुद्रः प्रतिष्ठितः ।
मध्ये देवगणाः सर्वे रोमकूपे महर्षयः ॥
नागाः पुच्छे खुराग्रेषु ये चाष्टौ कुलपर्वताः ।
मूत्रे गङ्गादयो नद्यो नेत्रयोः शशिभास्करौ ॥
एते यस्या स्तनौ देवाः सा धेनुर्वरदास्तु मे ।

सकलसौख्य संदात्र्या निखिलकल्मषहारिण्या ऐहलौकिकपारलौकिकयोस्सौख्ययोः कारणभूताया स्तस्या जनन्याः सर्वतोभावेन सेवनमावश्यकमेव,साम्प्रतं तु दृष्टिपथं नायाति । पुरा तु केवलं गोपराजनन्दान्तिक एव लक्षमेकं गवामासीत् गोकुले किं वक्तव्यं तत्र कोटिश आसन् । अतो निखिले संसारे गोकुलमत्यभिधेयमासीत् । तदानीं साधारणा असाधारणा अपि जना घृतदधिदुग्धानामुपभोगमाचरन्तिस्म।

यवनसाम्राज्येऽपि रूप्यकमात्रेण द्वात्रिंशत्सेटकं घृतं लभ्यते स्म । यदा घृतस्येदृशी दशा तदा दुग्धादीनान्तु का कथा । किन्त्विदानीं घृतादीनां या दुरवस्था वर्तते सा समेषां भारतवासिनां विदितैवास्ति । अस्याः कारणं भारतवासिनामज्ञानान्धता अथवा मदान्धता, इति निश्चितमेव । अद्य गोघातकाः कियन्तः सन्ति, कियत्यो गावः प्रतिदिनं पञ्चत्वं यान्ति, इति जानन्ति सर्वे बम्बई मण्डलान्तर्गत बाँदरा वास्तव्याः प्रतिदिनं दश सहस्रगवां छेदनं भवति,इत्यपि नाविदितमस्ति यद् गोहननं तु राजभृत्यायत्तं भवति, हननकारणभूतास्तु हिन्दव एव । यावद् दुग्धं मातरो गावो ददति तावत्तु गृहे तासां महता प्रयत्नेन रक्षा भवति आगतायां वृद्धावस्थायामल्पतर-मूल्येन वधिकस्य हस्ते प्रणाशं कारयन्ति हिन्दूनामधारिणः ।

अयि ! पारतन्त्र्यसुखानुभवशीलाः पाश्चात्यपददलिता हिन्दवः श्रृण्वन्तु भवन्तः, भवतां पूर्वजसूर्यकुलवंशावतंसः महाराजाधिराजदिलीपः कामधेनोः पुत्रीं नन्दिनीं प्रति सिंहमवलोक्य स्वकं शरीरं समर्पयति "नेदं क्षत्रियोचितं कार्यमिति बोधयति सिंहः ।

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥

गोभक्तिदत्तचित्तो दिलीप उत्तरयति—"क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः" इत्यादि वचनैन संतोष्य मृगेन्द्रात् गां रक्षितवान्। एतत्फलस्वरूपं सर्वसुखदायकं निखिलराजगणदर्पविध्वंसकं मनोरमं स्वकुलनायकं रघुपुत्रं लब्धवान्। वसिष्ठोऽपि गोप्रभावेणैव विश्वामित्रसैन्यं प्रणाशितवान्।

अद्यापि भारतीया यदि गोभक्ता भवेयुस्तदा अवश्यं स्वराज्यं स्यात्। भारतमातुर्विषयेऽनेके जनाः कारागारं स्वीकृतवन्तः, केऽपि पञ्चत्वं गताः। "गावस्त्रैलोक्यमातरः" इति वेद सबलोक्यापि भारतीया गोविषये किञ्चिदपि न कुर्वन्ति। यद्यपि गोरक्षणार्थं गोशालास्ति, तत्र धनाढ्यजनप्रभावेण गोपालनमपि भवति। किन्तु भृत्यनृपेण (नौकरशाही) भृत्यरक्षणार्थं प्रतिदिनमसंख्यगवां हननमाकर्ण्यापि प्रतिकारं न कुर्वन्ति भारतीया गोचरभूम्यर्थमपि न विचारयन्ति, इति महत्कष्टम्। गावस्तु हिन्दूयवनखीष्टप्रभृत्यर्थं समानभावेन दुग्धं प्रयच्छन्ति, दुग्धेन सर्वेषां प्रयोजनसंसिद्धिर्भवति, तदा कथं हननं भवतीति महदाश्चर्यम्।

इम्पीरियल डेयरीस्थ मि० विलियिम स्मिथ साहिब महोदयः कथयति "कृषिप्रधानभारतवर्षस्योपकारार्थं गवां अन्यपशूनाञ्च शारीरिकसंशोधनस्यावश्यकतास्ति।"

महात्मा गान्धी महोदयस्येयं घोषणा—"गोरक्षाप्रश्नः" अल्पमहत्वस्य नास्ति, किन्तु स्वराज्यप्रश्नेनाप्यधिकमहत्वपूर्णमस्ति।

भो भाविभारतस्य कर्णधारस्वरूपा बालकाः! Boys! you have one life to live and one death to die see! that you do both like men अर्थात्—अयिबालकाः! भवदर्थं एकमेव जीवन मेक एव मृत्युः, पश्यत! द्वयमपि मनुष्यवत्कुर्वन्तु"

तवोपरि भाविभारतस्याशा वर्तते। एतदर्थं वीरत्वमाचरितव्यम्। आह्वयन्तु गोभक्षकान् रणस्थले गत्वा वीरत्वकार्यं कुर्वन्तु क्षणभङ्गुरशरीरं त्यक्त्वापि सनातनलोकस्य प्राप्तिर्भविष्यत्येव—"गवार्थे ब्राह्मणार्थे च स्त्रीवित्तहरणे तथा। प्राणास्त्यजन्ति ये लोके तस्य लोकाः सनातनाः,

इतिशम्।

---

## उद्बोधनम्



भोलानाथ द्विवेदी "शास्त्री, ग० स० का० काशी।

इदं भारतं सर्वदेशप्रसिद्धं
जगत्पूजितं भूचितस्वर्गकल्पम्।
यदासीत्कदाचिद्धरेर्जन्मभूमि-
स्तदा या दशामीदृशीमद्य हन्त! ॥१॥

यत्रासन् ऋषयः कणादकपिलाऽगस्त्यादयस्सद्गुणाः
भीमद्रोणयुधिष्ठिरार्जुनमुखा वीराश्चतेजस्विनः—
साविव्यादिसमास्सतीव्रतपरा नार्यः कुलाभूषणाः
हा! तद्भारतवर्षमद्य विधिना नीतं दशां कीदृशीम् ॥ २ ॥

भो विद्वत्प्रवराः! प्रशस्तमतयोऽप्यन्ये तथा भ्रातर-
श्छात्राः कालविपर्ययान्न भुवने किं पश्यथेयम्परम् ॥
आलस्यं त्यजताशु पौरुषविधौ बुद्धिं विधत्ताधुना
नोचेद्भारतवर्षमेतदखिलन्नाशत्वमेष्यति ॥ ३ ॥



# प्रताप-प्रतिज्ञा ।

कविरत्नं श्रीमदीशदत्त शर्मा पाण्डेय—'श्रीशः'

( १ )

सिंहासने स हि नरेन्द्रपदाभिषिक्तो ।
लोके बभावतितरां जगदेकवीरः ।
स्वाभाविको भवति हेमघटः प्रभावान्
मार्तण्डजांशुभरितस्य पुनः कथा का !

( २ )

'मेवाड़'मण्डलमणिः स महाप्रतापी ।
दृष्ट्वा दशां विमलभारतवर्षभूमौ ।
इत्थं चकार जगतां प्रथितां प्रतिज्ञां
प्रज्ञां नियोज्य निपुणाश्च विचार्य विज्ञान् ।

( ३ )

साक्ष्यस्ति सम्प्रति महान् भगवान् स सूर्यो
भ्राजद्भिरुग्रकिरणैः प्रतपल्ललाटः ।
सोऽहं करोमि शपथं प्रथितः प्रतापो
म्लेच्छैर्जितां किल विलोक्य भुवं स-तापः ॥

( ४ )

यावत्प्रभाहतमदो मम भारतं मा
भूयः प्रभारतमलं भुवने भवेद्धै ।
तावत्कदापि कथमप्यपि नैव नूनं
यास्यामि जन्म-नगरं नगरं गरीयः !!

( ५ )

वत्स्यामि पर्णभवने विजने,न हर्म्ये ।
चात्स्यामि पत्रपुटके; न पुनर्नुहैमे ।
स्थास्याम्यहं किल तृणासनकेषु तेषु
न [illegible]रत्नरचितेषु नृपासनेषु !!

( ६ )

जाज्वल्यमानकिरणोऽस्तु दिनेषु चन्द्रः
सूर्यः सदोदयतु पश्चिमदिग्विभागे ।
शुष्कः स्वयं भवतु कल्पतरुः परन्तु
व्यर्था भविष्यति न मद्विहिता प्रतिज्ञा !!

( ७ )

चिन्तां कलत्रसुतयोर्नु तयोर्विहाय,
याचेऽभिलाषणमदो जगदीश्वरत्नं—
'मेवाड़' मण्डलबलोन्नयनं; वनं वा
म्लेच्छौघसैन्यशरणं मरणं, रणं वा !!

( ८ )

क्वापि प्रतारणमहो ललनाजनानां;
दृष्ट्वा क्वचित्सुरजनप्रतिमाऽपमानम् ।
हिन्दून् पशूनिव विलोक्य विहन्यमानान्—
हा हृत्तलं भवति मे शतधा विदीर्णम् !

( ९ )

लोकश्रुतं रवि-कुलं बलतः प्रशस्तं
ध्वस्तं किमद्य जगतीतलतः समस्तम् ।
श्रद्धाभया अपनया दयया विहीना
यज्जन्ममातरमिमे यवना दहन्ति !

( १० )

याऽऽसीत् पुराऽभिनवसस्यदलाभिरामा
स्निग्धाऽभ्रनीलवसना कृतसर्वकामा ।
सा जन्मभूः प्रतिपदं नर-रक्त-रक्ताऽ—
[illegible]ऽद्य जीवति कथं चिदहोऽत्यशक्ता !!

( क्रमशः )

## काशीपण्डितसभा सूचना।

श्रीयुत पौराणिक बालकृष्णपुरुषोत्तम शास्त्रिणः! भवतां पार्श्वे काशीपण्डितसभाया मन्त्रणासमिते- राज्ञया इत एतदाशयकं पत्रं प्रेषितमासीद्यत्र भवतां नूतनपरिचयविषये चत्वारः प्रश्नाः पृष्टा आसन्। येषामुत्तरप्रदानार्थं पञ्चदश-दिवसा अवधितया कल्पिता अभूवन्। परन्तु खेदास्पद- मिदं यन्मासो व्यत्ययगात् भवद्भिरद्यापि नोत्त- रितम्। इत्यनिच्छयापि काशीपण्डितसभाया म- न्त्रणासमितेः पूर्वप्रस्तावानुसारं भवतां सम्मान- पत्रं भवद्दृश्योऽपकृष्य स्वायत्तीक्रियते। भवन्तश्च संसूच्यन्ते यदद्यारभ्य काशीपण्डितसभया प्रदत्तस्य 'पुराणाचार्य्य' इत्युपाधेः क्वापि स्वनाम्नः पुरः प्रयोगो नैव विधेयः। भवन्त- श्चाद्यावधि काशीपण्डितसभासदस्यतायाःको- टितोऽपि वहिष्क्रियन्त इति। इयं सूचना काशी पण्डितसभायाः शाखात्मकगुजरातपण्डित- सभायाः कार्य्यालयेऽपि प्रेष्यते सर्वत्र तत्प्रान्तीय पत्रेषु प्रकाशयितुमिति शम्

का० पं० सभामन्त्राणासमितेराज्ञया

मन्त्री—श्रीकाशीपण्डितसभा

लक्ष्मीकुण्ड (काशी)

## कृतज्ञता—प्रकाशः

विगतेषु मासेषु रानूपाली—स्थानाधीश्वराणां सुप्रभातस्य प्रधानसंरक्षकाणां- श्रीमोहान्तानां श्री १०८ पण्डित बाबा केशवरामोदासोनमहोदयानां कृपया तेषामाज्ञ- या च यैस्तेषां शिष्यवर्यैः सुप्रभातसाहाय्यं कृतम्। तेषां नामानि सधन्यवादं सकृ- तज्ञताप्रकाशनञ्च प्रकाशयामः।

| | | | |
|---|---|---|---|
| श्रीमती रानी महाराजकुँवर साहिबा तालुकेदारिया, बारावंकी | ... | ... | २५) |
| श्रीमान् बाबू गुरुशरणलाल वकील बारावंकी | ... | ... | १२) |
| श्रीमान् यमुनाप्रसाद वकील मैनेजर पीलीकोठी—लखनऊ | ... | ... | ६) |
| ,, बाबू भगवतीदयाल महाशयः बारावंकी | ... | ... | ६) |
| ,, ,, मंगलाप्रसाद महाशयः डिपुटी कमिश्नर आफिस बारावंकी | | ... | ६) |
| ,, ,, राय उमानाथ बली साहेब दरियावाद इस्टेट बारावंकी | ... | ... | ६) |
| ,, ,, महादेवप्रसाद श्रीवास्तव पीलीकोठी, लखनऊ | ... | .. | ६) |
| ,, ,, कौशलेश प्रसाद श्रीवास्तव लखनऊ | ... | ... | ६) |
| ,, ,, बाबू त्रिलोकीनाथ महाशयः लखनऊ | ... | ... | ६) |
| श्रीमान् बाबू रामलाल क्लर्क ई० आई० आर० बारावंकी | ... | ... | ४) |

उत्कल-प्रान्तान्तर्गत ढेंकानाल राज्य-सचिवैः सहृदय-धुरीणैः पण्डितवर्यैः श्रीशिखरेश्वर मिश्र-महोदयैः सुप्रभाताय २५) मुद्रामितं साहाय्यं प्रदत्तम्। तदर्थं धन्यवादाः दीयन्ते पण्डित- वरेभ्यस्तेभ्यः।

प्र० मन्त्री श्रीगोपाल शास्त्री (दर्शनकेशरी)।

# सुप्रभातस्य विशिष्टाङ्कः

## द्वादशवर्षस्य प्रथमोऽङ्कः

### १९९३ चैत्रमासे

महता समारम्भेण विशिष्टरूपेण च प्रकाशमेष्यति ।

अत्र सुप्रभातस्य मुखपृष्ठम् अन्तःकर्गजञ्च नितान्तसुन्दरं भविष्यति । लेखाश्चादर्शानुकूला महतां विदुषां-विविध-विषयेषु विलिखिताः संग्राह्या माननीयाश्च भविष्यन्ति । चित्राण्यपि पुरातत्त्व-सम्बन्धीनि स्थास्यन्ति ।

विविध-दृष्ट्या नितरां लोभनीयोऽयमङ्कः सर्वथाद्रष्टव्यो भविष्यति ।

मूल्यमस्य—अष्टौ आणकाः

ग्राहकेभ्यो विनामूल्यम् ।

प्रकाशकः—श्रीगौरीनाथ पाठकः, सुप्रभात-कार्यालयः, बनारस सिटी ।
मुद्रक—श्रीबालकृष्ण शास्त्री, ज्योतिषप्रकाश प्रेस, विश्वेश्वरगंज, काशी ।

The Suprabhatam

वार्षिकम्मूल्यम् —२)

Registered. NO.A. 1348.

छात्रेभ्यः—१)

संस्कृत-साहित्य-समाजस्य मासिक-मुखपत्रम्




तिमिरततिमुदस्यद् भेदतारा विलुम्पन्-नयदधिसुरभाषाभाषि जागर्तिमुच्चैः ।
विबुधविहगवादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः "सुप्रभातम्" ॥

एकादशोऽब्दः तिष्य-पूर्णिमा दशम-संख्या




सम्पादक :—
श्रीकेदारनाथशर्मा ( सारस्वतः )

स० सम्पादकः-
श्रीजितेन्द्रियाचार्य्यः

निरीक्षक :—
श्रीगोपालशास्त्री, दर्शनकेशरी, साहित्याचार्य्यः
न्याय-काव्य-तीर्थः

प्राप्तिस्थानम्—
व्यवस्थापकः—सुप्रभात-कार्यालयः काशी ।

# लेख-सूची



---




एकादशेऽब्दे | तिष्यपूर्णिमा– | दशम-संख्या

## दुर्गाभ्यर्थनम् ।

अये भुवनमोहिके ! प्रतिदिनं नवीनं भवत्
किमर्थमिदमीश्वरि प्रकटितं जगन्मायिकम् ॥
अथ प्रकटनेच्छया भगवती स्वयं प्रेरिता
विधाय विषयानिमान् किमिति संस्थिता भार्गवि ! ॥१॥
कृता विषयवल्लरी*तदुपरागसक्तानहो
हृषीकनिचयानिमान् किमिति वाऽकरोर्निष्कृपे !
कृता यदि च ते शिवे ! शिवकराः श्रुतीः सौख्यदाः
निषेधविधिभूषिताः किमु जगौ जगत्पालिके ! ॥ २ ॥
निरोधविरसैरयोपहसिताशुगैर्गत्वरै-
र्हृषीकनिचयैरतिप्रथितदुर्वलत्वात्मनि ॥
अनेकजनुरर्जितातिभयहेतुदुर्वासने
महानयमये शिवे ! तव तु बन्धनाय श्रमः ॥ ३ ॥
अयं तु तव बन्धने समुपयात एवाचिरम्
किमर्थमय मुह्यते श्रमगणोऽग्रिमो वर्त्तते ॥
स्वयं भगवती नुता निखिलदेववृन्दैः सती
समाहृतवती वपुर्विषमबाणलीलामयम् ॥ ४ ॥

न केवलमिदं वचो मनसि दार्ढ्यमापादितम्
त्वयैव खलु सर्वतो भुवनमेकया भूषितम् ॥
तथापि भवदीययैवकृपया कृपामांसले !
कदाचिदपि त्वद्गुणे न मतिरेति मे मातृताम् ॥ ५ ॥
निपीतमतिनिष्फलं भवति कृष्णगीतामृतम्
विगीतमपि नो फलं जनयते तदानीं श्रुतम् ॥
विलोकितमनेकशः स्फुरति नैव शारीरकम्
यदा भवति सम्मुखं भगवति ! त्वदीया कला ॥ ६ ॥
अये निगमभाषणे ! निगमतोऽतिदूरं स्थिते !
मनोजदवमोहिके ! कुरु मनो मदीयं तथा ॥
निभाल्य कमनीयतामदवतीस्त्वदीयाः कलाः
वचो मम भवेन्मुदा "जननि रक्ष मां सर्वतः" ॥ ७ ॥
मनोजमदमन्थनेन मदमादधानो भवः
स्वयं भवति विह्वरो विनत एव यस्याः कृते ॥
ददातु मम वाञ्छितं वरमरं मराले स्थिता
सदुत्तरमुत प्रियं प्रियतमेन संप्रेषयेत् ॥ ८ ८

–रामजीपाण्डेयशास्त्रिणः ।

* कवेः प्राथमिकीयं कृतिः ।

# सम्पादकीयम्

## हन्त ! सनातनधर्म !!!

अद्यत्वे कैश्चन स्वल्पतमैः स्वल्पतम-स्वार्थसाधनाय आचूडान्तं प्रयतमानैः सडिण्डिमघोषं सलगुडप्रहारं सवाग्बाणवर्षञ्च समुद्घोष्यते यत् साम्प्रतं सनातनो धर्मः केवलमस्मासु कतिपयेष्वेव समुच्छ्वसति यदि केनापि तिलमात्रमपि तद्विरुद्धमुच्यते चेत् तस्य स नास्तिको नास्तिक इत्युक्त्वा गालिप्रदानैर्भर्त्सनैः लगुडप्रहारैरेवार्चनं कुर्वन्ति। एतेषां नास्ति हृदयम्, नापि च मस्तिष्कम्। विवेकस्य तु मरुभूमिरेव हृदयं तेषां नितान्तदुर्बलं सङ्कीर्णं च भवति। ते धैर्येण, गाम्भीर्येण, शान्त्या वा प्रतिवादिनां शब्दमपि श्रोतुं न सहन्ते। ते पाश्चात्य--सभ्यताम्, पाश्चात्य--शिक्षां पाश्चात्यपद्धतिं च द्रष्टुं श्रोतुमपि नाभिलपन्ति। तदनुकारिणो भारतीयान् पतितानेव मन्यन्ते। इमे केवलं विरोधात्मकमेव कार्यं कर्तुं प्रभवन्ति न रचनात्मकं क्रियात्मकं वा किमपि। यत एतेषां हृदये मनागपि नास्ति धर्मप्रेमा। केचन धनाभिलापिणः, केचन प्रतिष्ठैपिणः, केचन केवलं धर्मान्धा गड्डलिकाप्रवाहप्रवृत्ताः केचन वस्तुतो भावि स्वार्थनाश-भीताः ससम्भ्रम माक्रमणमेव कुर्वन्ति। इमे वराका न जानन्ति यद्द वयं स्वार्थान्धा मदोन्मत्ताः सनातनधर्मपद्धतितः कियद्दूरमुत्क्षिप्ताः, स्वयमेवाधःपात—गर्तं पतन्तः शनैः शनैर्लोकदृष्टौ तिरोहिता भवामः। इमे न जानन्ति यत् अस्माकं हृदयम् अस्माकं रोम रोम पाश्चात्य-संस्कृति—प्रभावग्रस्तं विद्यते। एतेपामन्तश्चित्रं समालोकयतामस्माकं हृदयं विदीर्यते। सनातनधर्मं पैतृकधन मामनन्ति। एतेषां नग्नताण्डवं दर्शं दर्शं समुद्विग्ना वयमुपेक्षामेव कुर्महे। 'परं कियत्कालं यावदेवं स्थातुं शक्यते। आर्यजातेर्भीपणं पतनं तस्या जराजर्जरे विशालवक्षस्थले मिथ्याधार्मिकाणां वीभत्सताण्डवमालोकमालोकमेव किञ्चिद्वक्तुं विवशं करोत्यन्तःकरणम्। केचन सन्त्येतादृशा अपि सुप्रभातपाठका ये स्पष्टवादितया सुप्रभातं सुधारपक्षपातिनं मत्वा विरोधमाचरिष्यन्ति। परं किं कुर्मः, यतो "हितं मनोहारि च दुर्लभं वचः।"

× × ×

अस्मिन् समाजे न केवलं मूर्खा एव सन्ति। सन्ति बहवो बुद्धिमन्तः, सदाचारिणः, साधवः, पण्डिताश्च। परं ते वराका विविध—कारण—भिया भावसंगोपनं कुर्वन्तो जीविकायै तूष्णीं सहयोगं प्रदर्शयन्ति। किं कुर्वन्तु वराकाः, ये वस्तुतो विद्वांसः सन्ति तेषां हृदयं गभीरं सरलञ्च वर्तते। परं 'गुण्डा' पदवाच्यानां केषाञ्चन भीत्यै शुष्कमनसा सहयोगं प्रदर्शयन्ति। केचन वाकव्रतिकाः वावदूकानेतान् स्वल्पप्रदानेन सन्तोष्य निगूढतरं स्वार्थं साधयन्ति। इमे खलु सर्वथा लोकवञ्चनाय स्वल्पतमलोभेन सर्वथा धर्मविरुद्धं, वर्णविरुद्धमाश्रमविरुद्धञ्चाचरन्तो वर्णाश्रमधर्मरक्षकत्वेन प्रसिद्धाः सन्ति। येषां धर्मविरुद्धं कृत्यं धर्मतरुमूले क्षारायते। सन्ति बहून्युदाहरणानि। विगतेष्वङ्केषु काशीस्थ—विदुषां धर्मव्यवस्था विषये लिखितमासीत्। साम्प्रतं केषाञ्चन सन्यासाश्रम-शिरोमणीनां धर्माचार्याणां कृत्यमस्माकं श्रोत्रपथं ...मिकत्वेनावतीर्णम्

र्णम् विज्ञापनादिद्वारा। तदिदानीं पाठकानां विचाराय समुपस्थाप्यते।

वाराणसीस्थ–गोविन्दमठाध्यक्षैः सुप्रसिद्ध–मण्डलीश्वरैः श्रीजयेन्द्रपुरी–महोदयैः स्वभक्तानामनुग्रहाय वेदान्तोपदेशमयं 'विश्वनाथ' नामकं हिन्दी-मासिकं पत्रं सञ्चाल्यते।

एभिः 'ॐ नमः शिवाय बैंक' नाम्नी संस्था संस्थापिता विद्यते। यत्र स्त्रीशूद्रादयोऽपि ॐकारघटितमेव मन्त्रं लिखित्वा प्रेषयन्ति मुद्रणाय। विश्वनाथ-यन्त्रालयोऽपि स्थापितः। एष यन्त्रालयस्तैः स्वाधिकृते अपारनाथमठे रक्षितः। अपारनाथ-नामानः केचन सिद्धा आसन्। तेषां पवित्रतमे मठे देवमूर्तयो द्विशताधिकवर्षेभ्यः संस्थापिताः सन्ति। तत्र संन्यासिसंस्कृतपाठशाला नाम्नी सुप्रसिद्धा पाठशालाऽपि विद्यते। केचन विद्यार्थिनो महात्मानस्तत्र निवसन्ति। परमिदानीं मुद्रणालय–स्थापन–सौकर्याय तत्र कासाञ्चन मूर्त्तीनामचलानामप्युत्पाटनं विहितं मठाधिकारिभिरिति श्रूयते।

इदानीं वर्णाश्रमसंरक्षकैर्विचारणीयम् यत् प्रथमं संन्यासिनां कृते मुद्रणालय—व्यापार-प्रसारो हि नाम कियान् लज्जाकरः। विवेकानन्द—स्वामिरामतीर्थ-स्वामि दयानन्द प्रभृतिभिर्मतप्रवर्त्तकैरपि संन्यासिभिः स्वोपदेश—प्रचाराय यन्त्रालय-स्थापनं न कृतम्, यद्यपि तेषामुपदेश—मुद्रणेन यन्त्रालयाधिकारिणो बहवो लक्षशो धनमार्जयन्ति। परन्तु इतश्च स्वल्पतमपत्रप्रचाराय मुद्रणालयः स्थाप्यते। किं यतीनां धर्मेषु यन्त्रालयव्यापारोऽपि विद्यते?

सोऽपि यन्त्रालयः, पठनपाठनस्थाने, धर्मप्रचारकेन्द्रे पवित्रतमे सिद्धपीठे—इत्यहो विडम्बनमाश्रमधर्मस्य मठानाञ्च।

तत्रापि मूर्त्तीरुत्पाट्य तस्य संस्थापनन्तु क्षतेक्षारमिवासह्यम्। पाश्चात्या अपि पठन पाठनस्थानमेकान्ते प्रशान्तवातावरणे स्थापयन्ति। एकतोऽध्ययनं भविष्यति अपरतश्च मुद्रणालयस्य घर्घरवः। अन्यच्च, मुद्रणालयेषु मसीलेपन दण्डादि (रूलर) अस्पृश्यतम–जुगुप्सित–चर्मादि वस्तूनां (सरेस) संयोगेन निर्मितम् भवति। यदा तस्य चर्मणः कदाचिदग्निसंस्कारोऽपि भवति तदा मृतशवदुर्गंध इव दुर्गन्धो धूमः प्रसरति। हन्तभोः! हन्त!! अगुरु-देवदारु—चन्दनादिधूप-धूम-समुचिते सिद्ध–मन्दिरे चर्म-धूमसुरभिरपारनाथस्य भगवतः परमां प्रीतिमुत्पादयिष्यति।

एवं मुद्रणालये विविधाः सामग्र्यः पाश्चात्यदेशीया अस्पृश्या भवन्ति। यन्त्रादीनां व्यवस्थायै यदा कदाचित् यवनशिल्पिनामपि तत्र मन्दिरे पदार्पणं सुलभमेव भविष्यति। परमेतेन न कापि धर्महानिर्धर्म्माचार्याणाम्।

एवमेव बाँसफाटकनाम्नि स्थाने प्रतिष्ठिता मोहान्ताः सन्ति स्वामिवर्याः प्रणवानन्दमहोदयाः। तैः स्वगृह-निर्माणावसरे द्वारवेदिका–संस्थितस्य शिवालयस्य सकल लोकसमक्षमस्तित्वमेव विनाशितम्।

एतादृशानि प्रचुराण्युदाहरणानि सन्ति। यत्र देवमन्दिराणां मूर्त्तयो विनष्टा आपणनिर्माणाय। बहवो मठाः, यत्र पूर्वे छात्राः, साधवश्च निवसन्तिस्म, साम्प्रतं स्वल्पतमलाभलोभेन भाटकेन प्रदीयन्ते। बहवः स्वामिपादा वेश्यां रक्षितां वा रमणीं वटुकं तत्र रमयन्ति। एकस्मिन् धार्मिकमठे प्रतिवत्सरं द्यूतक्रीडा भवति। काश्यामेव नहि; सर्वत्रैव मठ–मन्दिरादि–धर्म–संस्थानेषु कलिविडम्बनं विजृम्भमाणमेवावलोक्यते।

साम्प्रतं सुधीरं विचारणीयमङ्ग! कथं निर्घृणं तिरस्क्रियते धार्मिकैर्भगवान् सनातनो धर्मः। तस्य रक्षका एव स्वयं भक्षकाः सन्ति, तथापि ते अन्यानाक्षेपकान् भक्षकान् वदन्ति, अतः परं किमाश्चर्यम्, हास्यास्पदञ्चान्यत्।

'अतो हास्यतरं लोके किञ्चिदन्यन्न विद्यते।
यत्र 'दुर्जन' इत्याह दुर्जनः सज्जनं जनम्।

× × × ×

ये खलु सत्यसनातनधर्म-सेवकान् 'नास्तिक' 'नास्तिक' इति वदन्तः सलगुडप्रहारमर्चयन्ति साम्प्रतं कुत्र ते सुप्ताः

सन्ति ! वस्तुतस्ते जाग्रत्येव । परं रौप्यमुद्रया मुद्रितं तेषां मुखमिदानीं न प्रस्फुटति । हन्त भोः ! भगवन् ! सनातनधर्म ! कथं जीवसि ? नात्र कस्यापि दोषः, दौर्भाग्यविलसितमेव भारतीयानाम्, सनातनधर्मणामित्यत्र नास्ति सन्देहलवोऽपि ।

वयं वर्णाश्रमधर्माभिमानिनो मण्डलीश्वरान् प्रार्थयामो यत्ते सत्वरमिमं कलङ्कं दूरीकृत्य वास्तविकं धर्ममर्यादासंरक्षणं विदधतु । प्रबुद्धभारते न तादृशकृत्यानामपह्नवो भवितुमर्हति ।

## ग्राहका विज्ञाप्यन्ते ।

सुप्रभातस्य वर्षद्वयं व्यत्येति फाल्गुन-पूर्णिमायाम् । तावता कालेन सुप्रभातस्याङ्कद्वयं प्रकाशितं स्यात् ।

वर्षद्वयं यावत् सहृदय-शिरोमणीनां संस्कृतप्रणयिनां धर्माचार्याणां राज्ञाम्, महतां विदुषाञ्च कृपया कथमपि पाठकानां समाराधनमकरोत् । प्रथमवर्षतो द्वितीयवर्षे सुप्रभातस्य सर्वविधापि समुन्नतिः प्रत्यक्षैव प्रेक्षावताम् । तृतीयवर्षे ततोऽप्यधिका समुन्नतिः स्यादिति नूनं सम्भावयामः ।

मृतप्रायस्य, धनविरहितस्य, सुस्पष्टवादितया बहूनां कोपभाजनीभूतस्य, नाममात्रशुल्केन एकमुद्रात्मकेन वितीर्यमाणस्य सुप्रभातस्य पुनर्वर्षद्वयं यावत् स्थैर्यं धैर्यमुत्पादयति ।

परमिदानीं ग्राहकैरनुग्राहकैश्च क्षणं विमर्शनीयम् । 'सुप्रभातम्' न केवलं पत्रमात्रमेव । एतद्धि संस्थास्वरूपमेव पत्रं वर्तते । अनेन किं किं कृतमित्यग्रिमाङ्के प्रकाश्यमाणेन दशवार्षिक-विवरणेन सुस्पष्टं स्यात् ।

अस्य वार्षिकं मूल्यं नाममात्रमेव । सुप्रभातं न केवलं पत्रमात्रमेव । तद्धि प्रचाराय, जागर्तिजननाय, संस्कृतज्ञानां जीविका-समस्या-पूरणाय, संस्कृतगौरवप्रसाराय च प्रचलति । यद्यप्यार्थिक[illegible] तस्यान्ति सौन्दर्यं न सम्पादयितुं सुशकमासीत्, यथासमयं प्रकाशनमपि दुष्करमभवत् । श्रेयांसि बहुविघ्नानि । परं; 'विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमगुणा न परित्यजन्ति ।' इति स्मारं स्मारं समाजसदस्यैर्न परिश्रान्तम्, नापि पलायितम् । परं ग्राहकाणामनुग्रहमन्तरेण साफल्यं कठिनमेव भविष्यति । अस्माभिर्विलम्बदोष-सङ्कुचितैः प्रारम्भतः सुप्रभातं ग्रहीयत एव । परं बहुभिर्ग्राहकैरस्य द्वितीयवर्षस्य मूल्यं न ग्रहीयते ।

सुप्रभातपाठकाः प्रायः सन्दिहते यदिदमव्यवस्थितं पत्रं प्रचलिष्यति नवेति । अत एव ते तूष्णीं सन्तिष्ठन्ते । परमत्र-अन्योन्याश्रयो दोषः । यदि ग्राहकाणां प्राचुर्यं स्यात् । तदा सुप्रभातस्यापि यथासमयं प्रकाशनं स्यात्, यदि सुप्रभातस्य यथा समयं प्रकाशनं स्यात्तदा ग्राहका विश्वस्ताः स्युः । एवं वक्तुं शक्यते यत् सुप्रभातस्य प्रकाशनं यदि नाद्यावधि निरुद्धम्, तदा भाविनि काले बद्धमूलस्यास्य निरोधः कठिन एव । सत्सु महत्सु संरक्षकेषु नैतादृशाया विपदः सम्भावना समुदेति । परमस्य समुत्थानं सुसम्पादनं वा तदैव स्याद्यदा स्वावलम्बिता भवेत् । एकया मुद्रया प्रचारस्तु ग्राहकवृद्धौ क्रियते । तथापि ग्राहका वारम्वारं प्रार्थनामविगणय्य तूष्णीमासत इति परमसन्तोषास्पदमेवास्माकम् ।

ग्राहकाणां सहस्रेण सुप्रभातं सुस्थिरं भवितुमर्हति । यद्येको ग्राहक एकमन्यं ग्राहकं विदध्यात्तदा सत्वरमेव कार्यमेतत्सम्पद्येत । परमिदानीं ये ग्राहकाः सन्ति त एव शिथिला भविष्यन्ति तदा तु वृद्धिमिच्छतो मूलमपि विनष्टं स्यात् ।

अस्माभिर्बहुवारमेषा प्रार्थना विहिता पुनरिदानीं सानुरोधं प्रार्थ्यते च । संस्कृतभाषाकृते प्रतिवर्षमेकमुद्राप्रदानं न बहु विद्यते । विचारणीयं श्रीमद्भिः ये केनापि कारणेन रुष्टाः स्युः, दैवात् कार्यालय-प्रमादेन पत्रं न प्राप्तं स्यात्, यच्चान्य किमपि वक्तव्यं

स्यात्तैर्निशङ्कं वयं सूचनीयाः। गच्छतः; तत्रापि विषमे पथि गच्छतः, साहसिकस्य साहाय्य-विधानं सहृदयानां कर्तव्यमेव, सत्यपि गन्तुः प्रमादे।

अनेनाङ्केन सह सूचना पत्रं धनादेशपत्रञ्च प्रहीयते, पूरयित्वा सत्वरमेव कृपा विधेया।

ग्राहकवृद्धौ च प्रयतनीयम्। प्रतिवर्षमेका मुद्रा न भूयसी विद्यते कस्यापि संस्कृतज्ञस्येति विश्वसिमो यत् ग्राहका अनुग्राहकाश्च प्रार्थनां सफलीकरिष्यन्ति।

× × × ×

## संस्कृतज्ञानां दौर्बल्यम्।

युक्तप्रान्तीय-शासकाः (गवर्नर) सर् हेरी-हेगमहोदया वाराणस्यां समागता आसन्। अत्र तेषां स्वागतविधानाय नागरिकैरधिकारिभिः सर्वत्र संस्कृत-पाठशालासु आदेशपत्रं प्रहितम्। यत्पाठशालीयाश्छात्रा अध्यापकाश्च गङ्गातटे सम्भूय नौकामधिरुह्य गङ्गायां गच्छन्तं प्रान्तीयशासकं जयघोषैः सम्भावयन्तु। अयमेवाशय आसीत् आदेशस्य। एष आदेशः केवलं संस्कृत-विदुषां छात्राणाञ्च कृत एवासीत्। आंग्लशासका आग्लच्छात्रेभ्यो बिभ्यति। वराका दुर्बलाः, मानापमानज्ञानशून्याः संस्कृतज्ञाः साम्प्रतमेतादृशीमवस्थामापन्ना यत् यथावसरं यथेच्छञ्चाधिकारिणस्तान् सेवकानिव कार्ये नियोजयन्ति। न वयं शासक-स्वागतस्य विरोधिनो न वा संस्कृतज्ञान् स्वागतविमुखान् कर्तुं प्रयतामहे। परं स्वयं तस्य सम्भावितस्यातिथेः सबहुमानं स्वागतं कुर्महे। वयन्तु नागरिकाणामधिकारिणां प्रकारम्, संस्कृतज्ञानाञ्चापमानं निन्दामः। संस्कृतज्ञानां स्वागत-विधानं यदि नाम स्वरूपेण स्वातन्त्र्येण चाभविष्यत्तदा कियन्महत्वमभविष्यत्तेषाम्। याचकानामिव तेषां स्वरूप-प्रदर्शनं नितरामपमान-जनकं समाजस्य। सर्वथा विरुद्धमेतत् सनातनधर्मस्यापि। वयं पण्डितान् प्रार्थयामो यद् भवतां गृहेषु सम्राजो विनीतवेषेण प्रवेशमलभन्त, साम्प्रतं भवन्तो दीनवेषाः सुदूरादेव सोद्वेगा राजानं तदधिकारिणञ्च जयजयशब्दैः सभाजयन्ति, किमेतत् समुचितम् विदुषां प्राचीन मर्यादा-संरक्षणबद्ध-परिकराणाम्? अतो भवन्तोऽपि देशकालमनुसृत्य स्वीयं प्राचीन-गौरवञ्चानुस्मृत्य कार्यं कुर्वन्तु। एवमात्मगौरव-विहीनानामस्माकं महती दुरवस्था स्यात्। 'सरलास्तत्र छिद्यन्ते'।

× × × ×

## अहो विप्रलम्भः।

काल-प्रभावात् संस्कृतज्ञेष्वपि विद्वत्सु छात्रेषु च धौर्त्यवृत्तिः पदमादधती दरीदृश्यते। मिथ्याडम्बर-द्वारा जनता-प्रवञ्चनं हि नाम संस्कृतज्ञेषु प्रायो नास्ति। अत एव तेषां महत्वं सारल्यञ्च सर्वत्र जेगीयते। परमिदानीं पाश्चात्य-संस्कृतिकृपया अल्पशिक्षिता अशिक्षिता अपि संस्कृतज्ञा जनवञ्चनं विधाय संस्कृत-समाजं कलङ्कयन्ति। येन हास्यास्पदीभूतस्य समाजस्यान्यदपि विडम्बनं भवति। विगतेषु मासेषु केनापि महात्मना जनवञ्चनं विधाय अमृतसरोनगरे जनतायां महान् विभ्रमः सम्पादितः।

पञ्चषवर्षेभ्यः प्रागयं आशेश्वरझा महाशयः काश्यां रणवीरसंस्कृत-पाठशालायां प्रवेशिका-परीक्षां दित्सुः पठन्नासीत्। लघुकौमुदी-काठिन्य-क्लान्तोऽयं पाठशालां विहाय स्वातन्त्र्येण वेदाध्ययनं सार्धं सनिरुक्तं कुर्वन् संस्कृतभाषी संवृत्तः। कियता कालादयं यतस्ततो भ्रामं भ्रामं भाषणादौ

वदति यदहं शर्मण्यदेशाद् वेदमधीत्य, वेदानुसन्धानञ्च विधाय समागतोऽस्मि। संस्कृत-शर्मण्यभाषे एव च जानामि, न हिन्दीभाषामित्यादि।

प्रकरणवशात् अमृतसरसि समागतेनानेन विप्रलब्धाः केचन संस्कृत—प्रणयिनोऽस्मिन् श्रद्दधानाः व्याख्यानप्रबन्धं विहितवन्तः। समाचारपत्र-प्रतिनिधिभिरपि सादरमस्य विचाराः पत्रेषु प्रकाशिताः। अस्य व्याख्यान—सूचनां लवपुरे समालोक्य केचन विद्वांसस्ततोऽपि व्याख्यानं श्रोतुं समागताः, येष्वस्माकं प्रियसुहृदः सुप्रभात-पाठकानां चिरपरिचिताः पण्डितप्रवरा ब्रह्मदत्तजिज्ञासु-महोदया अप्यासन्। तैरयं वाराणस्यां दृष्टचरः श्रीमान आशेश्वरझा, तेषां समक्षमेवं व्याख्यातवान्।

"अहं हिन्दीभाषां न जानामि। सप्तवर्षं यावत् शर्म्मण्यदेशे वेदाध्ययनं कृतवान्। तत्रत्यः सम्राट् संस्कृतभाषां मातृभाषावद् वदति। तत्र अष्टादश निरुक्तानि सन्ति। वेदानां शतत्रयाधिकाः शाखास्तत्र समुपलभ्यन्ते। अष्टाध्यायी पठनमनिवार्यं विद्यते।" इत्यादिकं तेन संस्कृत भाषायामुक्तम्। अस्यानुवादोऽपि विद्वद्वर्यैः श्रीबुलाकीरामशास्त्रिभिः कृतः एतदनन्तरं श्रीमद्भिर्भगवद्दत्तमहोदयै र्घोषणाकृता" यदष्टादश निरुक्तानि न सन्ति, नापि चैतावत्यो वेद-शाखाः समुपलभ्यन्ते। आशेश्वरझामहोदयो मृषा वदति। तदनन्तरं श्रीमद्भिर्ब्रह्मदत्तजिज्ञासुमहोदयैरपि सभायामुक्तं यदयमाशेश्वरझा मृषा भाषते। द्वित्रवर्षात् प्रागयं मया वाराणस्यां रणवीर-पाठशालायां दृष्टः। 'हिटलर महोदयः संस्कृतं वक्ति, अष्टाध्यायी शर्म्मण्यदेशे पाठ्यते'—इत्यादिकं सर्वं सर्वथा निर्मूलं भारतीयानां कृते हास्यकारकञ्चेत्यादि। अनेनावसरे जनतायां क्षोभः समजनि। सभापतिमहोदयै र्माननीयमालवीयमहोदयानां पत्रं प्रदर्शित मासीत्—यत्र लिखित मासीत् 'यदयमाशेश्वर झा शर्मण्यदेशे गतवान्।

अमुं विषयमवलम्ब्य 'हिन्दी' मिलाप-पत्रे जनतायाञ्च महदान्दोलनं प्रचलति।

अत्र विषये वयं स्पष्टीकुर्मो यदयमाशेश्वरझा वर्षत्रयात् प्रागस्माकं रणवीरपाठशालायां पठन्नासीत् नायं शर्मण्यदेशे गतः। हिन्दीं वक्तु जानाति। मालवीयमहोदयेभ्यः प्रवञ्चनं विधाय सम्मतिर्गृहीता। श्रीमतां ब्रह्मदत्तजिज्ञासुमहोदयानां वक्तव्यं वयं समर्थयामः।

जनता धूर्त्तानामेतादृशानां वाक्यं मा विश्वसेत्।

× × × ×

## रानुपाली विषये।

विगतेषु संयुक्ताङ्कत्रयेषु ( ३-४-५ ) सम्पादकीयस्तम्भे 'आदर्शधर्माचार्य'—शिरस्के टिप्पने रानुपाली-स्थानाधिपतीनां परिचायनप्रसङ्गे भावितच्छिष्याणां श्री पं० दयारामशर्म्मणां विषयेऽपि किञ्चिद्विलिखितमासीत्। सोऽयं लेखो मया निजानुभववलेनैव लिखित आसीत्। शीघ्रतया भावप्रवणतया च तत्रत्यं वाक्यमेकं केषाञ्चन खटखटायते। मया एकत्र "स्वोत्तराधिकारे नियुक्ताः" इति 'नियुक्ताः' पदम् दत्तम्, अत्र विवदन्ते केचन यत् यावत् दीक्षा—विधानं न कृतम्, तावत् नियुक्ता इति लेखनमसाम्प्रतम्।

अत्रास्माभिः श्रीमतां मोहान्त-महोदयानां सम्मतिपुस्तकमालोच्य नियुक्ता इति पदं व्यवहृतमासीत्। आँग्ल-भाषायां 'नामिनेशन' यदुच्यते तदेवास्माकमभिप्रायगोचरमासीत्। तथापि

तत्र निर्वाचिता इत्येव साधु स्यादिति विगताङ्के भ्रमनिरसनं कृतमेव । तथापि केषाञ्चन सुकुमार-मतीनामयं विरोधो निःसार एव ।

अस्माभिः साम्प्रतं पुनरेतद् विशदीकृतम् येन भ्रान्ता पुनर्भ्रान्ता न भवेयुरिति ।

## लेखकेभ्यो निवेदनम् ।

विदितचरमेव विदितवेदितव्यानां श्रीमतां यत् सुप्रभातं हि नाम विगतेषु वत्सरेषु सुरसरस्वतीं संस्कृत-समाजञ्च समाराधयन्महान्तं साफल्य-लाभमकरोत् ।

विविधकारणैः कियद्वर्षानन्तरं विगते वत्सरे पुनः प्रादुर्भूय विघ्नपरम्परां प्रतिकुर्वन् कथमपि वर्षद्वयमनैषीत् ।

एषमः चैत्रे मासि द्वादशवर्षं प्रविविक्षुणोऽस्य प्रथमाङ्को विशिष्टरूपेणादर्शभूतः प्रभवेदिति निर्द्धारितं पत्रसञ्चालकैश्च ।

अस्य विशिष्टाङ्कस्य साफल्यं भवादृशानां विद्वद्वरेण्यानां लेखकानामेव हस्ते विद्यते ।

सुरसरस्वती—सेवकानामस्माकं प्रोत्साहनं हि नाम सुरभारती प्रणयितया श्रीमतामावश्यकं कर्तव्यमिति सप्रणयं सविनयं सादरञ्चानुरुन्ध्मो यत् श्रीमन्तः स्वल्पतरं कमपि प्रबन्धं काव्यं वा किमपि नव्यं भव्यं संप्रेष्य नूनं समनुगृह्णन्त्विति ।

लेख-विषयाः केचन निर्दिष्टाः सन्ति । एतदतिरिक्तेऽपि स्वाभिमतविषये स्वातन्त्र्येण किमपि प्रबन्धं प्रेषयन्तु ।

लेखकलेवरं संक्षिप्तं स्वल्पञ्च भवेत् । लेख प्रेषण-समयो होलिकावधिकः—

सुप्रभात कार्यालयः काशी } विनीतः— श्रीकेदारनाथ शर्मा सम्पादकः

## लेख-विषयाः

—*—

वेदाः, वैदिकं वाङ्मयञ्च
वेदेषु विज्ञानम्.
दर्शनानां परस्परं सामञ्जस्यम्.
प्राच्य-पाश्चात्यदर्शनानां तुलनात्मकमालोचनम्.
विदेशेषु आर्यसंस्कृतिप्रचारः
विदेशेषु बौद्धधर्मप्रचारः, तस्येतिहासः
भारतीया स्थापत्यकला ।
भारतीयं कलाकौशलम् ।
पुराणानामनुसन्धानम् संस्करणञ्च कथं स्यात् ।
पौराणिको व्यहारिकश्च भूगोलः ॥
भारतीयेतिहासस्य रूपरेखा ।
आयुर्वेदस्य लोकोपयोगित्वम् ॥
दृश्यादृश्यवादविवेकः ( गणिते )
संस्कृतज्ञानां जीविकाप्रश्नः ।
संस्कृतभाषा कथमुपयुक्ता भवेत्.
संस्कृतवाङ्मयस्य क्रमविकाशः
काश्मीरे संस्कृत-साहित्य-विकाशः
दक्षिणभारते संस्कृत-साहित्य-विकाशः
संस्कृते लुप्त-शास्त्राणि.
आर्यसंस्कृतेः प्रचारः कथं सम्भाव्येत ?
विदेशेषु संस्कृत-प्रचारः
संस्कृतभाषायाः व्यावहारिकत्वं सम्भवति न वा ?
संस्कृत-शिक्षायां कीदृशं परिवर्तनमिष्यते ?
संस्कृत-कविचरितम् ।
संस्कृते-नाट्य साहित्यम् ।

भोः सुप्रभात सम्पादकाः !

व्यतीताङ्केषु "संस्कृतशिक्षादुरवस्था" इति शीर्षकलेखः पञ्चहायनेभ्यः पूर्वं सुप्रभाते विद्वत्तल्लजैर्मूलत्राण-वास्तव्यैः श्रीदीनानाथशास्त्रिभिः प्रकाशितान्निबन्धात्तस्य प्रकृतोपयोगितां समालक्ष्य मया संगृह्य लिखित आसीत्। अतस्तानहं सप्रश्रयं सानुतापञ्च प्रार्थये क्षन्तुम्। (गोपाललाल गोस्वामी)

अस्मिन्नङ्के प्रकाशित श्रीमदार्येन्द्रस्य निबन्धादौ "वेदाः प्रमाणम्—स्थाने वेदानाम्प्रामाण्यमिति लिखितम्प्रामादिकमिति तदीयशाब्दबोधपर्यालोचनेन प्रतीयते। परथा विभिन्नविभक्तिकपदद्वयघटित-वाक्य-लभ्य-वेद-प्रतियोगिक-सम्बन्ध-प्रकारक प्रामाण्य-विशेष्यक-शाब्दबोध-स्थाने-वेदाः प्रमाणमिति समानविभक्तिक-पद-द्वयघटितवाक्यस्वरस लभ्यशाब्दबोध-निरूपणासङ्गतेः-(जितेन्द्रियाचार्यः)

अथ कुम्भावसरे यावत्पञ्चदशदिनं सुप्रभात-कार्यालयस्य विराम आसीत्—अतएव मुद्रितोपि मार्गशीर्षाङ्कः समये ग्राहकहस्तगतो नाभूत्। एवमस्याङ्कस्यापि प्रकाशने विलम्बस्तन्निमित्तकः-- माघफाल्गुनयोः सुप्रभातांकौ साकमेवसवार्षिक-विवरणम् प्रकाशमेष्यतः

—व्यवस्थापकः

# मुक्तक-माला

निर्म्माता—साहित्यधुरीणः पं० श्रीमहावीरप्रसाद-जोशी काव्यतीर्थः, डूण्डलोदाऽभिजनः

(१)

उन्नत-कुल प्रसूतः
प्रायः, पतितोऽपि पर-हिते निरतः।
नतमपि वर्षा—नीरं,
सस्य—समृद्धिं समेधयते॥ १॥

(२)

अन्यान् पुनाति नीचो
ऽप्यङ्गीकृत-माधवाङ्ग सत्सङ्गः।
गङ्गाऽङ्गुष्ठप्रसङ्गाद्,
भव-भय-भङ्गा तरङ्ग-तरलाऽपि॥ २॥

(३)

विरहारुण—प्रतापात्,
क्षोभं याते मनः समुद्र-रसे।
विकलत्वाम्बुद—वलितं
नयन नभोऽश्रुमयान् जहात्यहो विन्दून्।

(४)

नयन—विमुक्तोऽश्रुकणो-
ऽभ्यन्तर्मेदं वहिः प्रकाशयति।
लोके गुह्यं कथयति
ग्रामे निर्वासितो हि जनः।

(५)

मा सर सरः, सरोजा-
ञ्च सङ्कोचय, विमोचय भ्रमरान्।
सान्ध्य-—प्रभा—प्रभातः
प्रभातकालो न सखि ! भवतात्॥ ५॥

(६)

शिशु-भावना-विमल-मुखि !
मा कुरु मुकुरं कर-विलासकरे।
न मलिनता माकलये—
ल्ललित-कपोल-प्रभा-विवशः॥ ६॥

(७)

सुमनः ! सुमनसि कथमिव,
ते निवसति पर—परा वनिता।
अथवा भवति समन्तात्,
कण्टकमपि कोमले कुसुमे॥ ७॥

(८)

ललने ! तव ललितानन-
लास्य-स्पृहयालु सरसिजं सरसाम्।
उपवन—पवन—प्रहतं
प्रथयति बत ! वेपथु—प्रणयम्॥ ८॥

# अद्वैतवादः क्षणिक-विज्ञानवादश्च।

बौद्धभिक्षुः—श्रीज्ञानः।

द्वैतप्रतीतिरपि विवर्त्तमात्रं, न तु पारमार्थिकं वस्तु, यस्या हेतुं भवानन्वेषते। न च द्वैतप्रतीतिर्यदि प्रतीतिमात्रं तर्हि द्वैतप्रतीतेः प्रतीतिस्तु पारमार्थिकं वस्तु तस्या हेतुनाऽवश्यं केनापि भवितव्यमिति वाच्यम्। तस्या अप्यपारमार्थिकत्वस्वीकारात्। न चैवमनवस्थादोष इति वाच्यम्। इष्टापत्तेः। ननु किन्त्वेवमपि प्रतीतिपरम्पराया अपारमार्थिकत्वमेव फलितम्। अपारमार्थिक्याश्च तस्या अभावाय किमर्थं तत्त्वज्ञानाय प्रयासः क्रियते? नहि कश्चिच्छशविषाणस्याभावाय प्रयतत इति चेन्न। यथा ह्यसत्येपि शशविषाणे कश्चिन्मूढो मतिविभ्रमाच्छक्नोति शशविषाणम्प्रत्येतुम्। तस्य चैतस्याः प्रतीतेरभावाय तत्त्वज्ञानमपेक्षितं। तथैवासत्या अपि प्रतीतिपरम्परायाः प्रतीतेरभावाय तत्त्वज्ञानमपेक्षितम्। ननु कथं ज्ञायते प्रतीतिपरम्परा प्रतीतिमात्रमिति? प्रतीत्यन्तरेण बाधे हि सति पूर्वप्रतीतेरसद्विषयत्वं ज्ञायते। यथा स्वप्नज्ञानस्य जागरितावस्थाज्ञानेन बाधे सति तस्यासद्विषयत्वं कल्प्यते। न च प्रतीतिप्रतीतेः प्रतीत्यन्तरेण बाधो दृश्यते। ततश्च कथमिदमयौक्तिकं वचनं स्वीक्रियतां प्रतीतिपरम्परा प्रतीतिमात्रमिति। किं चायौक्तिकेऽपि वचने स्वीक्रियमाणे भवदभिमतमपि तत्त्वम्प्रतीतिमात्रमिति शक्यं मया वक्तुमिति चेन्न। असीमपूर्णतत्त्वप्रतीत्या द्वैतप्रतीतेर्बाधितत्वात्। ननु कथमसीमपूर्णतत्त्वप्रतीत्या द्वैतप्रतीतेर्बाधितत्वं स्वीक्रियते? द्वैतप्रतीत्यैवासीमपूर्णतत्त्वप्रतीतिर्बाधितेति कुतो न स्वीक्रियते? नह्यन्यतरपक्षपरिग्रहे किमपि विशेषकारणं पश्यामः। किं च प्रत्यक्षसिद्धया द्वैतप्रतीत्यैव दुष्कल्पनाजालसन्दब्धस्यासीमतत्त्वस्य बाधं युक्तमुत्पश्याम इति चेत्? मैवम्। असीमपूर्णतत्त्वं हि मया पूर्वं साधितं तस्य चान्यथानुपपत्त्या द्वैतप्रतीतेः प्रतीतिमात्रत्वं स्वीकर्त्तव्यमेव। प्रत्यक्षमपि चानुमानेन बाध्यते यथाऽलातचक्रं तस्मात् प्रत्यक्षसिद्धया द्वैतप्रतीत्येत्यादि भवतो वचनमसारम्। तच्चासीमतत्त्वं तथाविधमेव यथोक्तं माण्डूक्योपनिषदि—

"यत्तदद्रेश्यमग्राह्यमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" इति।

एवं च याऽविद्या शंकराचार्येण तत्त्वान्यत्वाभ्यामनिर्वचनीयेत्युक्ता, मया तु साऽवस्तुभूतैव स्वीकृता। मम मतेन अविद्या, अविद्याजन्यो जगद्विवर्त्तश्च प्रतीतिमात्रं न तु पारमार्थिकं वस्तु। एवं चाविद्या द्वैतं प्रत्याययतीव, न तु प्रत्याययति। अवस्तुभूतत्वात्।

यत्त्वाह अरविन्दघोषः—ब्रह्मण एव विद्याऽविद्यामयी शक्तिरिति। तन्न। शक्तेर्द्वैविध्ये शक्तिमतोऽपि द्वैविध्यापत्तेः। शक्तिशक्तिमतोरभेदात्। शक्तिशक्तिमतोर्भेदस्वीकारे तत एव द्वैतापत्तिरिति!

ननु किन्तु यत् पूर्वमुक्तं भवद्भिः—"एवं तूत्पत्तिमात्रेण तस्य सत्स्वभावत्वलाभात् स्वभावस्यानपायितया कदापि विनाशो न स्यात्।" इति। अत्र ब्रूमः—कथं ज्ञायते स्वाभावस्यानपायित्वमस्तीति? यदुच्यते "स्वभावापाये तत्स्वरूपमेव

विनश्येत्, स्वभावाभिन्नत्वात् स्वरूपस्येति ।" तत्र वदामः—"इष्ट एव सहैव स्वभावेन स्वरूपस्यापि विनाशः क्षणभङ्गवादिनाम् ।' किन्तु यदुक्तमस्मत्पक्षपातिना शान्तरक्षितेन-"उत्पत्यनन्तरं किञ्चिदपि स्थितौ तस्य स्थितिस्वभावत्वलाभात् कदापि विनाशो न स्यात् ।" इति । अत्र चिन्तयामः—"किं कारणं यत् स्थितिस्वभावत्वे विनाशो न स्यात् ? सति हि वस्तुनि स्वभावानपायो ज्ञायते । विनाशे तु वस्तुन एवाभावात् कुतः स्वभावापायपर्यनुयोगः ? इति चेत् ? न

क्रमात्—

# संस्कृतछात्राणां व्यायामः

लेखिका श्रीमती तारादेवी पर्वतीया

भोः व्यायामप्रशंसकाः ?

मया एवं प्रार्थ्यते व्यायामं प्रति यथा शिक्षायाः कारणत्वं तथा कार्यमात्रं प्रति अदृष्टस्य कारणत्वं सर्वैं दार्शनिकैः स्वीकृतं स्वीकरिष्यते च । पूर्वजन्मनि यदभ्यस्तं तस्मिन्नेव जन्मान्तरे प्रवृत्तिरित्यपि नियमः असति प्रतिबन्धके । प्रतिबन्धकात्यन्ताभावस्य च कार्यमात्रं प्रति कारणत्वात् ।

केनापि दुष्कर्मणा मार्जारादि हीनशरीरं लब्धं तेन पुनः सुकृतकर्मणा ब्राह्मणादि शरीरं लब्धं चेत् । मार्जरशरीरे अभ्यस्तं मूषकभक्षणादिकं नैव करोति । ब्राह्मणरीरोत्पादक सुकृतकर्मणः तत्प्रतिबन्धकस्य जागरूकत्वात् । अतः प्रतिबन्धकाभावस्य कार्यमात्रं प्रति कारणत्व मवश्यं शिरसि धार्य्यम् ।

व्याकरणादि—महाशास्त्रार्थ-तत्वाम्भोधिनिमग्न-मनसां कुतः शरीर—रक्षणापेक्षा ? ये च शास्त्रे पूर्वं दर्शिता व्यायामशालिनः ते क्षात्रविद्या विशारदाः । नतु योगविद्या विशारदाः । ये च योगविद्याविशारदा भारद्वाजादयस्तेषां पुरस्तात् व्यायामविद्या -विशारदास्तृणदेशीया एव ।

मल्लविद्याविशारदा माथुरा बहवः श्रूयन्ते । पाश्चात्यभाषा-शिक्षारताश्च बहवो नगरे नगरे गृहे गृहे च वंभ्रमन्ति तैः किं भारतवर्षस्य आदरो मनसा वाचा कर्मणा वा क्रियते ? नैव कुत्रापि दृश्यते, गीर्वाण—भाषाशिक्षाकुटीं प्रविष्टा अपि तथैव वर्तन्ते । किंच गीर्वाणभाषा–शिक्षाकुटीप्रविष्टेभ्यो जनैः किं दीयते । उदरपूर्त्यर्थं रूक्षान्नं यैर्दीयते ते धर्म्मधुरीणाः प्रोच्यन्ते आधुनिकैः । प्रायः गीर्वाण–भाषाकुटीप्रवेशाः गर्भदरिद्रा एव बोभूयन्ते । तेच मल्लविद्याशिक्षायां प्रविष्टाश्चेत्व रुग्णा एव भवेयुः । व्यायामोत्तरम् ( गुडोवाचणकावा ) अर्धसेटक-परिमितं दुग्धं वा अवश्यमपेक्षितम् । केवलं जलपाने रोगासन्नतां भजेयुः । मल्ल शिक्षादीक्षा–कोविदैः गीर्वाणभाषा–कुटीप्रविविक्षुभ्यः दुग्धपानार्थं द्रव्यं देयं यतः केवलसंस्कृत–पाठकाः शिक्षकाश्च दरिद्रा एवात्र भवन्तो भवन्ति । ये च व्यायामकर्तारस्तेभ्यो दुग्धं चणकंवा दातुं तत्तत्संपत्तये प्रतिग्रामं प्रतिगृहं वा कौटुम्बिकेभ्यः कपर्दिकातो लक्षमुद्रापर्यन्तं द्रव्यं संकलय्य प्रधानराजकीयकोशालये मांडलिक-कोशालये वा स्थापयित्वा वार्धुषिकवृत्या प्रधानपाठशालाध्यक्षहस्तात् ते ते पदार्थाः संपादनीयाः । ततो व्यायाम-शिक्षोपदेशः सफलतां व्रजेत् ।

# परिजात-हरण-महाकाव्यस्य प्रथमः सर्गः।

ले० उमापतिशर्मा कविपत्तिः

## द्वारिका वर्णनम्।

श्रियं समस्तामुपधाय मानवी मनन्यतन्त्रस्सकलेश्वरो हरिः।
विधाय निर्बाधतरम्भुवस्तल कुशस्थलीं सर्वसुखै रमीमिलत्॥ १॥

पुरीमभिद्योतित-वार्धि-वाससम्विभासि-रत्नोज्वल-भूषणामिमाम्।
शिरस्समालम्बि-घनालकामसावशादसाधारण-नायिकामिव॥ २॥

विभूतिभि र्विष्णुपुरीयमात्मना त्रिलोकमप्येकतमाऽत्यशेत किम्।
अजस्रमभ्रङ्कषकाशिभिर्गृहैस्सुमेरुरस्यास्समता मियाल्लघुः॥ ३॥

व्यधादिमां विश्वकृदव्ययो यदा पयोधिमध्येऽखिलरत्नराशिभिः।
स्खलत्कणानेष विचित्य तत्प्रभृत्यवाप रत्नाकरताम्पयोनिधिः॥४॥

उरीकृतानुत्तम-वैभवा पुरी धुरीणलोकाध्युषिताऽधिकद्युतिः।
श्रियापवर्गश्च विवृण्वती हरेः पुरीं हरेः क्वापि तृणाय मन्यते॥५॥

इयं क्वचिन्मारकतीन्दुकान्तकैः कृता महानीलशिलामयी क्वचित्।
दधाति-भानूपलशालिताऽनिशं घनं दिनं पूर्णनिशां कुहूमपि॥ ६॥

त्रिलोकचित्राकृति-चित्रिताशया पुरीयमभ्यर्णचरार्णवाऽनिशम्।
सुवर्णकेतोर्जगदाश्रयीभवत्तनुन्दधानाऽप्यतिशेत एव ताम्॥ ७॥

इहत्यकुड्येष्वतिभासिषु स्फुटम्फलत्प्रतिच्छाय-कुलाकुले जने।
न जातु सत्यत्वमृषात्वयोः परम्प्रमातुमीष्टे प्रतिभापि काचन॥८॥

जगत्कला-कौशल-सारशालिनी मणिव्रजा-वासित-तोरणस्रजाम्।
इयं रुचीनाम्निचयैर्यथा श्रियाऽभ्युपैति नीराजनमन्तिके पुरी॥ ९॥

पदान्त-संसर्पि-सरित्पतिस्सदा प्रतीन्दु-भासद्रुत-चन्द्रिरोपला।
पद-प्रभूत-द्युसरिद्धरिन्तथाऽनुयात्यसौ देवधुनीधरं हरम्॥ १०॥

इयं क्वचित्पान्थ-गतागतैस्स्फुरद्रजःपरिम्लानि मुपैतु नेत्यमूम्।
तदा तदैन्दूपलनिर्गलज्जलच्छलात्सुधाभिर्विधुरेव लिम्पति॥ ११॥

इयं सदा वैद्युत-यन्त्र-वीजिता प्रवातमप्यात्मकृते न लिप्सते ।
तथाप्यसौ सम्भ्रम-सम्भृतात्मना विशेषिणा गन्धवहेन सेव्यते ॥ १२॥

निजप्रभाऽपास्तदिनत्वयाभिदा न भानुमीप्सत्यपि भासितुं क्वचित् ।
अपित्विदम् भित्तिग-भानवोपलान् करैरभिद्योतितुमाश्रयत्यसौ ॥ १३॥

ज्वलन्ति यत्रौषधयो वने वनेऽजरामरत्व-प्रदशक्ति-शालिताः ।
गृहे गृहे ते मणयोऽप्यभीष्टदा जने जने मन्त्रमयो महोदयः ॥ १४॥

प्रदीप्त-जाम्बूनद-जालमालिनी सुजातरूपैः कलशैरलङ्कृताः ।
विभक्त-राजाध्व-वराजिराचिरम्पुरी प्रतिष्ठेव भुवस्स्वरूपिणी ॥ १५॥

वितायमानाम्बुशरद्-घनान्तरे प्रवृष्टमुक्ताऽकृति-बिन्दुलोलुपाः ।
यदीयधारागृहवारियन्त्रकं समाश्रयन्ते शिखिचातकादयः ॥ १६॥

विदूरसम्पाति-कणेषु दाडिम-प्रवीज-विभ्रान्त-शुकैश्च सारसैः ।
बिसावबोधैरधिधारमाश्रिता सदेह सन्नृत्यति वारियन्त्रिका ॥ १७॥

प्रकाम-संक्षोभ तरङ्गिताशयौ रहस्य-वार्तायित-सारसस्वनौ ।
प्रफुल-पङ्केरुह-चेष्टि-लोचनौ मधुव्रतालापविश्रृङ्खलौ चिरम् ॥ १८॥

अहर्निशं साधुरसातिरेकिणौ प्रकम्पनैस्सात्त्विक–भावमास्थितौ ।
पदे पदेऽस्यास्तु मिथो मनोहरौ सदा रमेते सरसी सरोवरौ ॥ १९॥

परिस्फुरन्मीन–मनोहरेक्षणाः क्षणे क्षणे स्रस्तदुकूल–शैवलाः ।
चिरादिहोच्छ्रायि–पयोधरास्सदा न वापिकाः कस्य हरन्ति मानसम् ॥ २०॥

विलङ्घयन्नम्बरमुच्छ्रितद्युतिर्विचित्र-पुष्प्यत्तरु-वीरु दुल्लसन् ।
विलासिनी-सौरत-सौरभोद्धुरो लसत्यलङ्केलि शिलोच्चयः कृतः ॥ २१॥

गृहे गृहेऽस्याः परिकल्पितस्थले विशेष-बुद्ध्या विधिनैव वेशितः ।
सदाभिगुप्तो हिमहारि धारणो ज्वलन्नपीमां ज्वलनो न बाधते ॥ २२॥

( क्रमात )



# जगतो ब्रह्मात्मकत्वं प्रतिमोपासनञ्च ।

( निबन्धकः श्रीधर्मराजः )

सर्वस्यास्य जगतो मूलकारणमभिव्यञ्जकं परब्रह्म परमात्मेति । तथा हि तैत्तिरोपनिषदि–

"असद्वा इदमग्र आसीद् असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति । सोकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । इदं सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च सत्यं चानृतञ्च ।"

इदं हि श्रुते र्हृदयं यत्सर्वमस्मिन् संसारे वस्तुजातं, यद् दृश्यते शुभमशुभं वा, तत्परमात्मन एव जातम् । असावेव च विविधतया राजमानो विश्वस्य वैचित्र्यमाकलयति । स एवैतेषां पदार्थानामाधारः, स एव नियामकः तत्रैवैषां सर्वेषां स्वरूपं स्थितिश्च न ततो भेदं प्राप्येमे क्षणमप्यवतिष्ठेरन् । तदेवाह यास्काचार्यः—

"आत्मजन्मानः । आत्मैवेषां रथो भवति । आत्माश्वः । आत्मायुधम् । आत्मेषवः । आत्मा सर्वं देवस्य देवस्य ।"

अशेषमिदं विष्टपं परमात्मकृतं, परमात्मप्रेरितं, परमात्मस्थम्, असावेव समस्तद्रव्येषु तिष्ठन्नन्तर्नियमयति, ईशो ह्यसौ जगतः प्राणभूत आत्मा, स सर्वमीष्टे, प्राणयति, धारयति च । तं विना निखिलस्यास्य प्रपञ्चस्य निष्प्राणता, अवस्थातुमशक्यता, तथा चोक्तमथर्ववेदे ।

'स्कम्भे लोकाः स्कम्भे तपः, स्कम्भेऽध्यृतमाहितम्,
स्कम्भ त्वा वेद प्रत्यक्षमिन्द्रे सर्वं समाहितम् ।'

अपि च,

स्कम्भो दाधार द्यावापृथिवी उभे इमे,
स्कम्भो दाधारोर्वन्तरिक्षम् ।
स्कम्भो दाधार प्रदिशः षडुर्वी,
स्कम्भ इदं विश्वं भुवनमाविवेश ॥

अत्रैष गूढोभिप्रायः । यथा हि वृक्षः स्वस्कन्धमवलम्ब्य तिष्ठति, तथैवाखिलचराचरलोकस्यापि परमात्मा स्कन्ध इव वर्त्तते किञ्च, तत्रैवाथर्वणि,

"वेदाहं सूत्रं विततं यस्मिन्नोताः प्रजा इमाः
सूत्रं सूत्रस्याहं वेदाथो यद्ब्राह्मणं महत् ।

अन्यच,

"महद् यसं भुवनस्य मध्ये,
तपसि क्रान्तं सलिलस्य पृष्ठे
तस्मिञ्छ्रयन्ते य उ के च देवा,
वृक्षस्य स्कन्ध परित इव शाखाः ।" इति ॥

अत्रायमाशयः । सर्वो हि लोको ब्रह्मणा व्याप्तः, सर्वत्र तदेव ब्रह्मसूत्रमोतमिति निखिलं जगत् ब्रह्मात्मकं, तद्ब्रह्म च चिदचिद्रूपस्यास्य सर्वस्य व्यावहारिक–जगद्विशेषणस्य विशेष्यभूतम् । ज्येष्ठब्रह्मणो जीवः प्रकृतिश्च अङ्गे विशेषणभूते इति न पृथक् स्थित्यर्हता तयोः ।

यथा समवायसमवायिनो रच्छेद्यसम्बन्धस्तथैव विशेष्यविशेषणयोरपि । गोत्वं गवि समवायसम्बन्धेन विशेष्यविशेषणसम्बन्धेन वा तिष्ठति, तथा च गोत्वं समवेतं, गोत्वविशिष्ये वा गौरिति प्रयुज्यते । गोत्वं हि गोरात्मा स्वरूपं वा । गोत्वमेव प्रकाशयति गोपदार्थम् । तथैव परमात्मा जगति समवेतः, तत्प्रकाशकः, यथा वा सत्तासामान्यं गोत्वे अश्वत्वे घटत्वे पटत्वे वा सत् सर्वजातिपदार्थानू व्याप्नोति, तथैव परमात्मापि सर्वत्र सर्वप्र-

कारकेषु पदार्थेषु व्याप्तम् । एषा जातिश्च दर्शनशिरोमणिना अफलातून विदुषा "महत्तमा जाति"रथवा" Highest Idia" इति नाम्ना प्रतिपादिता । यावत् कस्मिंश्चित्पदार्थविशेषे एतज्जातिरूपात्मत्त्वं तावदेव तस्य सत्त्वं शोभनत्त्वमुपयोगित्त्वञ्च । एष एव परमजातिरूप आत्मा कृत्स्नं चेतना-चेतन-प्रपञ्चमिदमभिव्यञ्जयति । वैविध्यं दरीदृश्यमानमपि तन्मूलं तदायतनं तन्नियाम्यं तदाधार्यमिति कार्यकारणमुखेन तादात्म्यमेव प्रख्यापयतीत्युक्तम्,

सर्वं खल्विदं ब्रह्मे"ति ।

तथा च,

"तस्मिंल्लोकाः श्रिताः सर्वे तदुनात्येतिकश्चन । एतद्वै तत् ।"

"अग्निर्यथैको भुवनं प्रविष्टो,
रूपं रूपं प्रतिरूपो बभूव,
एकस्तथा सर्वभूतान्तरात्मा ।
रूपं रूपं प्रतिरूपो बहिश्च ।"

अथापि,

"न तत्र सूर्यो भाति न चन्द्रतारकम्,
नेमा विद्युतो भान्ति कुतोयमग्निः ।
तमेव भान्तमनुभाति सर्वम्,
तस्यैव भासा सर्वमिदं विभाति ।"

इदानीं यावदस्माभिर्जगतो ब्रह्मात्मकत्वद्वारेण परमात्मनः शरीरित्वं व्याख्यातम् । सम्प्रतीदं विचार्यते, शरीरी चेत् परमात्मा, निराकारोऽकायो वा न स्यात् ? परन्तु किं नाम साकारत्त्वं निराकारत्त्वं च ? न हि देवदत्तशरीरस्येन्द्रियगोचरस्य साकारत्त्वोपलब्धौ तस्यात्मापि साकारः स्यात्, नापि वृक्षस्य बाह्येन्द्रियप्रत्यक्षत्वे सत्यपि तदात्मा वृक्षत्त्वं साकारतां लभेत । आत्मानस्तु न कथमपि त्वदभिमतां साकारतां लभन्ते । कुतः ? तेषां समेषां विभुत्त्वात् अणुत्वेप्याकारस्य सर्वथोपपादयितुमशक्यत्त्वात् । यद्यात्मा प्रत्यक्षसामान्यगोचरो भवेत् कुतो हि श्रुतिः प्रवर्त्तेत ?

"आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।" इति ।

वस्तुस्थितिस्त्वीदृशी—जातिरात्मा वा स्वात्मानमभिव्यक्तीकुर्वंस्तत्तत्पदार्थेषु मूर्त्तं रूपमापद्यते । तथा हि घटत्वे घटत्त्वं मूर्त्तं, पटे पटत्त्वं तथैव यदा परमात्मा चिदचिदोरभिव्यज्यते तदासौ मूर्त्तः साकाररूपेण स्थित इति यावत् । प्रमाणञ्चेदिष्यते—

द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चामूर्त्तञ्चे'ति ।

एतदेव परमात्मनोऽवरम् परमञ्च रूपमिति व्यवह्रियते । निदर्शनञ्चाथर्ववेदे—

"अर्वागन्यः परो अन्यो दिवस्पृष्ठम्
गुहानिधी निहितौ ब्राह्मणस्य ।
तौ रक्षति तपसो ब्रह्मचारी
तत्केवलं कृणुते ब्रह्म विद्वान् ॥"

अस्मिन् संसारे मूर्त्तयत्यात्मानं ब्रह्म, अतो हि संसारस्य सर्वे पदार्थास्तस्य ब्रह्मणो मूर्त्तिरित्यभिधीयते । तेषां ब्रह्ममयत्त्वाच्च ब्रह्मविद्या ग्रन्थेषूपनिषत्सु, विशेषतश्च सामवेदीयछान्दोग्योपनिषदि प्रतीकोपासनाऽऽदिष्टा ।

तथा हि—

"मनो ब्रह्मेत्युपासीतेत्यध्यात्मम् । अथाधिदैवतयाकाशो ब्रह्मेत्युभयमादिष्टं भवति ।" तथा च,

"आदित्यो ब्रह्मेत्यादेशः । एवं हि,
'कं त्वमात्मानमुपास्स इति आदित्यमेव भगवः ।'
'कं त्वमात्मानमुपास्स इति वायुमेव भगवः ॥'
'कं त्वमात्मानमुपास्स इति आकाशमेव भगवः ।'
'कं त्वमात्मानमुपास्स इति अप एव भगवः ।'
'कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवः ।'

इदानीं समीक्षन्तां भद्राः किं वाय्वादित्यानां न जडत्वम् ? किमेषोपनिषज्जडोपासनामादिशति ? नैवम् । यथा वृक्षाणामात्ममयत्वाजडत्वमद्यत्वे निराक्रियते तथैवाशे-

वस्तुनो ब्रह्ममयत्वाज्जडत्वं निराकृतं भवति । वस्तुतस्तु यदा वाय्वादित्यौषधि-—विष्णुशिवलिङ्गादयः स्तूयन्तेऽथार्च्यन्ते तदा महर्षि-यास्कवचनानुसारेण—

"प्रत्यक्षदृश्यमेतद्भवति महाभाग्याद्देवताया एक एवात्मा बहुधा स्तूयते । एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति ।

अपि च सत्वानां प्रकृति भूमभि-
र्ऋषयः स्तुवन्तीत्याहुः ।
प्रकृतिसार्वनाम्याच्च । इतरेतर-
जन्मानो भवन्तीतरेतरप्रकृतयः ॥

वेदे तु सूर्यो देवता, चन्द्रमा देवता, ओषधिर्देवता, उलूखलमुसलौ देवते; किञ्च सर्वमेव देवतापदेन व्यवहृतम् । वस्तुतस्तु घटरूपे अभिव्यक्तः परमात्मैव घटदेवता, वनरूपेणाभिव्यक्तः परमात्मैव वनदेवता, सरस्वतीरूपेण प्रकाशितः परमात्मैव सरस्वती देवता । देवताशब्दो नैकान्तेन विशेषविशेषपदार्थेषु प्रयुज्यते, किन्तर्हि ? यावता किमपि ब्रह्मणो रूपं व्यवह्रियते तावतैव देवतात्त्वम् । अतएव निरूक्ते" अथोताभिधानैः संयुज्य हविश्चोदयति "इन्द्राय वृत्रघ्न" इति, तान्यप्येके समानन्ति "अथोत कर्मभिर्ऋषिर्देवताः स्तौति 'वृत्रहा पुरन्दर' इति तान्यप्येके समामनन्ति ।"

इमा असङ्ख्याका देवता एकस्या एव परदेवताया बहुविधनामधेयभाक्त्वेन भवन्ति । अपि वा कर्मपृथक्त्वाद्व यथा होताध्वर्यु-ब्रह्मोद्गातेत्येकस्य सतः । याथार्थ्ये तु—

"तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म ता आपः प्रजापतिः ॥"

एवं तर्हि द्विविधोपासना भवति साकारस्य निराकारस्य च । तत्र निराकार-पूजां परमां कथं स्वल्पबुद्धयः कुर्युरिति तेषां कृते मूर्त्तिपूजायाः प्रतीकोपासनाया वा उपदेशः तथा हि धर्मशास्त्रे—

"निर्मलस्याद्वितीयस्य निष्कलस्याशरीरिणः,
उपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पना ।"

आपाततस्तूत्तरगीतायां यथा—

"गुरुरग्निर्द्विजातीनां मुनीनां हृदि दैवतम्,
प्रतिमास्वल्पबुद्धीनां, सर्वत्र समदर्शिनाम् ।",

यजुर्वेदेऽपि—

"त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्"

अस्य व्याख्यानं ब्राह्मणे—

"त्रीणि अम्बकानि यस्य स त्र्यम्बको रुद्रो महादेवस्तं त्र्यम्बकं यजामहे सुष्ठुगन्धिं पुष्टिकारकम् इति ।

अथर्ववेदे च—

"मुखायते पशुपते यानि चक्षूंषि ते भव,
त्वचे रूपाय सद्दृशे प्रतीचीनाय ते नमः ।"

मनुस्मृतौ तु—

"नित्यं स्नात्वा शुचिं कुर्याद्देवर्षिपितृतर्पणम्,
देवताभ्यर्चनं चैव समिदाधानमेव च ।"

टीकाकारेण गोविन्दराजेन चात्र प्रतिपादितम्—

"देवतानां हरादीनां पुष्पादिनार्चनम्"
"प्रतिमानामेतत्पूजाविधानम्" इति मेधातिथिः ।
"देवतानामर्थनं पुष्पाद्यै" रिति सर्वज्ञनारायणः ।
तथा च "प्रतिमादिषु हरिहरादिदेवपूजनम्"

इति कुल्लूकभट्टः ।

अथापि शतपथे—

"अथ मृत्पिण्डमुपादाय महावीरं करोति, प्रादेशमात्रमिव हि शिरोमध्ये संगृहीत यथास्योपरिष्टाद्द त्र्यङ्गुलं मुखमुन्नमयति" "अथैतान्धूपयति-अश्वस्य त्वा वृष्णाः शक्ना धूपयामि देवयने पृथिव्याः ।"

इतश्च श्रीमद्भगवद्गीतायाः प्रसिद्धः श्लोकः—

'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृत मश्नामि प्रयतात्मनः ॥"

पत्र—पुष्पादिभिरर्चनं न कथमपि निराकारस्य भवेत् भगवतः श्रीकृष्णस्यैतेन निर्द्देशेनावश्यमभ्युपगन्तव्यं यत्सास्मृतं हि खलु मूर्त्तिप्रतिमादिस्थूलपदार्थद्वारा परमात्मन अर्चनं स्तुतिरूपोपासना प्रार्थना चेत्यलमति विस्तरेण ।

## भ्रान्ति-निरसनम् ।

अथाशौचन्तच्छुद्धिश्च व्यवस्थाप्यते। तत्र प्रधानतया द्विविधाशौचघटकीभूतजननेतराशौचतच्छुद्धिव्यवस्थितिहेतुकशौचाशुद्धिव्यवस्थाया आपाततो व्यवस्थितत्वात्। शास्त्रीयव्यवस्थानास्थितवतो जनस्य विहितानानुष्ठानादविहिताचरणाच्च पातित्यपरिहाराय शास्त्रैकशरणत्वाच्छुद्धिः। सपिण्डमरणादिनिमित्तकं-संस्कृतब्राह्मणस्य दशरात्रव्यापकमितरेषां स्वस्ववृत्तितत्तज्जात्याश्रमभेदनिबन्धनमनेकविधम्। तथाहि-"शुध्येद्विप्रो दशाहेनेत्यादि"दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके" "यस्य यस्य तु वर्णस्येत्यादि" "दशाहं प्राहुराशौच मिति" एवञ्चाशौचात्प्राक्-श्रुति स्मृत्युदितसर्वकर्मानर्हता विधीयते तद्घटकदिनविहितकर्मव्यतिरेकेण,। तथाच "संन्ध्यां पञ्चमहायज्ञान्नैत्यिकं स्मृतिकर्म च। तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः-क्रिया" "उभयत्र दशाहानि कुलस्यान्नं न भुज्यते, दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते"। नित्यानि चैव कर्म्माणि काम्यानि च विशेषतः, न कुर्य्याद्विहितं किञ्चित्स्वाध्यायं मनसापि च" दशाहात्तु परं सम्यगधीयीत जुहोति च।" "त्रिरात्रं दशरात्रं वा ब्राह्मणानान्तु शावकं--प्राक् संस्कारात्त्रिरात्रं स्यादस्मादूर्ध्वं दशाहकम्" इत्यनेक-निबन्ध-घटक जागरूक-वचनसम्मतत्वात्। आशौचान्त-दिनीय-पिण्डपातोत्तरकालिक-तद्दिनीय-क्षौरादिकर्महेतुक-शुचित्वापादक-शास्त्रस्योपलम्भात् ततःप्रभृति सर्वविधवैदिककर्मार्हत्वस्य लोके समुदाचारात्। तद्दिनात्प्रागपि सपिण्डानां क्षौरादिविधानस्य शास्त्रेऽनुपलम्भात्---लोकविरुद्धत्वाच्च तादृशकर्माचरतो जनस्य प्रायश्चित्तार्हत्वात्। तथाच दशमेऽह्नि सम्प्राप्ते स्नानं ग्रामाद्बहिर्भवेत्" "समाप्य दशमं पिण्डमिति। यत्तु कश्चिन्मेधावी स्वाशौचावसानीयदिनात्प्रागपि प्रथमाद्यन्यतम-दिनाधिकरणक-क्षौरादिविधेः शुचित्वहेतुकत्वं सपिण्डानां, नत्वन्तिमदिनकर्मण एवेति विभ्रुवन्स्वयमनुतिष्ठंश्चोपदिशति "द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः। तृतीये पञ्चमे वापि सप्तमे वा प्रदानतः" इत्येकविसंवादिवचनप्रामाण्यात्, इति तन्न। एतादृशव्यवहारादर्शनेन तथाविधान्यवचनानुपलम्भतया नैवंविधवाक्यस्य तदुक्तार्थे अप्रामाण्यात्, अतएवास्य कमलाकरभट्टकृततात्पर्य्यान्तरवर्णनं संगच्छते, विज्ञानभिक्षुणापि "स्मृत्यन्तरेऽपि" इत्युक्त्या तन्नामाग्रहणेन, अपिशब्दस्वारस्येन सम्भावनां विभाषावचनादनित्यताञ्च बोधयता "श्राद्धदानात्प्रागनियम" इति स्वाभिप्रायाविष्करणाच्च श्राद्धकर्तव्यैवोपसंहारस्यौचित्यं निरूपितम्। व्यवहारस्य तथैव दृश्यमानत्वात्। इतरथा वृद्धिमदाशौचस्य बाधकत्वोक्तिरसंगता स्यात्। दशरात्रादिभिन्नरूपेण शुद्धिबोधकशास्त्रवैयर्थ्यापत्तिश्च तन्मध्ये नित्यादिकर्मत्यागोक्तिवचनाप्रामाण्यमविहितानुष्ठानस्य पातित्यप्रयोजकत्वञ्चापतेत्। अतएव--मदनपारिजाते "प्रथमदिनेषु कृतक्षौरस्यापि शुध्यर्थं दशमदिने वपनं कर्तव्यं। सूतकान्त-कर्तव्य-वासस्त्याग-साहचर्यात्। केशश्मश्र्वादि-त्यागोपि सूतकान्ते कर्तव्य इति दशमदिनाकृतक्षौरस्याशुचित्वबोधनं संगच्छते तथाच "सूतकेमृतके क्षौरं न कुर्य्याद्दशमेह्नि यः, तस्याशौचं भवेन्नित्यं पितरो नरके स्थिताः" इति कृष्णभट्टकृतव्याख्यानीयवचनात् अत्रैव 'द्वितीयेह्नि' इति वचनं दग्धूपरमिति स्पष्टमुल्लेखाच्च।

(अवशिष्टमन्तिमपृष्ठेऽद्रष्टव्यम्—सम्पादकः)

# प्रतापप्रतिज्ञा

"कविरत्न" श्रीमदीशदत्तशर्मा

सुप्रभातपाठकानां प्रायः सुपरिचित एव विद्यते । अनेन "प्रतापचरितं"नामकं खण्डकाव्यं सरलसरसवाण्या व्यलेखि। तस्यैवायं भागः व्युत्पित्सुभिर्व्युत्पन्नैश्च संग्रहयोग्यं विद्यते । अद्यत्व इतरभाषासु नवनवकवय आविर्भवन्ति। परन्तु संस्कृते नवकवयो नैव प्रोत्साह्यन्ते। पुराणान्येव काव्यानि साधीयांसीति मत्वा अन्यत्र अक्षिणी न क्षिपन्ति। अत एव गीर्वाणवाण्यां कवयो दिने दिने विरला भवन्ति। वयं तु सर्वेषां संस्कृताभिज्ञानां पुरः सानुरोधं "पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यं । सन्तः परीक्ष्यान्यतरद्भजन्ते" इतिमहाकविवचनंस्मारयन्तोऽस्य काव्यस्य सर्वत्र प्रचारं कामयामहे--

सम्पादकः—

( प्रकाशितादग्रे )

( ११ )

या मञ्जुनूपुररवै रमणी–मणीनां
पीयूषतोऽपि मधुरैर्मधुरा पुराऽऽसीत् ।
सेयं 'चितौर'नगरी नगरीष्वनन्या
कस्याद्य नैव हृदयं हठतो दुनोति !

( १२ )

'वाप्पा'कुलेऽमलतमे न गृहीतजन्मा
नाहं 'प्रताप'इति विश्रुतभीमकर्मा ।
वीराङ्गना न जननी मम; नास्मि शूरः
चेन्म्लेच्छमण्डलमलं निखिलं न हन्मि !!

( १३ )

शोकं विधेहि नहि भारतभृंग ! नूनं
यत्पारतन्त्र्यरजनीगतपद्मबद्धः ।
भूयो भविष्यति चिराय सखेऽधुनैव—
स्वातन्त्र्यसूर्यकिरणारुणसुप्रभातम् !!

( १४ )

क्रोधाऽग्निना दहति हा हृदयं मदीयं
हस्तश्च संस्फुरति वैरिवधे स–कुन्तः ।
भूयश्च लौहकवचाकुलमस्ति वक्षः
यद्देश एष मम वैरिजनेन विद्धः !!

( १५ )

रे रे मदीयकरमुग्ध ! कठोर–कुन्त !
कालात्कराल ! कुटिलप्रहरेण किन्ते ।
यच्छ्वासति त्वयि सदा रिपुशोणितार्द्रे !
जीवन्ति दुष्टहतका यवना जगत्याम् !!

( १६ )

भ्रातुः सहोदरवरस्य वधाय पूर्वं–
योऽभ्युद्यतोऽभवदहो समरे दुरन्तः ?
तस्यास्ति ते करुणया किमु नाम कार्यं–
शीघ्रं कृता न जनता न नताननां चेत् !!

( १७ )

प्राणादपि प्रियतमा निजपूर्वजानां
मान्या पुनर्भवतु जन्मधरा स्वतन्त्रा ।
साऽऽभारतीतिगुणावलिरद्य भूयः
सा भारती भवतु भारतवर्ष–भूत्यै !



# पञ्चमहाभूत-परिषद्-प्रश्न-मीमांसा ।

श्रीमान् हरिनाथशास्त्री दर्शनाचार्यः

[लेखकमहोदयाः काशीहिन्दुविश्वविद्यालये अस्मिन्वत्सरे सञ्जात-पञ्चमहाभूत-परिषदः सदस्या निरीक्षकाश्चासन्-अतस्तत्रतैर्विचारित-प्राच्य-प्रतीच्य—मतमधिकृत्य समालोचनात्मकः प्राचीनमतसमर्थको लेखो व्यलेखि । स चात्र क्रमेण प्रकाश्यते-] सम्पादकः

नन्दाङ्गणे नन्दगृहीतपाणिरानन्दयन्नन्दनिकेतलोकम् ।
आनन्दवल्लीवलिताङ्गयष्टिश्चेतश्चिरं चोरयतान्मुकुन्दः ॥

अयि विद्याविलासिनीविलासविलसन्मानसाः सुमनसः, ? विदन्त्येवात्रभवन्तः परमार्थदर्शिनां तत्रभवताम् ऋषीणाम् करुणाक्रान्तचेतसां परार्थ-प्रवृत्तिम् । ते दुःखसागर-निमग्न-प्राणि-निचयान् उद्दिधीर्षवः कृपयैव त्रिविध-ताप-संताप-भेषजानि महता योगबलेन साक्षात्कृत्य शास्त्ररूपेणोपदिदिशुः । तत्र तत्र तेषु तेषु मन्त्रायुर्वेदेषु प्रत्यक्षमेव प्रामाण्यं तेषां नात्र शङ्कालेशोऽपि कस्यापि तथा-विधमपि स्वोक्तमप्रामाण्यशङ्का-कलङ्क-पङ्कापहतये तैः परीक्षितमपि महता संरम्भेण अनन्तरमपि अर्वाचीनैः प्राचीनैश्च विद्वद्वरैयैः श्रीशबरस्वामि-पक्षिलस्वामि-प्रशस्तपाद-कुमारिल-श्रीभगवत्पाद-वाचस्पत्युदयन—गङ्गेश्वरादिभिः परःपञ्चसहस्रं वर्षाणि परीक्ष्य युक्त्या योजितोपि स एव कलिमाहात्म्यात् दुर्भाग्याद्वा तेषु दोषशङ्कावशादत्यर्वाचीनैः प्रत्यक्षैकदर्शिभिरत्युत्तानहृदयैः श्रद्धादरिद्रैर्निर्मलः पदार्थ-तत्त्व-रत्नाकरः धूलीप्रक्षेपेण कलुषीक्रियते । अहो धार्ष्ट्यं तेषां । कष्टं कलेर्महत्त्वं च । ये संस्कृत-भाषा-संस्पर्शमपि कृष्ण-वृश्चिक-पुच्छाग्रमिव दूरतः परिहरन्तः ऋषिप्रणीतग्रन्थानाम् [illegible] नामा-न्यपि न विदुस्तैरुत्थापितम् तदुक्तिषु दोषकलङ्कपङ्कमपि कियत्पर्य्याप्तम्भवेदिति भव्यैर्भावुकैरेव वेद्यमिति केषामग्रे अरण्य इव रुदामः ।

इत्थं श्रवणाधिकारि-विधुरेऽपि लोके मौनावलम्बनम् निगृहीततां नेष्यतीचेति संभावयन् पिष्टपेषणप्रवृत्तो विद्वद्भिः क्षम्य इति सविनयं निवेदयन् पञ्चमहाभूत-चर्चा-परिषदि विचार्य्य-प्रश्नान् कक्षीकुर्वन्नेव किमपि वक्तुमुत्सहे ।

अयि सहृदयाः ! विदित-वेदितव्यानामाप्तकामानामत एव नित्यतृप्तानां महर्षीणां शास्त्रोपदेशे कारुणिक्यैव प्रवृत्तिः । न खलु ख्यातिलाभ-पूजार्था इदानीन्तनानामिवेति सर्वसम्मतमेव तद्विशेषविदाम् । ते च परम-पुरुषार्थोपदेश-मार्ग-पथिका अपि तत्रतत्र लौकिकानपि पदार्थान् पामरानुराग विषयान् क्षयिणः परिणामविरसान् अपि वैराग्यार्थम् अनात्मवर्गेभ्य आत्मविवेकार्थम् च प्रसङ्गानुप्रसङ्गक्रमेण तत्रतत्रान्वचिन्वन् इत्यपि विदितमेव । अतस्तत्र तत्र व्यवहार्य्ये वस्तुनि सर्वेषां मतभेदेऽपि परमार्थे वस्तुनि न क्वापि केषामपि विरोधः । अत एव कुत्रचिदारम्भवादः, कुत्रचित्परिणामवादः, कुत्रचिद्विवर्तवादः, कुत्रचित् पञ्चविंशतितत्त्वानि, कुत्रचित्षड्विंशतिः, कुत्रचित् षोडश, कुत्रचित् षडेवेति कुत्रचिदाहत्यैव स्थूलभूतानि सूक्ष्मभूतान्यारभन्ते कुत्रचिद्द्व्यणुकादिक्रमेण कुत्रचित्पञ्चभिः परमाणुभिस्त्र्यणुकारम्भः, कुत्रचित्त्रिभिः द्व्यणुकैरिति साक्षात्कृततत्त्वानामपि परस्परं विसंवादा दृश्यन्ते । ते च लौकिकपदार्थेषु अनास्थामेव सूचयन्ति तेषाम् । तथापि साङ्ख्यानां वैशेषिकानाञ्च भेददर्शनेन मोक्षवादिनामत एव भेददर्शनोपयोगि-मात्र-पदार्थ-विचारप्रवृत्तानां विचारपद्धतिर्न मनागपि दोषदुष्टेति नि-

# वेदानां प्रामाण्यम् ।

ब्रह्मचारी आर्य्येन्द्रः, वृन्दावनम्

'वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः ॥ [ यजु० अ० २ अ० २१ ॥ ]

वेदानां प्रामाण्यमित्यत्र पदद्वयम्, वेदानां प्रामाण्यञ्चेति । तत्र प्रामाण्यं वेदे प्रकारीभूय भासते । एतेन प्रामाण्यस्य वेदानाञ्चाभेदसम्बन्धः प्रतीयते, तथा च–तादात्म्यसम्बद्धावच्छिन्न-प्रमाणत्वावच्छिन्न-प्रमाणनिष्ठ-प्रकारता-निरूपितवेद-निष्ठा या विशेष्यता, तादृग्विशेष्यताशालित्वं वेदत्वमिति फलितार्थः ।

तत्रादौ निरूपणीयं तावत्कोऽयन्नाम वेदः, कथं च तन्निष्पत्तिः, किञ्च तत्स्वरूपमिति । आर्यसमाजस्य प्रवर्त्तकेन दयानन्देनास्य निष्पत्तिः स्वीय-ऋग्वेदादिभाष्यभूमिकाख्यग्रन्थेऽनेन प्रकारेणाकारि—'विदन्ति जानन्ति, विद्यन्ते भवन्ति, विन्दन्ति विन्दन्ते लभन्ते, विन्दते विचारयन्ति सर्वे मनुष्याः सर्वाः सत्यविद्या यैर्येषु वा, तथा विद्वांसश्च भवन्ति ते वेदाः' । अधुना प्रश्नोऽयं समुद्भवति संहिताभागस्यैव वेदत्वमथवा मन्त्रब्राह्मणयोर्वा वेदत्वम् । अस्मिन्विषये ममेदमेव वक्तव्यं यत्सकलविद्यानिधानानां मन्त्राणामेव वेदत्वं वर्त्तते, मन्त्रव्याख्यानार्थकानां ब्राह्मणादीनां सत्वात् । निरुक्तकारेण यास्काचार्येणापि मन्त्राणामेव वेदत्वममानि । तेन स्वकीये निरुक्ताख्ये ग्रन्थे व्यलेखि—'कर्मसम्पत्तिर्मन्त्रो वेदे' । स च कर्मसम्पत्तिर्मन्त्रः क्वास्ति ? संहितासु ब्राह्मणेषु वा । संहितास्वेवेति चेदितोऽपि स्फुटं व्यज्यते संहितार्थ एव वेदशब्दोऽभिमतः खलु निरुक्तकारस्य यास्काचार्यस्यापि । आदि–सभ्याकाले भारते ये ऋषयः प्रादुर्बभूवुः आसन्नेव ते विविध–विद्याभूषणाः, साक्षात्कृतधर्माणः, अत एव तैर्दृष्टा मन्त्रा एव वेदपदवाच्याः ।

अधुना प्रामाण्यनिरूपणं क्रियते—

तद्वति तत्प्रकारकत्त्व-रूप-प्रकर्ष-विशिष्ट-ज्ञानं प्रविशिष्टेन मा-धातुना प्रत्याय्यते, तत्करणत्वं प्रमाकरणत्वम् । तच्च चतुर्विधं प्रत्यक्षानुमानोपमानशब्दभेदात् । तथा च न्यायशास्त्र उक्तं-'प्रत्यक्षानु-

---

वेदयिष्यामः । प्रथमं तावत् इदं विचारणीयं पदार्थज्ञातसिद्धौ किं किमपेक्षितमिति वीक्षायां लक्षणानि प्रमाणानि चेति । लक्षणेन वस्तुविषयिणी संभावना भाव्यते । ततश्च संभावितस्य प्रमाणेन सिद्धिः– अत एवाहुरभियुक्ताः–

संभावितः प्रतिज्ञायाम् पक्षः साध्येत हेतुना ।
न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः ।इति ।

ये तु प्रमाणमेव सर्वस्य व्यवस्थापकं न लक्षणं तदपेक्षायामनवस्थानादित्याहुः, तेषां "पिबामि निन्दामि" चेति न्यायपातः । यतोऽव्याप्त्यतिव्याप्तिपरिसारेण तत्तदर्थव्यवस्थापकं तत्तद्व्यवहारस्थापकञ्च प्रमाणमुपाददते तदेव लक्षणम् । अनुवादः स इति चेत्; अस्माकमप्यनुवाद एव । नहि किञ्चिदलौकिकमिहोच्यते । न चानवस्था वैद्यकादौ रोगादिलक्षणवद्व्याकरणादौ शब्दादिलक्षणवच्च व्यवस्थोपपत्तेरिति । तावदत्र प्रथमःप्रश्नःसमाधीयते

( क्रमतः )

मानोपमानशब्दाः प्रमाणानीति', तत्रेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् । स चेन्द्रियार्थसन्निकर्षः षड्विधः । संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेष्यविशेषणभावश्चेति । परं वेदानां प्रामाण्ये नैतत्षड्विधमपि प्रत्यक्षं युज्यते ।

अनुमानेनापि वेदानां प्रामाण्यन्नैव सिध्यति व्याप्तेरभावात् । नात्र काचिद्व्याप्तिः सङ्गच्छते । यथा:—'स्वर्गकामो यजेत' । अत्र व्याप्तिरियं भविष्यति-यत्र यत्र यजनत्वं तत्र तत्र स्वर्गप्राप्तित्वं, एषा च व्यभिचारदोषग्रस्ता ।

इह लोके यज्ञसद्भवात् स्वर्गस्य चामुत्र प्रादुर्भावात् । अत एवानुमानप्रमाणासाध्या वेदा इति ।

उपमानेनापि नैतस्य प्रामाण्यमवगन्तुं शक्यते । उपमितौ सादृश्यज्ञानं करणं भवति, न यत्र साध्यं किञ्चित्तद्दृश्यते येन वेदानां प्रामाण्यं स्यात् ।

अत एव शब्द-प्रमाणमेव वेदानां वरीवर्त्ति । आप्तोपदेशः शब्द इति लक्षणात् । आप्तः खलु साक्षात्कृतधर्मा, यथादृष्टस्यार्थस्य चिरव्यापयिषया प्रयोक्ता, उपदेष्टेश्वर इति । तेनोपदिष्टत्वाद्वेदानां प्रामाण्यं सम्भवति । यथेह पर्वते जलमस्तीति-आप्तवाक्यप्रामाण्यात्तत्र जलं समुपलभ्यते । एवमेव वेदेऽपि ईश्वरकर्तृक-यज्ञादिकर्म-प्रतिपादकोपदेशस्य सत्वात्, तज्जन्यफलप्राप्त्यायाथार्थ्याच्च वेदानां शब्दप्रामाण्यं सर्वथा विचारसहम् ॥

सर्वैरेव दर्शनकारैः स्मृतिकारैर्वेदानां प्रामाण्यमेकस्वरतोऽमानि । यथा च—वैशेषिक-कारेण कणादमुनिना स्वकीये ग्रन्थे सुस्पष्टं व्यलेखि-'तद्वचनादाम्नायस्य प्रामाण्यम्' अर्थादीश्वरप्रोक्तत्वादाम्नायस्य वेदचतुष्टयस्य प्रामाण्यं स्वीकर्त्तव्यमिति ।

स्वकीये न्यायशास्त्रे गौतममुनिरप्याह-'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' । तेषां नित्यानामीश्वरप्रोक्तानां प्रामाण्यं सर्वैः स्वीकार्यम्, आप्तैः छलरहितैर्धर्मात्मभिः सर्वैर्विद्वद्भिराप्तैर्वेदानां प्रामाण्यं स्वीकृतम् । यथा चायुर्वेदस्यैकदेशोक्तौषधि-सेवनेन रोगनिवृत्त्या तद्भिन्नस्यापि भागस्य प्रामाण्यं स्वीक्रियते । तथैव वेदोक्तार्थस्यैकदेशप्रत्यक्षेण तस्यादृष्टार्थविषयस्यापि वेदभागस्य प्रामाण्यमङ्गीकार्यम् । एतत्सूत्रस्योपरि भाष्यकारेण वात्स्यायनमुनिना प्रतिपादितम् ।

एवमेव स्वकीये सांख्यशास्त्रे पञ्चमाध्याये कपिलाचार्योऽप्याह—

'निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम्' । वेदानां निजशक्त्यभिव्यक्तेः पुरुषसहचारिप्रधानसामर्थ्यात् स्वतःप्रामाण्यनित्यत्वे स्वीकार्ये इति ।

स्वकीये वेदान्तशास्त्रे व्यासमुनिरप्याह-'अत एव च नित्यत्वम्' अत ईश्वरोक्तत्वान्नित्यधर्मकत्वाद्वेदानां स्वतः प्रामाण्यं सर्वविद्यावत्त्वं सर्वेषु कालेष्वव्यभिचारित्वान्नित्यत्वं च सर्वैर्मनुष्यैर्मन्तव्यमिति सिद्धम् । अथवा न वेदप्रामाण्यसिध्यर्थं प्रमाणान्तरस्यावश्यकता वरीवर्त्ति, वेदानां स्वतः प्रामाण्यात् । सूर्यवत् । यथा सूर्यः स्वयं प्रकाशमानः सन् संसारस्थान्महतोऽल्पांश्च पर्वतादीन् परमाण्वन्तान् पदार्थान्प्रकाशयति, तथा वेदोऽपि स्वयं देदीप्यमानः सन् सर्वा विद्याः ज्ञानकाण्ड कर्मकाण्डोपासनाकाण्ड-रूपं ज्ञानं प्रकाशयन् स्वप्रामाण्यं प्रतिपादयति न चात्र विप्रतिपत्तिलेशोऽपि कर्त्तव्ये .......... सतीत्यलम् ॥

# ब्रह्मचर्यम्

ले० पं० श्रीदीनानाथशर्मा शास्त्री

अखण्डेऽस्मिन् ब्रह्माण्डे, यक्षो वा भवेद्र रक्षो वा, दानवो वा विद्येत मानवो वा, सदैव दैवपरायणो वा भवतु उद्यमनियमनिष्ठो वा, योगी वा वर्त्तेत वियोगी वा ; सर्व्व एवाऽसौ सुखमेव प्रेप्सुर्भवति । आमयमयतायास्तु सर्व्व एव जुगुप्सते । कष्टदष्टं सर्व्वमेव सत्त्वजातं द्रुतं विद्रुतं सत् परमुद्विग्नायते । कष्टाऽभावश्चैव सुखं मम्मन्यते लोके । परमेतावताऽभिलापेणैव * सेप्सितनिष्पत्तिर्व्विपादाऽवसादो वा न बोभवितुमर्हति, यावत्तदनुकूलव्यापार-व्यापृतौ तत्प्रतिकूलोपायाऽपाये च नोद्यस्येत । तत्र विमर्शनीयमेतद्र यद्र—दुष्टस्याऽस्य कष्टस्य कुत उदयः ? को वा तदपायोपायः ? अद्याऽस्मिन्नेव सम्बन्धेऽस्माभिर्मस्तिष्कव्ययो विधीयते ।—कष्टं तावत् त्रिविधम् ।—आध्यात्मिकम्, आधिदैविकम्, आधिभौतिकञ्च । तत्र आत्मनि इत्यध्यात्मम् तत्र भवमाध्यात्मिकम् ( 'अध्यात्मादेष्ठञ्' ) तद्द्विविधम्—शारीरं मानसञ्च । तत्र समग्रं जगद्र दहद्र अग्निरूपं शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम् । मानसन्तु कामक्रोधलोभमोहभयेर्ष्याविपाद-विषयविशेषाऽदर्शन-निबन्धनम् । अधिभूतम्भवम् आधिभौतिकं मानुषपशुपक्षि-सरीसृपस्थावरनिमित्तम् । अधिदेवम्भवमाधिदैविकं यक्षराक्षसविनायकग्रहाऽऽवेशाऽवग्रहाऽशनिसम्पातादिनिबन्धनम् ।

तत्र शारीरं दुःखन्तु इन्द्रियनिग्रहाऽभावात् सम्भवति, मानसन्तु मनोनिग्रहाऽसत्त्वात् । सर्व्वेन्द्रियाणि मनश्च स्वोपभोगयोग्यपदार्थेभ्यः स्पृहयन्ति । तानि ताँस्तान् पदार्थांश्चाऽधिगच्छेयुः, तदानीमपि ह निम्रसङ्गः । यद्यधिगच्छेयुरपि, तदाऽप्यान्तरिकदौर्व्बल्यवशात् तत्तत्पदार्थानामपरिणामाद्र † वातपित्तश्लेष्मणां वैषम्ये सति शारीरं दुःखं भविष्यत्येव । एवं यदि कोऽपीदृश उपायः स्याद्र, येन इन्द्रियाणां दमनं स्यात्, तर्हीन्द्रियाणि स्वविषयानुपबुभुक्षेरन्नेव न ; भोगेऽपि दौर्व्बल्यविध्वंसस्य यदि कोऽप्युपाय उद्भाव्येत ; तदाऽपि न हानिप्रसङ्गः । इत्थङ्कारमेव कामक्रोधादीनां निरसनोपाय उद्भाविते मानसदुःखादप्यपेतता स्याद्र ; यतो मनोदौर्व्बल्य एव कामाद्याविर्भावः । एवं भूतेभ्योऽपि दुःखासक्तिश्शारीरिक-क्रशिम-मूलिकैव । देवाऽधिकृतदुःखमपि वेदादिसच्छास्त्राऽपरिचयदौर्व्बल्येनैव भवति ; अवग्रहा—( वृष्टिप्रतिबन्धा ) ऽशनिसम्पातादयश्च वैदिकयज्ञाऽऽद्यकरणजन्य-दौर्व्बल्यहेतुका एव । फलतः समस्तमेव कष्टजातं दौर्व्बल्ये कृते त्रिविधमपि दुःखं स्वयमेव दौर्व्बल्यमश्नुवीत—इत्यत्र नाऽणीयानपि विसँव्वादः । कतमोऽसौ क्रशिम-शमन उपाय इति जिज्ञासिते सति 'ब्रह्मचर्य्य' मेवाऽसावुपाय इति स्थितिः ।

* अभिलपेण । [illegible] प्रामादिकमेव ।

† श्लेष्मणाम् । मान्तसंयोगान्नाऽल्लोपः । ह्रस्वान्तत्वाऽभावाच्च न दीर्घः ।

एतदुक्तम्भवति—'ब्रह्म-वेदः, तदध्ययनाऽर्थंव्रतमप्युपचाराद्ब्रह्म; तस्य चरणं ब्रह्मचर्य्यम्। 'गदमदचर' ३। १। १०० इति यति साधु। ब्रह्म चरितुं शीलमस्येति ब्रह्मचारी, 'व्रते' ३। २। ८० इति 'सुपि—' ३। २। ७८ इति वा णिनिः। यद्वा—ब्रह्म चरत्यवश्यमिति 'आवश्यका-' ३।३। १७० इति णिनिः। वेदपठनेन तद्व-व्रताऽऽचरणेन च उभयेन्द्रियरूपवञ्चकपञ्चकस्य मनसश्च दमो भवति। इन्द्रियाणां निग्रहे च, अनियमिताऽऽहारविहार—त्यागे जाते वातपित्तश्लेष्मणां सार्व्वदिकसाम्या च्छारीरिकदुःखस्याऽसम्भवः। प्रमादेन जातेऽपि कदाचिदाहार-वैषम्ये ब्रह्मचर्य्यव्रतमूलिकया शक्त्या तत्परिपाके न धातुत्रयव्याकोपः, तेन शारीरिकी स्थितिः सुस्थैव भवति। ब्रह्मचर्य्येणैव मानसिकदौर्व्वल्याऽवसादे मनो-दमने च कामक्रोधादयः स्वयं श्लथिमानमापाद्येरन्; ततश्च तत्तद्धेतुकतापपापंप्राप्तिरपि विषमतां विभृयात्।

एवं ब्रह्मचर्य्येणैव शारीरिकवीर्य्यवृद्ध्या दौर्व्वल्य-दौर्व्वल्ये आधिभौतिकं दुःखं † विनंष्टुमर्हति। ब्रह्मचर्य्याऽङ्गभूत-वेदवेदनेन च यज्ञादिविधानतो दिवि दिविषदः सदा प्रसन्ना भवन्ति, येन आधिदैविकं दुःखं क्वाऽपि पलाय्य अन्तर्हितम्भवति। इत्थं ब्रह्मचर्य्यस्य अर्थद्वितयी निष्पन्ना—वेदादिपठनम्, तद्व-व्रताऽऽचरणञ्च। अथ वयं तद्व-व्रताऽऽचरणं विशकलय्य वर्ण्णयिष्यामः, यतो वेदपठनस्य जीवनत्वमद्रष्टमन्तारोऽस्मादृशा एव मंस्यन्ते। परं तद्व व्रतं जीवननिदानमदृष्टवादिनो वा दृष्टवादिनो वा उभये एव मञ्जूरीकुर्व्वते। तद्व व्रतं किम्? इति विचारणायां जागरुकायां सत्यां 'वीर्य्यरक्षा' एव तद्व व्रतम्, इत्युत्तरम् एतदेव वर्त्तमानकालिकं ब्रह्मचर्य्यम्। तदेव जीवनस्य पर्य्यायः।

क्रमतः

---

# शक्तिविशिष्टाद्वैत-सिद्धान्त-निरूपणम्

( गताङ्कादग्रे )

अनुवादकः—काव्यतीर्थः, तर्करत्नम्, पं-श्रीवृषभलिङ्ग-शिवाचार्यः, बिचाले बृहन्मठाधीशः।



"अनाद्यविद्यासम्बन्धात् तदंशो जीवनामकः" इति श्रीरेणुक-भगवत्पादाचार्याणामुक्त्यनुसारेण जीवः शिवांशरूपो वर्तते। इममेवाभिप्रायं ब्रह्मसूत्रमपि-"अंशो नानाव्यपदेशात्" इत्यनेन सूत्रेण समर्थयति, "मुंडकश्रुति" रपि—: "यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपास्तथाक्षरा द्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति"

यथा अग्नेस्तदंशरूपा विस्फुलिङ्गा आविर्भवन्ति, तथा ब्रह्मणोऽपि तदंशभूता अनन्तानन्तजीवा आविर्भवन्ति, पुनस्तस्मिन्नेव ब्रह्मणि विलयं प्राप्नुवन्ति इत्याघोषयति। अग्ने स्तज्जन्यविस्फुलिङ्गानां च आत्यन्तिकभेदमभेदं वा नावकलय्य यथा भेदाभेदमात्रमङ्गीक्रियते, तथा शिवादाविर्भूय शिवांशवाचकानां जीवानां तथा शिवस्य च आत्यन्तिकभेदो वा अभेदो वा नावकल्पनीयः किन्तु तयोर्भेदाभेद एवाङ्गीकर्तव्यः।

यद्यंशांशिनोरात्यन्तिकाऽभेदाङ्गीकारः, तदाऽग्नेरिव तत् स्फुलिङ्गानामपि पाकादि क्रियोत्पादकत्व-प्रसङ्गः। अग्निकणात् पाकादिनिष्पत्तिर्न कुत्रापि श्रूयते खलु। यदि च आत्यन्तिकभेद एवाङ्गीक्रियते तदा वह्निभिन्नजलादिष्विव वह्निकणेष्वपि दाहकार्याभाव-प्रसङ्गः, परं वह्निकणास्तूलं प्रविश्य

† 'विनंष्टुम्'। रधादित्वादिडभावे रूपम्, 'मस्जिनशो' रिति नुम्, तस्याऽनुस्वारश्च।

ग्राहकार्यं कुर्वन्तीति लोकप्रसिद्धिर्वर्तते खलु । इत्थमेव शिवस्य तथा शिवांशरूपजीवानां च अत्यन्ताभेदो यदि गृह्यते, तदा जीवेष्वपि शिवगत-सर्वज्ञत्व-सर्वकर्तृत्वादीनां व्यवहारप्रसङ्गः, आत्यन्तिकभेदो यदि गृह्यते तदा शिवभिन्न-घटपटाद्य-चेतनानामिव जीवानामपि सकल-वस्तु-ज्ञानाभाव-प्रसङ्गः, परं जीवानां घटपटादिज्ञानविशिष्टत्वं सुप्रसिद्धं खलु ! अतोऽस्मद्वीरशैवाचार्याः शिव-जीवयोः पारमार्थिक-भेदाभेदमेवाङ्गीकुर्वन्ति । न तु भेदं केवलमभेदं वा । अनेनैव हि कारणेन वीरशैवमतस्य "द्वैताद्वैतमत" मिति नामान्तरमपि सम्प्राप्तम् ।

श्रुतिषु—: "द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । "

इत्यादिवाक्यानि द्वैतं, तथा च "तत्त्वमसि" "अहं ब्रह्मास्मि" "नेह नानास्ति किञ्चन ।"

इत्यादि वाक्यान्यद्वैतं प्रतिपादयन्ति । एतदुभयविधानामपि वाक्यानां सुगमोपायेन सार्थक्यसम्पादनं वैदिकमतानुयायिनां प्रधानकर्तव्यम् । अतो वीरशैवमताचार्या इममेव मार्गमनुसृतवन्तश्चेत्यस्मिन् मते सर्व-श्रुतिवाक्य-सामंजस्यं बाढं भवतीति सानन्दमाख्यामः । इममेव विषयं वीरशैव-मतभाष्यकाराः शक्तिविशिष्टाद्वैतसिद्धान्ति-कुलपतयस्तार्किकचूड़ामणयः ( श्रीकराचार्या इत्युपनामकाः ) "श्रीपतिपंडिताः" स्वविरचित-"श्रीकरभाष्ये"—

द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके ।

वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः ॥

इति प्राहुः । एतेनापि वीरशैवमतमिदं भेदा-भेदात्मकमेवेति सिद्धम् ।

परशिवः सच्चिदानन्दरूपो नित्यो निर्विकल्पोऽप्राकृतवैभव उपमातीतः सर्वज्ञः शान्तश्चराचर-प्रपंचव्यापकः सर्वशक्ति-समन्वितश्च वर्तते ।

परशिवांशभूतो जीवस्तु किञ्चिज्ज्ञः किञ्चित्कर्ता किञ्चिच्छक्ति समन्वितोऽविद्या-मोहितो ब्रह्मैक्यज्ञान-वर्जितो घोरापारनिस्सार-संसारतापत्रयानल-दन्दह्यमानो जननमरणान्वितो बद्धश्च वर्तते ।

सच्चिदानन्दरूपिणि परशिवब्रह्मणि अविनाभावसम्बन्धेन विद्यमानविमर्शशक्तेः स्फुरणमेव-षट्त्रिंशत्प्रकारेण तत्त्वरूपेण परिणमति, यथा—: शिव-शक्ति—सदाशिव—ईश्वर-शुद्धविद्या-माया-कला-विद्या-रागकाल-नियति-पुरुष-प्रकृति-बुद्धि-अहङ्कार—मनः—श्रोत्र—त्वक्—नेत्र-जिह्वा—घ्राण-वाक्-पाणि-पाद-पायु—उपस्थ—शब्द-स्पर्श-रूप-रस-गन्ध—आकाश—वायु—अग्नि—जल-पृथिवी-इत्येतानि ३६ षट्त्रिंशत् संख्याकानि तत्त्वानि श्रुतिप्रसिद्धानि ।

तथाचोक्तं "वृद्धजाबालोपनिषदि"—"पुनस्तं होवाच कानि षट् त्रिंशत्तत्त्वानीति स तस्मा आह शिवशक्ति—सदाशिवेश्वर—शुद्ध—विद्या एतानि शुद्धानि पंचतत्त्वानि, माया कालो नियतिः कला विद्या रागः पुरुष इति शुद्धाशुद्धानि सप्त-तत्त्वानि" ।

इत्यादिना । महानारायणोपनिषदि' चेत्थमेव षट्त्रिंशत्तत्त्वान्येतानि स्पष्टतया वर्णितानि । अस्तु!

शक्तिविशिष्टं परशिवब्रह्म "बहुस्यां प्रजायेय" इत्येतच्छ्रुतिवाक्यानुसारेण सृष्टेरुन्मुखीभवति । तन्निष्ठ-विमर्श-शक्तिरेव तदिच्छाशक्तिरूपेण परिणमति ।

अनादि-निधनाच्छान्ताच्छिवात्परमकारणात् ।

इच्छाशक्तिर्विनिष्क्रान्ता ततो ज्ञानं ततः क्रिया ॥
तत्रोत्पन्नानि भूतानि भुवनानि चतुर्दश ॥

इत्येतच्छिवागम-प्रमाणानुसारेण उत्पत्तिनाश-रहितात्परमकारणात् शान्तात्परशिवात् प्रथममिच्छाशक्तिस्तस्याश्च ज्ञानशक्तिः क्रियाशक्तिश्चाविर्भवतः, तदिच्छाशक्तेर्ज्ञानशक्तिरान्तरङ्गिका क्रियाशक्तिर्वहिरङ्गिका च वर्तेते ।

ज्ञानशक्ति-सम्मिलितस्य परशिवब्रह्मणः "अहं सर्वज्ञः" इति योऽभिमामानस्संजायते स एव "शिवतत्त्व" मित्युच्यते । घटकार्यं प्रति कुलाल इव शिवतत्त्वमेतदेव उत्पत्स्यमान-चराचरात्मकजगत्कार्यं प्रति निमित्तकारणं भवति ।

किञ्च क्रियाशक्तौ सम्मिलितस्य परशिवब्रह्मणः "अहं सर्वकर्ता" इति योऽभिमानस्संजायते, स एव "शक्तितत्त्व" मुच्यते । घटं प्रति मृत्तिकेव एतच्छक्तितत्त्वमेव भावि-चराचर-प्रपंचस्योपादानकारणं भवति ।

एतच्छक्तितत्त्वमिच्छाशक्तेरन्तरङ्गभूताया ज्ञानशक्तेरुल्वणावस्थायां स्वयं प्रविश्य जलाधिवासादङ्कुरोन्मुखचणकधान्यवत् किञ्चित् स्थौल्यमावहति । एतादृशीमुद्रिक्त-ज्ञानशक्तिं गर्भवेष्टन-चर्मकोश इवाभिव्याप्य "अहमिदम्" (अहमेष प्रपंचः) इत्यभिमानकरणमेव "सदाशिवतत्त्व" मित्युच्यते ।

तदेव शक्तितत्त्वं इच्छाशक्तेर्वहिरङ्गभूतां उद्रिक्तावस्थोपेतां क्रियाशक्तिं विविश्य सुक्षेत्रोप्तवीजवदङ्कुरावस्थाधारिणं "इदम्" शब्दवाच्यं प्रपंचमिमं "अहमिदम्" (अहमेतत्प्रपंचस्वरूपः) इत्यभिमानकारकमेव "ईश्वरतत्त्वमित्युच्यते" ।

सागरतरङ्गन्याय इव (यथा समुद्रतद्गततरङ्गयोरभेदस्तथा) "अहमिदम्" इत्येतत्पदद्वये क्रमेण वाच्यार्थभूतयोरहङ्कारप्रपंचयोर्यदभेदज्ञानं तदेव "शुद्धविद्यातत्त्व" मित्युच्यते । इदमेव शास्त्रगुरुलब्धं मुक्तिहेतुभूतं तत्त्वज्ञानमिति कथयन्ति ।

इदं शुद्धविद्यातत्त्वं मयूराण्डरसन्याय इव (मयूराण्डगतरसे उत्पत्स्यमानमयूरस्य चरणपक्षवर्णवैचित्र्यादीनां विभागस्य यथा सूक्ष्मरूपतयाऽवस्थानं तथा) स्वविलीनेषु भाविप्रपंचनिर्माणनिदानीभूतेषु सूक्ष्मपदार्थेषु अन्योन्याभावरूपभेदबुद्धिप्रधानभूतं सत् "मायातत्त्व" मित्युच्यते ।

कला–विद्या–राग–काल-नियतिनामकानि पञ्चतत्त्वानि पुरुषस्य कंचुकरूपाणि, तस्मात् प्रथमं कंचुकीभूतपुरुषतत्त्वमुक्त्वा पश्चात्कलादिपञ्चतत्त्वानि प्रवक्ष्यामः ।

यथेन्धनयोगादग्निकणास्संजायन्ते तथा परशिवस्येच्छाशक्तेर्योगात् जायमानः शिवांश एव मायाशक्ति प्रविष्टं "पुरुषतत्त्व" मित्युच्यते । एतत्पुरुषतत्त्वं मायामलावृतत्त्वाद्धेतोः आत्मन्यनात्मज्ञानमनात्मवस्तुन्यात्मज्ञानं च "अहं सुखी" "अहं दुःखी" ति बुद्धिश्चोत्पादयति । इत्थमाणवादिमलावृतत्त्वात्पुरुषस्संसारीत्युच्यते ।

पुरुषोऽयमुक्तदिशा मायावृतः स्वीयसर्वकर्तृत्वादिशक्तिशून्यः किञ्चित्कर्तृत्वादिशक्तिसमन्वितश्च भवति; अतः पुरुषनिष्ठकिञ्चित्कर्तृत्वरूपैषा शक्तिरेव "कलातत्त्व" मित्युच्यते । पुरुषगतकिञ्चिज्ज्ञत्वरूपा शक्तिरेव "विद्यातत्त्व" मित्युच्यते । स्रक्-चन्दन-वनितादिविषयेषु प्रेमोत्पत्तिरेव "रागतत्त्वम्" । भूत--भविष्यद्–वर्तमानकालानां व्यवहारस्य यदसाधारणकारणं तदेव "कालतत्त्वम्" । एतस्मात्कारणादिदमेव कार्यमुत्पद्यते न तु कार्यान्तरमिति नियमस्य यन्नियामकं तदेव "नियतितत्त्व" मित्युच्यते । (क्रमतः

सिन्धुपारिजात-कल्पद्रुम-कृत्यसार--श्राद्धरत्नाद्यने-कार्थपर्य्यालोचनया-मृतदुःखानुभविनां सर्वस-पिण्डानां वपनमिति तत्तात्पर्य्यावधारणात् तादृ-शव्यवहारस्याशास्त्रीयत्वेनाव्यवहार्य्यत्वादनास्थेय-मिति, अत एव सर्वत्र निबन्धादिषु देशाचारतो-व्यवस्थेत्युक्त्वा "येषु स्थानेषु ये द्विजाः" इत्याद्युक्तिः संगच्छते, अत एव "यावज्जीवमवपनं विहित-वपनव्यतिरेकेणेति गृह्यभाष्यकृदुक्तिः संगच्छते । तच्च सर्वत्रोपक्रमोपसंहारेण वाक्य-तात्पर्यनिर्ण-यस्य परिदृश्यमानत्वेन संवादिवाक्यप्रामाण्येन च कृदुक्त-विसंवादिवाक्याप्रामाण्यम् । अन्यथा-तात्पर्य्याज्ञानतो विरुद्धानुष्ठातुः पतितत्वादिति निष्कर्ष इति

निर्धारयति--श्रीरामदेवद्विवेदी (हिन्दूवि० वि० र० सं० विद्यालयाध्यापकः)

सम्मनुते-पण्डित प्रवरव्यवस्थापितमर्थं-हरि-नयशर्मा धर्म्माचार्यः ।

श्रीविद्याधर शर्ममिश्रः वेदाचार्य । ॥

द्वितीयेऽहनि कर्तव्यमिति वचन—बलेन दशा-हाभ्यन्तरे ब्राह्मणस्याऽऽशौचनिवृत्तिकथनमत्यन्तं विपरीतमिति उपरितनव्यवस्थां संमनुते—नेने गोपालशास्त्री ।

द्वितीयादिदिनेष्वाशौचकालघटकेषु कृत-क्षौरस्य पुरुषस्य नाशौचनिवृत्तिर्भवति; किन्तु आशौचान्त्यदिनात्पूर्वदिने कृतक्षौरस्याशौचकाला-पगम इति व्यवस्था शास्त्रशिष्टाचार—सम्मतेति पूर्वप्रतिपादिता व्यवस्था समीचीनेति प्रतिपाद-यति काशीस्थो हाराणचन्द्र भट्टाचार्य्यः ।

अत्रार्थे श्रीव्रजविहारी झा, शर्म्मणोऽपि सम्मतिः

श्रीचण्डीप्रसादशुक्लस्य सम्मतिः ।

कृतसम्मतिकाझोपाह्वोऽजवलालः ।

श्रीबालबोधमिश्रस्य सम्मतिरत्र । मन्वर्थविप-रीताया राजाद्यलिखितायाश्चाजानिकाचारानुप-कृष्णायाश्चाप्रामाण्यं सम्मनुते श्रीमुकुन्दझा

---

# सुप्रभातस्य संरक्षकाः

काञ्ची कामकोटिपीठाधीश्वराः हिजहोलिनेस जगद्गुरवः श्रीशङ्कराचार्याः, कुम्भकोणम् ।

रानूपाली—स्थानाधीश्वराः हिजहोलिनेस श्रीमहन्त पण्डित बाबा केशवरामोदासीन—महोदयाः, रानूपाली, अयोध्या ।

देहरादून—स्थानाधीश्वराः श्रीमहन्त बाबा लक्ष्मणदासमहोदयाः, देहरादूनम् ।

गोरखनाथ—मठाधीश्वराः श्रीमहन्त दिग्विजयनाथमहोदयाः, गोरखपुरम् ।

परमहंस—परिव्राजकाचार्य—श्रीमन्मण्डलेश्वर—श्रीगङ्गेश्वरानन्दशास्त्रिमहोदयाः, षड्दर्शना-चार्याः, काशी ।

काशीस्थविश्वाराध्यजगद्गुरु—संस्थानाधीश्वराः श्रीपञ्चाक्षरशिवाचार्य—महोदयाः, जङ्गमवाड़ी मठः, काशी ।

श्रीमान् जगद्गुरु शिवानन्दराजेन्द्र महोदयाः, बालेहोन्नूर (कर्णाटदेशः)

माननीय राजा बलदेवदास विरला महोदयाः, काशी ।

माननीय सेठ घनश्यामदास विरला महोदयाः, कलकत्ता ।

माननीय सेठ युगलकिशोर विरला महोदयाः, कलकत्ता ।

अखिल भारतीय संस्कृत—साहित्य—सम्मेलनम् जयपुरम् ।

आर्यप्रतिनिधि सभा देहली च ।

# सुप्रभातस्य विशिष्टाङ्कः

## द्वादशवर्षस्य प्रथमोऽङ्कः

### १९९३ चैत्रमासे

महता समारम्भेण विशिष्टरूपेण च प्रकाशमेष्यति ।

अत्र सुप्रभातस्य मुखपृष्ठम् अन्तःकर्गजञ्च नितान्तसुन्दरं भविष्यति । लेखाश्चादर्शानुकूला महतां विदुषां-विविध-विषये विलिखिताः संग्राह्या मननीयाश्च भविष्यन्ति । चित्राण्यपि पुरातत्त्व-सम्बन्धीनि स्थास्यन्ति ।

विविध-दृष्ट्या नितरां लोभनीयोऽयमङ्कः सर्वथा द्रष्टव्यो भविष्यति ।

मूल्यमस्य—अष्टौ आणकाः

ग्राहकेभ्यो विना मूल्यम् ।

प्रकाशकः—श्रीगौरीनाथ पाठकः, सुप्रभात-कार्यालयः, बनारस सिटी ।
मुद्रक—श्रीबालकृष्ण शास्त्री, ज्योतिषप्रकाश प्रेस, विश्वेश्वरगंज काशी ।

SPECIAL NUMBER

[ *Approved by the Director of Educations U. P., C. P. and Behar for Colleges, Schools, Sanskrit Pathshalas, Libraries and Prizes.* ]

# THE SUPRABHATAM

# सुप्रभातम्

VOL. XII
Nos. 7-8

SEPTEMBER, OCTOBER 1938

वर्ष १२
सं० ७-८

द्वादशाब्दस्य आश्विन-कार्तिकयोः सप्तमाष्टम-संख्ये





## साहित्याङ्कः

वार्षिकं मूल्यम्
एका मुद्रा

अस्याङ्कस्य
अष्टौ आणकाः





प्रकाशकः
श्री कृष्णकुमारव्यासः

व्यवस्थापकः
श्री मदनगोपाल शर्म्मा



संपादकः — श्री केदारनाथशर्म्मा सारस्वतः
सहसंपादकः — ईशदत्तशास्त्री 'श्रीशः', साहित्यरत्नम्

१९९५

# विषय-सूची



अभिनव-वाणभट्ट—महाकवि-भारतमार्तण्ड-साहित्याचार्य—
स्वर्गीय-अम्बिकादत्त-व्यासः
[ शिवराजविजय—प्रणेता ]



कुमार गङ्गानन्द सिंह एम० ए० महोदयाः
[ प्राइवेट सेक्रेटरी—दरभङ्गाराज ]

# सुप्रभातम्

## साहित्याङ्कः

द्वादशाब्दे | आश्विन-कार्त्तिकौ, १९९५ वैक्रमाब्दाः | सप्तमाष्टम-संख्ये

## साहित्योत्कर्षः

प्रयत-निगमवंशोद्भूतिरैतिह्य-बन्धुः,
पद-कलित-शरीरो, नीति-वामाऽसुनाथः,
सुनिपुणमतिमीमांसैक-कुक्षि-प्रविष्टः,
कणभुगतुल-तर्कोदित्वर-स्फूर्ति-चित्तः,

संगीतागमसोदरोऽखिलपुराणानेकनीवृच्चरः,
कोशाक्षय्यनिधिः पराङ्ग-करणः श्रीशाङ्घ्रिभक्त्येक-धीः,
वेदोपाय-कला-विसत्वर-कलो, विज्ञान-संसेवितः,
केली-कौतुक-मल्लनाग-भणितिस्तन्त्राख्य-मन्त्रिप्रियः,

गोनर्दीय-महानुभूति-रसिकः, सांख्यादि-सौध-स्थित-
श्चार्वाकार्हत-सौगत-प्रभृतिभिः सभ्यैर्मुदा वेष्टितः,
शैवाद्यागम-वृन्दतः प्रणिधिमानान्वीक्षिकी-दुर्गगो,-
नानाभाव-विचक्षण-स्मृति-सखी-व्रातेषु रज्यन्मनाः,

सप्रस्थान-ब्रह्मविद्या-सतीर्थ्यो,
ब्राह्मी-सूनुः सर्व-संवाद-शीली,
साहित्याख्यः पुरुषोऽनादिधामा,
वाणी-राज्यस्यैष वर्वर्त्ति सम्राट्।

*—श्रीमदाचार्य-गोस्वामि दामोदरशास्त्रिणाम्*

?

( १ )

श्रीहर्ष-वर्षण-तता सरसाऽऽलवाला
सान्द्राम्बु-शाद्वल-दला विमला विशाला,
राराजतां मनसि गुम्फ-गुणाऽभिरामा-
साहित्य-कल्प-कलिका सततं ललामा ॥

( २ )

सम्प्रत्यपि प्रिय-रतिं जनयन्ति विज्ञाः
ब्रह्मैक-वेद्य-विभवेऽथ यदेकदेशे,
आनन्द-कन्द-जननी जन-नीत-भावा-
सा साहिती दिशतु 'सुप्रभ-सुप्रभातम्' ॥

( ३ )

यच्चित्रितं स्वतपसाऽऽदिपदाञ्चितेन
केनाऽप्यनादिकविना कवि-नायकेन;
हंहो, तदेव सहसाऽद्य जनैरगण्यैः
लेलिख्यते, विधि-कृतं युग-चेष्टितं धिक् !!

( ४ )

दग्धान्तरा अपि सुधा रमणी-मणीनां
ये नूपुरैक-रणिते कल-कल्पनोल्काः;
मन्ये, सलील-ललनाऽलक-वञ्चितानां-
साहित्य-ताण्डव-विडम्बितमेव तेषाम् !!

( ५ )

भूय ऽ कदा ननु भविष्यति भारतेऽस्मिन्
साहित्य ! तेऽभ्युदयकृद् 'भवभूति'-कल्पः।
'गोदावरी'-तटरुहा अधुना नदन्ति
च्छायामिषेण किल यत्करुणामनल्पाम् !!

( ६ )

साहित्यकार ! वद भारत-भा-विलासं
कच्चित्सखे ! स्मरसि तं कवि-'कालिदासम्',
यो देव-दुर्लभ-रसाऽऽर्द्र—'शकुन्तलां' ता-
मद्यापि जीवयति मुग्ध-विदग्ध-लोके !!

( ७ )

नो साहिती लसति रे ललिते कपोले
लोलेक्षणे, न रदने मदनेषु-पुञ्जे ।
किन्त्वद्य सा जयति हन्त ! वधोर्विलापे
यस्यां पपात सहसा पति-शोक-शङ्कुः !!

( ८ )

'क्रौञ्चाऽऽकृति'र्व्यथति भारतदेश एषः
भूय ऽ कृतघ्न-वधकृत् कृत-वाण-पातः ।
साहित्य ! ते क्व 'करुणा'-तरुण ऽ कवीशः,
यः साहितीमुपकरोतु—करोतु काव्यम् !!

काशी,
'सारस्वत'-सद्म,
कार्तिकी राका,
१९९५

ईशदत्त पाण्डेय "श्रीश"

[ 'सुप्रभात'–कविः ]

# शरद्वर्णनम् ।

व्याकरण-साहित्य-शास्त्री श्रीरामनारायणदत्तशास्त्री 'रामः'

( १ )

विभ्रन्मृदु-द्विज-गवी-रचना-प्रकर्षं,
हर्षं नयद् विमल-मानस-पङ्कजानि ।
उन्मीलयत् सुमनसां नयनानि सद्यो,
जागर्तिदं जयति शारद-सुप्रभातम् ॥

( २ )

मेघान् क्षिपन्निव भुवोऽप्यतिपङ्कभारान्
गाश्चारयन्नपि दिशासु दिशासु दिव्याः ।
त्यक्तैः शिखण्ड-शकलैः कृत-मण्डनश्च,
भातीह शौरिरिव शारद एष कालः ॥

( ३ )

ता विद्युतः शरदि ते जलदाश्च पीना,
लीना विहायसि विहाय सुनामरूपे ।
ज्ञानोदये सपदि सर्वमिदं प्रपञ्चं,
सद्ब्रह्मणीव परमेऽपह्नुत-स्वलिङ्गम् ॥

( ४ )

दृष्ट्वा चिरादुपगतां शरदं सखीं स्वां,
प्रीत्या प्रफुल्लतर-मानस-पङ्कजेयम् ।
आमोद-शालि-वसुधा विलसद्विकास-
काशच्छलेन मृदु-हास-रुचं तनोति ॥

( ५ )

औत्सैः सुनिर्मल-जलैः प्रतिपाद्य पाद्यं,
स्वोद्भूत-वल्लि-कुसुमैरुपकल्प्य चार्घ्यम् ।
मन्ये द्विजेरितगिरा गिरयोऽसुलभ्या-
मभ्यागतामभिनवां शरदं स्तुवन्ति ॥

( ६ )

स्वैर्निर्झरै-र्निहित-चामर-चारु-शोभैः,
श्वेतातपत्र-तुलितैः शरदो घनैश्च ।
जुष्टा जयन्ति सविहङ्गम-भृङ्ग-वन्दि-
वृन्दैर्विवर्णित-गुणा गुरवो गिरीन्द्राः ॥

( ७ )

सम्मार्जितार्तव-रजःप्रसराः प्रसह्य,
सद्यः शरत्समयसङ्गममेत्य नद्यः ।
शुष्यज्जला इव शनैर्विगलद्दुकूलाः
कूलानि बिभ्रति तृणैः पुलकान्वितानि ॥

( ८ )

मित्रं निरीक्ष्य निकटेऽस्य कराभिमर्शाद्
हर्षाद् ह्रिया च परिमीलित-पद्म-नेत्रा ।
सन्ध्याऽनुराग-विवशा दयिते प्रसक्ता
त्यक्ताम्बरा निविशते वरुणालये सा ॥

( ९ )

ज्योत्स्नांशुकेन्दु-वदना परितश्च तारा-
हारावलीभिरभिभासित-भा-सिताङ्गी ।
द्यौर्वीक्षते स्वसुषमां वनितेव काऽपि
वापी-तडाग-सरिदादिषु दर्पणेषु ॥

( १० )

प्रावृष्यभीप्सित-घनैरभिषिक्त-मूलाः
फुल्ला इमा नभसि सम्प्रति कल्पवल्ल्यः ।
किं वा समीक्ष्य शरदं हि सुरावनीयो,
दीपोत्सवं वितनुते दिवि देववृन्दः ॥

( ११ )

आहोस्विदद्य शुचि-शारद-पूर्णिमायां,
मायामुपेत्य निशि चन्द्रिकयार्चितायाम् ।
कान्तो विधुर्विलसितो निज-भव्य-भासा,
रासाय मण्डलमलंकुरुते प्रसूनैः ॥

( १२ )

ये प्रावृषात्युपचिता निचिताश्च पङ्का
अङ्कागताः समभवन्नवनेरपां वा ।
मन्ये विदग्ध-विधुरेष सुदिग्ध-दुग्धै-
स्तान् क्षालयन्निव तनोति मनोज्ञ-रश्मीन् ॥

( १३ )

ज्योतिर्मयो विजयते नभसः प्रशान्ते,
प्रान्ते घनस्य शरदाचपलस्य चन्द्रः।
सद्विद्ययास्ततमसो मनसो विशुद्धौ
बुद्धौ यथा विमल-बोधमयः परात्मा॥

( १४ )

धिग्याचनां याति यया पिपासा,
न चातकस्याऽथ जलार्थिनोऽपि।
अयाचमानो वसुधां गतोऽपि
सुधां सुधांशोर्लभते चकोरः॥

( १५ )

एकोऽद्वितीयस्तमसः परस्ताद्
भाति स्वयंज्योतिरयं विवस्वान्।
सद्यो घनैरावरणैर्वियुक्तो
मुक्तश्चिदात्मेव विधूतभेदः॥

( १६ )

रवेः कर-स्पर्शमुपेत्य दुःसहं,
वहन्ति सन्ताप-धुरं जना भुवि।
सरोज-माला विकसन्ति मानसे
'वसन्ति हि प्रेम्णि गुणा न वस्तुनि'॥

( १७ )

शरत्सु सर्वत्र विराजिताऽपि,
प्रसन्न-तोयेसु सरोवरेषु।
पद्माकरेऽभ्यर्हित-सान्द्र-सद्मा,
पद्मा स्वपद्मालयतां व्यनक्ति॥

( १८ )

मन्ये तदस्ति गगनं न वरस्तडाग-
स्तारा लसन्ति विकसन्ति न कैरवाणि।
ज्योत्स्नेयमद्य लसिता न सिताम्बुराशि-
रिन्दुर्विभाति न हि राजति राजहंसः॥

( १९ )

वनेऽपगानां सित-सैकत-स्थले,
महागजं दीप्त-मदं महाऽगजम्।
समन्मथा यान्तमनुव्रजन्त्यमूः
करेणवः क्षालित-रेणवः क्वचित्॥

( २० )

समन्ततो वेणु-रव-प्रसाराद्,
दिने दिने गोकुल-पालनाच्च।
शरद्वनं सम्भृत-पुष्प-शोभं,
श्रीकृष्ण-लीलाभिनयं करोति॥

( २१ )

आघ्रात-सप्तच्छद-पुष्प-गन्धा,
अन्धा इवेमे भ्रमरा भ्रमन्तः।
निवार्यमाणा अपि कर्ण-तालैः,
पतन्त्यहो! दान-जले द्विपानाम्॥

( २२ )

इयं घन-श्याम-वियोग-खिन्ना,
व्रजाऽङ्गनेवाऽद्य मयूर-माला।
वनेषु बर्हाभरणानि मुक्त्वा,
लास्ये विलासे न मनो दधाति॥

( २३ )

गृहीत-शालि-प्रसवा सहैव,
परस्परं, जेतुमिवाऽतिदक्षा।
उड्डीयते सारस-पङ्क्तिरेषा,
सद्यो नभोलङ्घन-लोल-पक्षा॥

( २४ )

अहो तिरश्चामपि मन्मथोऽद्य,
विजृम्भते सम्मदयन् मनांसि।
गावो वृषस्यन्ति, वृषा नदन्ति,
श्वानो युवानोऽपि शुनीः स्वजन्ते॥

( २५ )

नवान्न-सम्पत्तिमवेक्ष्य पूर्णां,
क्षेत्रेषु सर्वे कृषि-कर्म-जीवाः।
साफल्यमालोक्य परिश्रमस्य,
सबान्धवा मोद-भरं भरन्ति॥

( २६ )

सद्मानि शस्यानि च वर्धितानि,
येषां विनष्टान्यतिवृष्टि-दोषात्।
तेऽमी सरित्कच्छ-निवासिलोकाः,
शोकान्विता दैवमहो! शपन्ति॥

# साहित्यस्य दर्शनत्वम्

श्रीमन्माध्वसंप्रदायाचार्य-दार्शनिकसार्वभौम-साहित्यदर्शनाद्याचार्य्य-तर्करत्न न्यायरत्न-गोस्वामिश्रीदामोदरशास्त्री

तव स्तुतिं किं करवाणि वाणि! देवान्तरात्तेऽन्यविधं महत्त्वम्।
यतः सुबद्धैव तनोपि मानं तमन्यथा सन्तमपि क्षिणोपि ॥

अयि शास्त्ररस-मिलिन्दाः !

विसृत्वरलोकवृत्तावजिगमिषावतां भवतां नाविदितमेतद् यत् प्रायो द्वादशाब्दीतोऽनुमासमधिकाशि प्रकाशमासाद्य प्रचञ्चूर्य्यमाणां — भारतसुपर्व-भारती-तन्द्रा-यामिनी - सुप्रभातं



सुप्रभातं सुप्रभातंसित-दिगालवालं स्वं कैशोरं व्यञ्जिजिषिव साहित्याङ्क-व्यपदेश्यं कमपि विशेषं क्षिप्रमेवाऽधिगमीति ।

वाढमाशास्यते चेदानीं गीर्वाणवाणी-प्रवणा अनल्पे नैकविधान् विषयानवलम्ब्य स्वस्वमनीषाविभ्रतीः पाठक-वृन्दारक-मानस-वृन्द-रङ्गेषु निनर्त्तयिषवः सर्वपथीनानां निज-लेखनीनां श्रमाद् भीरवोऽपि नैव दयिष्यन्तेतमामिति; स्थाने चैषा दया-दारिद्रता; [illegible] लेखनी-[illegible] सताऽऽमयनाडिन्धममेतद्; भवित्री चेत्थंकारमुत्पन्ना निर्दयता विश्वजनीना ।

एवं स्थितौ च—

"अथावाच्यः सर्वः स्वमतिपरिमाणावधि गृणन्"—

नयेनैनेन लेखकेनाऽपि स्वस्मै रोचमान एव शक्यो विषयो लेख्यतां नीयेतेत्यास्माकीनाऽपि प्रवृत्तिर्निर्दिष्ट-शीर्षके वस्तुन्यायतमानतां विभ्रत्यातप्रसरा । यद्यपि किलोच्चावचता-चुञ्चु-प्रपञ्चे प्रपञ्चे प्रातिस्विकत्वेन स्फुटाऽनन्तता; तथाऽपि संक्षेपतस्तावच्चेतनाचेतनत्वाभ्यां वस्तुद्वयमेव विचार-पदवीमध्यास्ते, तत्र साक्षात्परम्परासाधारण्येन चेतन-प्रमुखा विचार-सरणिर्दर्शनपदवाच्या; परा तु सा विज्ञानशब्द-व्यवहार्य्या ।

तत्र चेतनस्यैक्यमेकजातीयत्वं जीवेशत्वाभ्यां द्वैविध्यं वा संगिरमाणानि दर्शनानि त्रैविध्यभाञ्जीति वस्तुगतौ चेतनापरपर्यायात्मस्वरूपवैलक्षण्योपगमात् पुनरवान्तरवैविध्यशालीनि सन्ति ।

अत्र प्रथमपक्षे द्विविधा वादिनः—सच्चिदानन्दरूपमात्मानं मन्यमाना अद्वैतिनः; परा-शब्द-स्वरूपमेनं सिद्धान्तयन्तः शाब्दिकाः ।

द्वितीयपक्षगास्तु चतुर्विधाः—चिदानन्दाश्रयं भणन्तो मीमांसकादयः, चिन्मात्राश्रयं वदन्त आर्हतादयः, चिदानन्दात्मकमुपयन्तः प्रात्यभिज्ञादयः, चिन्मात्रात्मकं स्थापयन्तः कापिलादयः ।

तृतीयाध्वाश्रयिणोऽपि चतुर्विधाः—जीवेशयोरुभयोरपि चिन्मात्ररूपत्वमानिनः पातञ्जलादयः, तयोरीशस्य चिन्मात्राश्रयत्वं; जीवानां च चिदानन्दाश्रयत्वं प्रतिजानाना नैयायिक-वैशेषिकादयः; प्रस्थानेऽस्मिन् मुक्त-जीवानां नोभयाऽश्रयत्वं; तदात्मकतायास्तु चर्चैव का ?;

तयोरेव चिदानन्दाश्रयत्वं निर्णयन्तः पाशुपतादयः, तयोरेव चिदानन्दात्मकत्वं व्यवस्थापयन्तो विशिष्टाद्वैतिनः, शुद्धाद्वैतिनः, द्वैताद्वैतिनः, सान्तर्गणा द्वैतवादिप्रभृतयश्च ।

एवमेव द्वैतसिद्धान्तमुपयन्तो महर्षिभरतोपज्ञ-दर्शनिनो द्विविधाः—संगीतशास्त्रानुसारेण नाद-ब्रह्मवादिनः, साहित्या-

परपर्य्याय-रसदर्शनिनो रसब्रह्मवादिनश्च, यद्यपि दर्शनशास्त्र-मात्र एव प्रमाण-प्रमेय-तदवान्तरविचार-सरणयोऽवश्यं क्लृप्तास्तथाऽपि ताः क्वचिच्छङ्कग्राहिकया निर्दिष्टाः । क्वचित्तु समानतन्त्रादिनयैः परमतमप्रतिषिद्धमनुमतं भवतीति न्यायेनोपेयन्ते ।

एवं च प्रकृतेऽप्युपजीव्यत्वात् प्रधानं रसमुपपादयच्छास्त्रं तदानुपङ्गिकान् पदार्थानुक्तदिशैवाऽनुमोदते ।

दर्शने चाऽत्र प्रायशो वैयाकरणाऽध्वैवाऽनुगुणतया पर्यशीलीति व्यञ्जना-शब्दप्रवृत्तिचातुर्विध्य-प्रत्यक्षादिप्रमाणत्रय-व्यापारमुख्यविशेष्यक-शाब्दबोधादि-प्रतिपादनविधया नितरां स्फुटं जागर्त्ति ।

इदमीय-राद्धान्त-सिद्धि-निदानतां भजन्ती, "रसो वै सः; रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवतीति" भगवती श्रुतिरेव विराजते ।

एनया किल जगज्जन्मस्थितिलयकर्त्तुरानन्दघनस्य ब्रह्मणः परमात्मनो भगवतोऽनुपमत्वमप्रामाण्यज्ञानानाऽस्कन्दित-बोधमयत्वेनानन्दमयविग्रहत्वं मुमुक्षूणां प्राप्यत्वमेतदनधिगत्याऽनादि-संसार-बन्ध निवृत्त्यसंभवः, जीवतत्त्वस्याऽपि वस्तुगत्याऽऽनन्दरूपत्वं च स्वघटक-तत्तत्पदादिनोन्मील्यन्ते ।

न चाऽन्यश्रुत्या जीवेशयोरभेद-बोधनादुक्तश्रुतेर्भेद-प्रत्यायनं विरुद्धं स्यादिति शङ्कनीयम् ?

वेदत्वावच्छेदेन प्रामाण्येऽवधारिते तद्घटिकानां ब्रह्मपराणां सर्वासामेव श्रुतीनां तात्पर्य्यनिर्णायक-षड्लिङ्गैः प्रतिपिपादयिषितव्यांशदिशि विरोधाभावस्य समन्वयवादे सिद्धान्तितत्वात् ।

परस्य रसात्मकत्वं प्रमापयन्त्यां श्रुतौ लाभकर्तृत्व-कर्मत्वाभ्यां समुज्जीवितभेदस्योत्पत्तिशिष्टत्वादुत्पन्नाशिष्टभिदातः प्राबल्याच्च ।

शेषास्त्वखिला विधा अत्रत्या ब्रह्ममीमांसा-प्रक्रियातः समानतन्त्रसिद्धान्ततोऽवसेयाः ।

इयांस्त्वत्र विशेषः—ब्रह्मविद्या तावदसंभावनाविपरीतभावनापारोक्ष्यदोषोत्पाटनपटिष्ठैः श्रवण-मनन-निदिध्यासनैः परतत्त्वं साक्षात्कारयति । परमर्षिंभरतोपज्ञं रसविद्या तु संसारिणमननुष्ठितोक्तसाधनमपि चिदानन्दमयं ब्रह्म गोचरयन्ती, नूनं जननीवाऽसत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहत इत्याद्युपोद्बलितेन गुडजिह्विका-न्यायेन नाट्यवेदोदितालौकिकोपायैरविद्यासमकालमेव सच्चिदानन्द-घनरस-तत्त्वस्याऽसेचनकतादिग्दर्शनया विषय-व्यालेभ्यो वैमुख्यमानीय; तदीयानुपमास्वाद-चारिमणि गृध्नुतां संपाद्य; प्रकृतपथाध्वनीनतायामुन्मुखयतीति ।

न च सत्यामविद्यायां कथमिव ब्रह्माऽवगतिरिति हठादारेकणीयम् ? मोक्षाख्यतदधिगतेरेवाविद्याऽत्यन्तनिवृत्तिपूर्वकत्व-नियमात् ।

न चाऽविद्याविलयानन्तरमेव तदवगतिरिति नैगमिकनियमव्याहतिरिति भ्रमितव्यम् ?

तन्नियम्यावगतित एव मुक्तिरित्यत्र तत्स्वारस्यात् ।

न च तत्साक्षात्कृतौ मुक्तेरवश्यंभाविताविरोध इति वाच्यम् ?

तस्यां तदव्यवहितोत्तरत्वादरे क्षेत्रविशेषे वादिमते प्रारब्धफलभोगानवसरप्रसक्तेः; अतथात्वे चास्माकेऽपि नये विरोधाभावात् ।

नचैवमनुपलब्ध-रसास्वाद-संपत्तिकात् को विशेष इत्यास्थेयम् ?

लोकातिगाल्हाद-परिपन्थि-दौर्भाग्यवत्त्वस्यैव विशेषत्वाद् ।

अधिकमाकरादिभ्योऽवसातव्यमलमिहाधिकेनेति दिक् ।

किं च रसस्यात्मवादे वैतच्छास्त्रप्रतिपाद्यान्तरापेक्षया मुख्यत्वं "रसश्च मुख्य" इत्यादिना मम्मटभट्टैरभ्यधायि,—

वर्णितं च काव्येऽभेदेन पुरुषं रूपयद्भिरपि रसस्यात्मत्वं—

**"शरीरं शब्दार्थौ, ध्वनिरसव, आत्मा किल रसो,**
**गुणा माधुर्याद्या, उपमितिमुखोऽलंकृतिगणः ।**
**सुसंस्थानं रीतिः, स खलु परमः काव्यपुरुषो—**
**यदस्मिन् दोषः स्याच्छ्रवणकटुताऽऽदिर्न च परः"**

पद्येनानेन कविकर्णपूरैरन्यथा विद्या-विरुद्धताऽऽपतेद् ।

एतेन साहित्ये दर्शनत्वमाग्रहयाल्नां कल्पनातरङ्गायितमेतदिति परास्तम् ।

वेदमूलकत्वादस्मिन् गृह्य-कल्पना-विजृम्भितत्वस्य शशशृङ्गदेशीयत्वात् ।

कथमपराथाऽदसीयानां भूयसां रूपकातिशयोक्तिप्रभृतीनामलंकाराणां "गुहां प्रविष्टौ"; "द्वा सुपर्णा" प्रभृतिषु वेदे संभवः ?

नच तादृशोक्तेः साध्यवसानलक्षणामूलकत्वादलंकारत्वोद्भावनमप्रामाणिकमिति सांप्रतम् ?

चमत्कारक-साध्यवसानलक्षणया वर्णनस्यैवाऽतिशयोक्तिरूपत्वात् ।

नचोपजीव्य-रसरूपालंकरणीयस्यैव तत्राभावात् कथं तत्रालंकारतेत्यप्युट्टङ्कनीयम् ?

मञ्जूषास्थ-कुण्डलादीनामलंकारत्व-व्यपदेशवत्ताया व्यवहारेऽबाधात् । अतएवाऽङ्गोपाङ्गानामिवैतस्याऽप्युपकारकत्वेनोपादेयताऽऽगमे ध्वनिता—"एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्त" इत्यादौ ।

नचाऽस्य व्याकरणज्ञानावश्यकतां बोधयतः कथं साहित्योपयोगितापरत्वं संगच्छेतेति प्रत्ययस्थेयम् ?

शब्दज्ञाने सम्यक्त्वस्यैव व्याकरणज्ञानाऽधीनत्वात् । सुप्रयुक्तत्वं पुनः साहित्यज्ञता-निबन्धनमेवेत्यत्राऽविवादात् ।

नच सुप्रयुक्तत्वस्य कोशज्ञानापेक्षित्वात् कथमत्र निर्विवादतेति भणनीयम् ? प्रयुक्तस्वांशे तथात्वाभ्युपगमेऽपि प्रयोगगत-सौष्ठवस्य विधेयताऽवच्छेदकताऽवच्छेदकविधयोपादेयतायाः साहित्यज्ञानैकसाध्यतायां विप्रतिपत्त्युत्थानाऽप्रसक्तेः।

तस्मान्निष्प्रत्यूहं साहित्यशास्त्रस्य वैदिकदर्शनत्वमित्यखिलमवदातम् । एतद्दर्शनप्रधानोपेयास्वादाधिकारिताऽवच्छेदककुक्षौ प्राक्तनेदानीन्तनवासनाद्वयनिवेशस्त्वन्वयव्यतिरेक-सध्रीचीनोऽलंकर्मीणतामावादयेदिति च सर्वैरेव श्रद्धेयम् । उक्तं चाभियुक्तैः—

"पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससंततिमिति ।"

सर्वमेतदाकलय्यैवावर्णि तत्रभवद्भिः श्रीमद्भिः श्रौतस्मार्त्तकाण्ड-पारदृश्वभिः, पदवाक्य-प्रमाण-पारावारीणैरखिलदर्शनोदधिमन्दरायमाण-धिषणैरागममर्मिक-धुरीणैरालंकारिक-चक्रचूडामणिभिः,कवितास्वयंवृतैर्दिग्दन्तावलगण्ड-कण्डूतिपण्डितश्लोकैरस्माकीन-सारस्वतसर्ग-शतधृतिभिर्मानवबल्लीकुल-पयोधि-कौस्तुभैः—गुरुवरश्री ६ गङ्गाधरशास्त्रिचरणैः—

"नाचान्तं यच्चिरन्तैरपरिचितचरं यच्च वाचालचेलै—
रौचित्यं यत्र मुञ्चेदपि च विरचयेद्यच्चमत्कारि चेतः ?
तादृक्प्रौढिप्रकर्षप्रणयिभणिति या सूयते काव्यरत्नं—
पुण्यैः कस्याप्यगण्यैः परिणमति मुखे सा हि
साहित्य-रीति":—

—स्वीयेनानेन पद्येन ।

प्रकृतविषये बहुविवक्षायामपि विस्तृतिभयादुपरम्यतेऽधुना । भगवदनुकम्पया पुनरवसरावाप्तौ भवादृशामुपढौकनायोपस्थास्यते संमदपुरस्सरमिति शम् ।

सुप्रभात-विशेषाङ्के लेखोऽभूदधिकाशिकम् ।
दीपाल्यां शरनन्दाङ्क-भूमेऽब्दे वैक्रमे शनौ ॥

---

# साहित्यम् !!

श्रीमान् तारादत्तपन्तः, साहित्याचार्यः, दर्शनकेशरी, व्याकरण-काव्य-तीर्थः

किन्नाम तावत्साहित्यम् ? कश्चार्थः ? का च व्युत्पत्तिः ? तत्र व्युत्पत्तिरेव प्रथमं विविच्यते । नानाऽर्थोऽनेकप्रकृतिप्रत्ययव्युत्पाद्यश्चाऽयं शब्दः । तथाहि 'षह् तृप्तौ' इत्यस्मात् भौवादिकात् क्त-प्रत्यये, सहितं=तृप्तम् , षह् अभिभवे, इत्यस्माच्चुरादिपठितात्—अभिभूतम्, अभिभावितञ्च=सहितम्। डुधाञ्—धारण—पोषणयोरित्यस्मात् 'क्ते' दधातेर्हिरिति ह्यादेशे, 'हितं मनोहारि च दुर्लभं वचः' इत्यादिषु प्रयोगेषु प्रसिद्धार्थकं हितम्, हितेन—हिताभ्याम्—हितैश्च सह वर्तत इति सहितम्—सहितस्य-सहितयोः-सहितानां वा भावः साहित्यम्। साकं-सार्धं-समं-सह-इत्यस्मात्-सहशब्दात्-अव्ययात्-तारकादित्वात्सञ्जातार्थे इतच् प्रत्ययेऽपि सहितम्, तस्मादपि भावे कर्म्मणि वा ष्यञि साहित्यम् । सहनं साही-इञ् वपादिभ्यः, साहिं त्यजतीति 'अन्येष्वपि दृश्यत' इति 'ड' प्रत्ययेऽपि साहित्यम् । षह् मर्षणे इत्यस्मादपि पूर्वोक्तरीत्या सिद्धति ।

प्रयोगश्चाऽस्य 'साहित्यपाथोनिधिमन्थनोत्थं' 'साहित्य-सङ्गीत-कलाविहीन' इत्यादिषु दृश्यते, न प्राचीनेतमेषु ग्रन्थेषु । अधुना तु 'हिन्दी'-साहित्य सम्मेलनादारभ्य हिन्दी-साहित्यम्, वैदिक-साहित्यमित्यादि प्रयुञ्जते लेखनी-ग्रहण-पटवः । एतादृशेषु

स्थलेषु 'हिन्दी-वाङ्य्म्' संस्कृत-वाङ्मयम्, वैदिक-वाङ्मयम्-इत्यादिप्रयोग एव साधीयान्, समुचितः सङ्गतश्च।

प्रकृते तु काव्यविचारात्मके शास्त्रे योग-रूढस्य योग एव विचारणीयः, तदर्थं काव्यशब्दोऽपि विचारणीयः 'कविः क्रान्तदर्शीति' भाष्यात् आक्रान्तं=

लेखकः



अतीतम्, प्रक्रान्तं वर्तमानम्, आक्रान्तम्, वर्तमानं च यः पश्यति=ज्ञानदृष्ट्या साक्षात् करोति, स मनीषी कविरित्युच्यते, तस्य वाचिकं कर्म काव्यम्। कु-शब्दे इति धातोः 'सर्वधातुभ्य इन्' इति शाकटायनसूत्रेण इन् प्रत्यये, गुणे, अवादेशे, कौति=शब्दायते चमत्कारिवचनमिति कविः, तस्मात् गुणवचनब्राह्मणादिभ्यः कर्मणिचेति ष्यञ् प्रत्यये, भत्वात् यस्येतिचेति लोपे, आदिवृद्धौ, काव्यं=शब्दस्वरूपं, कवि-कृते चमत्कारि-वाङ्मय-प्रबन्धे योगरूढम्।

तच्च काव्यं द्विविधम्-दृश्यम्, श्रव्यमिति भेदेन। दृश्यं नाट्यमित्युच्यते नाट्यं—अभिनेयं, नट-नृत्तौ-अस्य वाक्यार्थाभिनयोऽर्थः, नट्यते वाक्यार्थाभिनयपूर्वकं साक्षात्क्रियते-इति नाट्यम्, तदतिरिक्तं श्रव्यम्, परिशेषात्-काव्यम्। एतयोर्भेदयोः प्रायः साजात्येऽपि स्त्री-पुंसयोरिव भेदोऽपि स्पष्टमेव प्रतीयते। तदर्थविचारशास्त्रमपि द्विविधमासीत्, काव्य-प्रकाशः, (नाट्यप्रकाशः) दशरूपकञ्चेति। पुनश्च सौकर्य्याय सौलभ्याय-विद्यार्थिनां, सहैव ग्रन्थरचना कृता सुधीभिरिति हेतोः, सहितयोः काव्य-नाट्ययोर्भावः साहित्यमिति साहित्यदर्पणादावन्वर्थशब्दप्रवृत्तिः। प्रवृत्तिनिमित्तस्य सहितत्वस्य तत्र स्फुटं विद्यमानत्वात्। सोऽयं साहित्य-शब्दः काव्य-नाट्योभयविवरणात्मके शास्त्रे योगरूढः सन् विचार्यविषयमपि क्रोडीकरोति, सापेक्षत्वात्। वर्ण्यो वर्णितश्चात्र विषयो दृष्टः, श्रोतुश्च तृप्तिजनकः-इति प्रथमा व्युत्पत्तिश्चरितार्था। तृप्तिकाले सर्वाणि विषयान्तराणि सहति =अभिभवतीति द्वितीया व्युत्पत्तिः सङ्गता।

काव्यं यशसेऽर्थकृते इत्यादिरीत्या कवेः, पाठयितुः, पठितुः, अभिनेतुः, श्रोतुश्च हितकरत्वेन तृतीया व्युत्पत्तिः सहृदयमानस-निष्णाता। सहैव काव्य-नाट्यविचारप्रदर्शकत्वेन चतुर्थी साहित्यदर्पणादावारूढा। सुतरां विज्ञात-साहित्यः, पंक्ति-लापने, ग्रन्थ-टीकने, प्रबन्ध-लेखने, गूढार्थ-विवरणे, प्रस्तुतार्थ-प्रकथने, धीरोदात्तादि-वर्णने, शृङ्गारादेः प्राधान्य-प्रदर्शने, उपमादेरलङ्करणीकरणे, लौकिक-शास्त्रीययोः पदार्थयोश्चचमत्कारितया वाग्विषयीकरणे-इतरेषामेकदेशिनां कृतमभिभवं त्यजति=हीनं करोति, इतराभिभवविषयो न भवतीति हेतोः साहिं त्यजतीति विग्रहार्थः सफलो जातः। सहते=मृष्यति सर्वं जगदपि वर्णयितुं, नवीकर्तुं, परिवर्तयितुं वा, सहितं कविकर्म (कविरेव प्रजापतिः इति न्यायात्) तस्य भावस्तत्वं विचारात्मकशास्त्रम्।

सोऽयं 'साहित्य'—शब्दार्थः कृतो विशदः। तत्रेष्टं वैशिष्ट्यं विशेषयन्तु साहित्य-रसिकाः-इति परमार्थः।

# शाब्दबोधस्य प्रत्यक्षादि-भिन्नत्वम् !

तार्किक-शिरोमणिः श्री वामाचरणभट्टाचार्यः, न्यायाचार्यः, तर्कतीर्थः.

अयि भोः प्रियपाठका नव्यास्सभ्य-महोदयाः । दृश्यते तावदस्मिन् सत्ये जगति सत्यज्ञानाधीना एव लोकानां सर्वे प्रकृतव्यवहाराः प्रवर्त्तन्ते । तादृशं हि सत्यं ज्ञानं किञ्चित्प्रत्यक्षात्मकं, किञ्चिदनुमित्यात्मकं, किञ्चिच्च शाब्दात्मकं, किञ्चिदुपमित्यात्मकञ्चेति समीचीनो न्यायसिद्धान्तः । निरुक्ते च प्रदीपायमाने सिद्धान्ते केचन विप्रतिपन्नाश्शाब्दबोधस्य प्रत्यक्षात्मकत्वं कल्पयन्तस्तस्य प्रत्यक्षादिविजातीयप्रमितित्वन्निराकुर्वन्ति । तथाहि-शब्देषु तावच्छक्त्यादिवृत्तिज्ञानात्, शब्दार्थस्योपस्थितिर्भवतीति सर्व-सम्मतम्, तादृशोपस्थितेर्ज्ञानलक्षणा-सन्निकर्षात्मकत्वस्य नैयायिकैरप्यभ्युपगम्यमानतया तस्मात्सन्निकर्षाज्जायमानेन पदार्थज्ञानेनाऽलौकिक-प्रत्यक्षभावमावहतैव भवितव्यमिति शाब्दबोधस्य प्रमित्यन्तरत्वं नाऽङ्गीकर्त्तव्यमेवेति मतम्; न यौक्तिकम्, न चाऽनुभविकम्, रमणीयम्वा प्रतिभाति । यतो न केवलं शब्दाधीनैवोपस्थितिस्तादृश-सन्निकर्ष-रूपा, अपि तु अनुमित्यादिरूपाऽनुभवजनिताया अप्युपस्थितेः फलदर्शनेन तथात्वं स्वीकरणीयम् । एवञ्चेच्छाब्दबोधस्याऽलौकिकलौकिकप्रत्यक्षत्वाभ्युपगमे, यादृशस्थले घट-शब्दाधीनपदार्थस्योपस्थितिः पटाद्यनुमितिजन्य-पटाद्युपस्थित्यात्मिका समूहालम्बन-रूपा जनिता; तादृशस्थले तादृशोपस्थित्यनन्तरं घटादि-पदार्थ-विषयक-पटाद्यपदार्थ-विषयकाऽलौकिक—ज्ञानापत्तिः, नहि शब्द-श्रवणानन्तरं पदार्थ-विषयक-ज्ञानस्याऽपदार्थ-विषयकत्वं कस्याऽप्यनुमतम्, तथा सति तादृश-पदार्थाऽपदार्थ-विषयक-ज्ञानोत्तरं पदार्थाऽपदार्थ-विषयक-ज्ञानवानहमित्याकाराऽनुव्यवसायाऽऽपत्तिर्वारयितुमशक्या स्यात् ।

न च विषयता-सम्बन्धेन शब्द-जन्य-ज्ञानस्याऽनुव्यवसायात्मक-प्रत्यक्षम्प्रति, तादात्म्य-सम्बन्धेन पदार्थमात्रविषयक-ज्ञानस्य कारणत्व-कल्पनान्न पदार्थाऽपदार्थ-विषयक-ज्ञानानुव्यवसायापत्तिः । निरुक्ताऽनुव्यवसायस्य विषयता-सम्बन्धेन पदार्थाऽपदार्थ-विषयक ज्ञान एव सत्वेन तत्र तादात्म्य-सम्बन्धेन पदार्थमात्र-विषयक-ज्ञानस्य तादृशाऽनुव्यवसाय-कारणस्य विरहादिति वाच्यम् । तथा सति छिद्रेतरो घटो जलाहरण-योग्यः—इत्याकारक-ज्ञान-सहिताद् घटेन जलमाहर इत्याकारक-वाक्यज्ञानाज्जायमानस्याऽपदार्थ-छिद्रेतरत्वविशेषित-घट-करणक-जलाहरणविषयक—ज्ञानस्याऽनुव्यवसायाऽनुपपत्तेः, निरुक्तज्ञानस्य छिद्रेतरत्व-रूपापदार्थ-विषयकतया विषयतयाऽनुव्यवसायात्मक-प्रत्यक्षाधिकरणे छिद्रेतर-घट-करणक-जलाहरण-विषयक-ज्ञाने तादात्म्य-सम्बन्धेन पदार्थ-मात्र-विषयक-ज्ञानस्याऽसत्वात् ।

किञ्च ज्ञानात्मक-सन्निकर्षस्य तदधीन-प्रत्यक्षे विशेष्य-विशेषण-भावाऽवगाहित्वम्प्रत्यप्रयोजकतया घटोऽस्तीत्याकारक-वाक्यानन्तरमस्तित्वं घटीयमित्यपि ज्ञानापत्तेर्वज्र-लेपत्वाच्च । यदपि शब्दाऽधीनं ज्ञानं स्मरणात्मकमेव, नत्वनुभवरूपमेवेति मतम्; तदप्यसङ्गतम्, शब्दजन्य-ज्ञानस्य तद्विशेष्यक-तद्विशेषणक-संस्काराजन्यत्वेन तत्र स्मरणत्व योगस्य वक्तुमशक्यत्वात् ।

न वा शाब्दबोधस्य योग्यतावत्वादि-लिङ्गजन्यत्वेनाऽनुमितित्वमपि सयुक्तिकं सम्भवति 'घटोऽस्ती' ति-वाक्य-श्रवणानन्तरं घटादावस्तित्वानुमानेऽस्तित्वरूप-योग्यतायास्सिद्ध-साधन-भयेन हेतुत्वाऽसम्भवात्, अस्तित्वाभावाभाववत्व-रूप-योग्यतावत्वस्य घटादावस्तित्व-सिद्ध्यर्थं हेतुत्वाऽनुसरणे तु घटः कर्मत्वमानयनं कृतिरित्यादावपि कर्मत्वमाधेयता-सम्बन्धेन घटवत् तादृश-सम्बन्धेन घटाभावाभाववत्वादित्यनुमानादिना घटकर्मत्व-ज्ञानापत्तेः ।

नच योग्यतावत्व-सहिताऽकाङ्क्षादिमत्वस्यास्तित्व-साधकत्व-स्वीकारे नोक्ताऽनुमित्यापत्तिरिति वाच्यम् । अस्तित्वाभावाभाववत्वरूप-योग्यत्वस्य घटाद्यर्थनिष्ठतया घटपदान्यवहितोत्तराम् पदत्वादि रूपाऽकाङ्क्षायाश्च पदनिष्ठतया द्वयोरेकाधिकरणाऽप्रसिद्ध्या योग्यता-सहिताऽकाङ्क्षादिमत्वस्य गगन-कुसुमायमानत्वेन हेतुत्वाऽसम्भवात् । अथ घटोऽस्तीतिवाक्याधीनस्य घटादावस्तित्वज्ञानरूप-शब्द-फलस्य घटोऽस्तितावान् 'अस्ति'-पद-समभिव्याहृत-घटपदस्मारितत्वात्, कलशवदित्यनुमानेनाऽन्यथासिद्धि-सम्भवे कथं शाब्दस्याऽनुमितिभिन्नत्वमङ्गीकर्त्तव्यम् ।

नच घटपद-स्मारितत्वं घटादौ व्यभिचरतीति वाच्यम्? व्यभिचार [illegible] हेतुना घटादावस्तित्व-सिद्धौ

बाधकाभावादिति कण-भक्ष-पक्षानुसारिणाम्मतमेव समीचीनमिति चेन्न। शाब्दबोधस्यानुमितिभिन्नत्वमङ्गीकुर्वताम्मते घटादौ घटपदस्मारितत्वाभाव-निश्चय-दशायामपि घटोऽस्तीति वाक्यादस्तित्व घटयोरन्वयबोधोदयस्याऽवश्यकतया तदानीमुक्त-स्मारितत्व-रूपहेतोर्ज्ञानोत्पादाऽसम्भवेन कारणाऽभावात् घटादावस्तित्वानुमित्यसम्भवात्।

नच शाब्दबोधेऽपि स्मारितत्व-ज्ञानमेव कारणम्? तथा सति घटपदाद् घटार्थस्य स्मरणाभाव-दशायान्तत्र घटपदस्मारितत्व-ज्ञानाद् घट-शाब्द-बोधापत्तेः।

किञ्च शाब्दस्याऽनुमितिरूपत्वे घटादि-पदघटित-घटादिपदार्थ-शाब्द-सामग्री-दशायां घटादेरनुमितिसामग्री-सत्त्वेऽनुमितिम्प्रति अनुमिति-सामग्र्याः प्रतिबन्धकतायाः कल्पयितुमशक्यतया तदानीं घटाद्यनुमित्यापादनम्, कथामात्रेण वारयितुमशक्यं स्यात्।

किञ्च शाब्दबोधस्यानुमित्यादिभिन्नत्वमङ्गीकुर्वतान्नैयायिकादीनाम्मते चैत्रादन्य इत्यादौ चैत्र-पदोत्तर-पञ्चम्याः प्रतियोगित्वमर्थः। तत्र चैत्रादेराधेयतयाऽन्वयः, प्रतियोगित्वस्यान्यपदार्थैकदेशे भेदे निरुपकत्व-सम्बन्धेनाऽन्वयः। तथाचोक्तवाक्याच्चैत्रनिष्ठ-प्रतियोगिता-निरूपक-भेदवानित्याऽऽकारको भेदनिष्ठ-विशेषणताक-भेदवन्निष्ठ-विशेष्यताको बोधस्सर्वानुभव-सिद्धः। शाब्दस्याऽनुमितित्वमभ्युपगच्छताम्मते तु भेदश्चैत्रप्रतियोगिकः, चैत्रपद-साकाङ्क्षाऽन्यपद-स्मारितत्वादित्यनुमानाऽधीनानुमितिविषयतायां भेदसत्त्वेऽपि भेदवत्त्वसत्त्वात्, शब्द-प्रमाण-फलानुमान-प्रमाण-फलयोर्विलक्षणतया शाब्दबोधस्याऽनुमितित्वाऽभिधानं कथं धीमते रोचते। अन्यादृशाऽनुमानस्य तन्मते वक्तुमशक्यत्वात्। अपि च घटोऽस्तीतिवाक्यश्रवणानन्तरमस्तित्व-घटयोर्ज्ञानोत्तरकालेऽस्तित्वेन घटं शृणोमि नत्वस्तित्वेन घटमनुमिनोमीत्यनुव्यवसायबलादपि शाब्दस्याऽनुमितित्वन्नाऽभ्युपगन्तव्यम्। ये तु मन्यन्ते सर्वत्र घटोऽस्तीत्यादि-वाक्याधीनेऽस्तित्वादिना घटादिविषयक-शाब्दबोधे घटोऽस्तीत्यादिवाक्यमस्तित्वविशेषित-घटविषयक-यथार्थज्ञानवदुक्तमित्याकारकाप्तोक्तत्व-निश्चयः कारणम्।

अत एव शाब्दबोधस्य नाऽनुमितित्वम्, अनुमित्सा-विरहदशायां सिद्धिविधया उक्ताप्तोक्तत्व-निश्चयस्य वाऽनुमितिप्रतिबन्धकत्वात्. किन्तु शाब्दस्य प्रमात्वम् नैयायिकैरभ्युपगम्यमानं कथमपि न सयुक्तिकं सम्भवति, स्मरणस्येव समानाकारकनिश्चयोत्तरकालीन-ज्ञानमात्रस्यैवाऽयथार्थत्वेन शाब्दबोधस्याऽप्युक्ताप्तोक्तत्वरूप समानाकारक-निश्चयजन्यतयाऽयथार्थत्व-सम्भवादिति। तदप्यत्यन्तमसाम्प्रतम्, निरुक्ताप्तोक्तत्व निश्चयस्य शाब्द-हेतुत्वे प्रमाणाऽभावात्, अन्यथा, वेदजन्य—वेदार्थज्ञानस्याऽपि तादृशाप्तोक्तत्व—निश्चयजन्यतया मिथ्यात्वेन निखिल—वैदिक—व्यवहारोच्छेदापत्तिरित्यास्तामिवस्तरः।

---

# किमपि निवेदनम्!!

[ ले०—साहित्य-व्याकरणाचार्यः श्री भगवान् पाण्डेयः, तर्क-वेदान्त-सांख्यतीर्थः ]

पांडित्यस्य विकाशो न खलु विलासो महाधियां सुधियः।
अबुधजनोचितवेशो मिलदुपदेशो न यो नित्यम्॥१॥

सम्यगधीतो वेदो यदपि विभेदो घृणा च जीवेषु।
संस्कृति-नोदित-चित्ते त्वधिगतवित्तेऽपि दारिद्र्यम्॥२॥

कालमुपेक्ष्य न कश्चिद् भवति विपश्चिन्महानपि प्रेयान्।
क्षुत्क्षामस्य हि गीते भवति सुगीतेऽपि नोऽभिरुचिः॥३॥

त्यजति बुधः सुखमल्पं विगतमनल्पं विचार्य तदभावे।
मुञ्चति वित्तमशेषं त्यजति न लेशं पुरा मूर्खः॥४॥

हरिरिह भवतु सहायो भवतु विमायश्च हार्दिको भावः।
कलयतु कमपि विरोधं जगदिह शोधं न कामये तस्य॥५॥

शिरसि महाशनिपातो भवतु विघातश्च नित्यशः कार्ये।
आरब्धं न जहाति प्रारब्धापेक्षया पुरुषः॥६॥

# अग्निपुराणीयो वृत्ति-विचारः

साहित्याचार्यः पुरुषोत्तमशर्मा चतुर्वेदः

साहित्य-शास्त्रे ह्यभिधा-लक्षणाप्रभृतिवृत्तीनां विचारः प्रायशोऽग्निपुराणाभिधावृत्तिमातृका-शब्दव्यापारविचार-काव्यप्रकाश-साहित्यदर्पण-रसगङ्गाधरादि-ग्रन्थेषूपलभ्यते । तत्राभिधावृत्तिमातृका-निर्मात्रा भट्टमुकुलेन प्रायशो मीमांसकमतमादृतम्, अतएव च तेन साहित्यशास्त्रे सर्वत्र समभ्यर्हिताऽपि व्यञ्जनावृत्तिर्नोररीकृता । शब्द-व्यापार-विचारस्य विरचयिता तु स एव काव्यप्रकाश-प्रणेता प्रतीक्ष्यतम-श्रीमम्मट इति नानयोर्वैमत्येऽवकाश-लेशस्याऽप्यवसरः । साहित्य-दर्पण-प्रणेत्राऽपि महाभागोऽयमेव प्रायशोऽनुसृतः । तदेतत् सर्वं नाविदितं विदुषामिति नैषां मतानीह विवेचयितुं वयमभिलष्यामः ।

अग्निपुराणीयो वृत्तिविचारस्तु प्रायः स्वतन्त्र एवं साम्प्रतमप्रचलितश्चेति स एवेह यथामति विवृत्य विदुषां पुरस्तादुपस्थाप्यते । आशास्महे सोऽयं प्रेक्षावतां रुचिकरः स्यादिति ।

साम्प्रतमुपलभ्यमानेषु साहित्य-संदर्भेषु वृत्तीनां वर्णनं सर्वप्रथममस्मिन्नेवोपलभ्यते । अत्र हि वृत्तीनां वर्णनमप्यलङ्कारेष्वेव कृतम् । त्रिविधा हि तत्राऽलङ्कारा निरूपिताः—शब्दालङ्काराः, अर्थालङ्काराः, शब्दार्थोभयालङ्काराश्चेति । तत्रोभयालङ्कारनिरूपणावसरेऽभिव्यक्तिनाम्नाऽप्यलङ्कारः कश्चिन्निरूपितः । तद्विषये चेदमभिहितम्—

प्रकटत्वमभिव्यक्तिः, श्रुतिराक्षेप इत्यपि ।
तस्या भेदो, श्रुतिस्तत्र शाब्दं स्वार्थ-समर्पणम् ॥
भवेन्नैमित्तिकी पारिभाषिकी द्विविधैव सा ।
संकेतः परिभाषेति ततः स्यात् पारिभाषिकी ॥
मुख्यौपचारिकी चेति, सा च सा च द्विधा द्विधा ।
सा (स्वा ?) भिधेयस्खलद्वृत्तिरमुख्यार्थस्य वाचकः ॥
यया शब्दो निमित्तेन केनचित् सौपचारिकी ।
सा च लाक्षणिकी, गौणी लक्षणा-गुणयोगतः ।
अभिधेया विनाभूतप्रतीतिर्लक्षण-योच्यते ।
अभिधेयेन सम्बन्धात् सामीप्यात् समवायतः ॥
वैपरीत्यात् क्रियायोगात् लक्षणा पञ्चधा मता ।
गौणी गुणानामानन्त्यादनन्ता, तद्विवक्षया ॥
अन्यधर्मस्ततोऽन्यत्र लोक-सीमाऽनुरोधिना ।
सम्यगाधीयते यत्र स समाधिरिह स्मृतः ॥
श्रुतेरलभ्यमानोऽर्थो यस्माद्भाति सचेतनः (साम् ?) ।
स आक्षेपो ध्वनिः स्याच्च ध्वनिर्व्यञ्जयते यतः ॥
शब्देनार्थेन यत्रार्थः कृत्वा ( स्वयमुपार्जनम् ) ।
प्रतिषेध इवेष्टस्य यो विशेषाऽभिधित्सया ।
तमाक्षेपं ब्रुवन्त्यत्र........................॥

—अग्निपुराणम्, अ० ३४५ श्लो० ७-१५½

अयमस्य संदर्भस्य भावः । शब्देनार्थस्य प्रकटनमभिव्यक्तिरित्यलङ्कृतिरुच्यते । तस्या द्वौ भेदौ-श्रुतिराक्षेपश्चेति । अभिधा लक्षणा चेति वृत्तिद्वयमिह श्रुतिशब्देनाऽभिधीयते, व्यञ्जना त्वाक्षेपशब्देनेतिप्रतीयते । स्पष्टीभविष्यति चेदमग्रे । तत्र शाब्दं स्वार्थ-समर्पणं श्रुतिरित्युच्यते सेयं श्रुतिर्द्विविधा—नैमित्तिकी, पारिभाषिकी चेति । सूत्र-प्रकृति-प्रत्ययादिकं वा, किमपि प्रयोजनं वा निमित्तमाश्रित्य प्रवर्त्तमाना नैमित्तिकी श्रुतिः—योगशक्तिः-प्रयोजनवती, लक्षणा चेति द्विविधा । अथ केवलया परिभाषया प्रवर्त्तमाना तु पारिभाषिकी रूढिशक्तिः, निरूढालक्षणा चेति । तदेतत् स्वयमेव विरतम्—**संकेतः परिभाषेति** । किमपि निमित्तमन्तरा क्रियमाणः संकेतः परिभाषेति चास्याऽर्थः । ततस्तस्मादियं **पारिभाषिकी स्यात्** ।

सेयं पारिभाषिकी पुनर्द्विविधा—**मुख्यौपचारिकी चेति** । ते इमे नैमित्तिकी पारिभाषिकी चेति द्विविधे अपि श्रुती; मुख्या चौपचारिकी चेति भेदाभ्यां द्विविधे । तत्र यया श्रुत्या केनचिन्निमित्तेन प्रयोजनेन स्वाभिधेये स्खलद्वृत्तिः सन् शब्दोऽमुख्यार्थस्य वाचको भवति सौपचारिकी । सैवेयं लाक्षणिकी रूढलक्षणारूपोच्यते । गौणीलक्षणा तु गुणयोगतो भवति । वाच्यार्थेनाऽविनाभूतस्यार्थस्य प्रतीतिर्लक्षणेत्युच्यते ।

सेयं लक्षणा सामीप्य-समवाय-वैपरीत्य क्रियायोगरूपैश्चतुर्भिः पञ्चमेन च येन केनाऽपि सम्बन्धेनेति पञ्चधा मता । समवायोऽत्र संयोग औचित्यात् । गौणी वृत्तिस्तु गुणानामानन्त्यादनन्तविधा भवति ।

यत्र हि लोकमर्यादानुरोधिना कविना गौणी-विवक्षया-ऽन्यधर्मोऽन्यत्र सम्यगाधीयते समारोप्यते सोऽयमिह समाधि-रित्यभिधीयते ।

अथ यया वृत्त्या श्रुतेरलभ्यमानोऽर्थः सहृदयानां भाति स आक्षेप इति च ध्वनिरिति चोच्यते । यत एवंविधे स्थले शब्देनार्थेन वा स्वमुपसर्जनीकृत्य ध्वनिना व्यञ्जनयाऽन्योऽर्थो ध्वन्यते । एवमेव कञ्चन विशेषमभिधातुमिष्टस्य वस्तुनो निषेध इव भवति सोपीहाक्षेप इत्युच्यते ।

अयमाक्षेपस्य द्वितीयो भेदो यद्यप्यर्थान्तरऽसंक्रमितवाच्यरूपे ध्वनावेवान्तर्भवति, तथापि कुवलयानन्दकर्त्राऽलङ्कारेष्वेव परिगणितो यथा—

निषेधाभासमाक्षेपं बुधाः केचन मन्वते ।
नाऽहं दूती मनोस्तापस्तस्याः कालानलोपमः ॥

अशासे साहित्य-रसिका आधुनिक-ग्रन्थेष्वनुपलभ्यमानं मतमिदमपि प्राचीनग्रन्थान्वेषणावसरे समुपयोज्य लाभान्विताः स्युरिति ।

---

# हिन्दीभाषा, संस्कृतविद्वांसश्च

उदितनारायणदासमैथिलः, द्वारवङ्गाऽभिजनः ।

को नामोपदिशति भगीरथ्यास्समक्षं कूपस्याऽऽश्रयणं कर्त्तव्यमिति, कश्च वाञ्छति पीयूषमुपेक्ष्य तक्रं पातुम्! संस्कृतभाषायां हिन्दीभाषायां च नूनं तावानेव भेदो यादृशो गङ्गायां कूपवापीतडागादिषु च । किंतु जनता-हितेच्छुर्महापुरुषः किं स्वयं गङ्गातीरे वसन्नपि स्थाने तेषां लाभार्थं कूपादीनां प्रबन्धं न कारयति ? येषां दर्शनमपि जाह्नव्या अतीव सुलभम् ! ध्रुवं स्वप्नेऽपि संस्कृतभाषा-मधुरिमाणं हिन्दीभाषा; नहि नहि भूमण्डलेऽन्याऽपि, उररीकर्तुं न क्षमा । तदीया तादृशी प्रौढिरितरासु भाषासु कदाऽपि न सम्भावनीया । किन्तु संस्कृतसाहित्यस्य महाऽर्घ्यरत्नानां तदीयवेदान्तोपनिषदादिदार्शनिकग्रन्थस्थितानामद्भुतविचाराणञ्चोपयोगं कत्यधुना कुर्व्वन्ति ! किमेवमेवेमे विषया अन्धतमसि तिष्ठन्तीत्युचितम् ? भारतीय विदुषामुच्चविचाराणामाभूषणं तस्मिन् भोजविक्रमप्रभृतिभूपतीनां समये मनोहरा संस्कृत-भाषा बभूव, किंस्विदानीमवसरे भारतस्य तावति सौभाग्योदयेऽस्माभिः पूर्वजानांतेऽनुपमा विचाराः किमाधुनिकभाषारूपैरक्षिसाधारणभूषणैर्नाऽलंकरणीयाः । तादृशानामुच्चकक्षायाः सिद्धान्तानां पुनरुद्घोषणमिदानीन्तनैर्भारतीयमानव-वृन्दैरेकत्र मिलित्वा न कर्तव्यमिति । कति जना अधुना पण्डितम्मन्या अपि सम्यक् परिचितास्सन्ति ? के के च महाभारताद्यद्भुत-ग्रन्थानां सेवनं कुर्व्वन्ति ! अत्यल्पीयस्येव संख्याऽस्माकं मध्ये प्राप्ता स्यात् ? किमेतस्य कारणम् ? इदानीं जीविकादि-प्रलोभनशैथिल्यात् समयपरिवर्तनकारणाद्वा संस्कृतभाषा-पठन-पाठनस्य प्रचारो महान् वर्तते कृतैकपदे ह्रास एव तस्मिञ्जातोऽतः संस्कृतभाषानिबद्धपुस्तकानां पाठकानामीदृशी शोकजनिका संख्या दृश्यते । ये च साक्षात्संस्कृतभाषामध्येतुं श्रमं कर्तुं शक्नुवन्ति, ते सोत्साहं तदीय-साहित्य-वेदान्तादि-ग्रन्थानामास्वादनमविरतं कुर्व्वन्तु । किन्तु ये संस्कृतभाषाऽनभिज्ञाः सन्ति तदर्थमपि कोऽपि प्रबन्धो देशहितैषिभिर्विधातव्यः । आङ्गलभाषायास्तु कथा सैव ।

अस्यान्तु सर्वेषामेव संस्कृतपुस्तकानामनुवादः कृतोऽवशिष्ट-ग्रन्थानामपि कतिपयानां क्रियते । भारतीय-भाषाणां मध्ये वङ्गभाषायाः, महाराष्ट्राद्युन्नतभाषाणाञ्च भण्डारस्तदीयाद्भुतशक्तिशालिविद्वांसः संस्कृतग्रन्थानुवादैः पूरयन्ति, पूरितवन्तश्च । किन्तु हिन्दीभाषैवाऽस्मिन् कार्येऽतीव नता ! हिन्दीभाषाया राष्ट्रीयत्वेऽधुना कोऽपि विवेकपूर्णो भारतीयो भवतु स वङ्गीयो महाराष्ट्रीयश्चाऽपि, कामपि बाधां नोपस्थापयति । अतोऽधुनैतस्या उन्नतिः सर्वोपायेन यतितव्या ।

बहव एतादृशोऽपि संस्कृतविद्वांसः, अस्मद्भाग्यवशाद्विद्यन्ते यत्त यदि किञ्चिदपि श्रमं कुर्युः; कृपाञ्च दर्शयेयुस्तर्हि हिन्दीभाषा, अमूल्यरत्नैः सुसज्जिता भवेदिति । नाऽत्र कोऽपि सन्देहः । किन्तु महानयं शोको यद्बहूनां संस्कृत-विदुषां तां प्रत्यकृपाबुद्धिः । सत्यं संस्कृतस्य पुरः पदमपि निधातुं हिन्दी न क्षमा । किन्तु सर्वसाधरणानां लाभदृष्ट्या तैर्भारतगौरवभूतैः संस्कृतविद्वद्वर्यैः हिन्दी [illegible] प्रदर्शनीया ।

# ग्रहणविज्ञानम्

श्रीविन्ध्येश्वरीप्रसाद शास्त्री, धर्माचार्यः

ग्रहणविषये प्राधान्येन मतत्रयं प्रचलितमुपलभ्यते तद्यथा—(१) पौरस्त्यज्योतिर्मतम्, (२) पाश्चात्य-मतम् (३) पौराणिकमतञ्चेति। ग्रहणसम्बन्धे पौरस्त्यज्योतिर्मतं पाश्चात्यमतं च समानमेवाभाति।

लेखकः—



तन्मते तु सर्व एव ग्रहोपग्रहाः स्वस्वकक्षायामहर्निशं परिभ्राम्यन्ति। न केवलं पाश्चात्या एव; प्रत्युत—

"चला पृथ्वी स्थिरा भाति"

"भपञ्जरः स्थिरो भूरेवावृत्यावृत्य प्रातिदिवसकौ उदयास्तौ सम्पादयति नक्षत्रग्रहाणाम्।"

इत्यार्यभटसिद्धान्तानुसारं पौरस्त्यज्योतिरपि पृथिव्याश्चलत्वमङ्गीकरोति। यथाहि—शरीरेऽस्मदीये निवसन्तो लघुकीटा नास्मदीयं पर्य्यटनमवगच्छन्ति, तथैव पृथिव्याः परिभ्रमणं पृथिवीनिवासिभिर्नावगम्यते। एवं हि स्वकक्षायां परिभ्रमन्तीयं धरा यदा सूर्यचन्द्रयोर्मध्ये समायाति तदैव चन्द्रग्रहणं भवति, यतस्तस्मिन् क्षणे सूर्यज्योतिश्चन्द्रोपरि न पतति। जलमयश्चन्द्रमाः सूर्यज्योतिषैव प्रकाशमाप्नोति इति जानन्त्येव तद्विदः। यदा च सूर्यपृथिव्योरन्तराले शशी समापतति तदा सूर्यग्रहणं भवति। तथाहि—

"छादको भास्करस्येन्दुरधस्थो घनवद् भवेत्।
भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसौ॥"

इत्यादि ज्योतिःशास्त्रप्रतिपादित-वचनेन सुस्पष्टं प्रतीयते।

पौराणिकास्तु राहुनामकः कश्चिदसुरो यदा चन्द्रं सूर्यं वा ग्रसते तदैव ग्रहणमिति कथयन्ति। एतच्च कतिभिश्चिन्न युक्ति-युक्तं प्रतीयते। सिद्धान्तममुं भ्रान्तिपूर्णमवगत्य पाश्चात्याः, तन्मतानुयायिनः केचिद् ज्योतिर्विदश्च प्रायः पौराणिकमतमधिक्षिपन्ति। त इत्थं जल्पन्ति यत् पृथिव्याश्छायायाश्चन्द्रोपरि निपातेन, चन्द्रच्छायायाः सूर्योपरि पतनेन च चन्द्रसूर्यग्रहणं यदा दूरवीक्षणादि-यन्त्रेण प्रत्यक्षीक्रियते, तदा पौराणिक-कपोल-कल्पनायां कथमास्था भवेदित्यादि।

ये किल पुराणमतं कपोल-कल्पितं सार-हीनं भ्रान्तं वाऽऽमनन्ति, त एव नूनं भ्रान्ताः। वस्तुतः छायापाते राहुग्रासे वा न कोऽपि भेदलेशो विद्यते। पुराणकर्त्तारो महर्षयः परमास्तिकाः सन्ति। ते तु विज्ञानदृष्टिसम्पन्नत्वात् केवलं छायावर्णनमनादृत्याऽधिदैवसम्बन्धेन राहुरूपमसुरं निर्दिष्टवन्तः। किन्तु केचनापरे स्थूलदृष्टयः केवलं छायापातमेवाऽवलोकयन्ति। अस्तु!

पौराणिका असुरकर्तृकत्वं ग्रहणस्य कथं कथयन्तीत्यत्र किञ्चिद् विचारयामः—

जडत्वात्प्रकृतेः सर्व एव प्राकृतिकाः पदार्था जडा भवन्तीत्यत्र न केषाञ्चनाऽपि वैमत्यम्। अतो हि सर्वानेव जडभूतान् पदार्थान् नियमेन सञ्चालयितुं सर्वत्रैव विभूतिभूता भगवतः शक्तयो विलसन्ति।

यथा च कस्यचिन्महतो राज्यस्य शासनार्थं सम्राजः शक्तिं समाश्रित्य मण्डलाधीश-प्रान्तपति-प्रभृतयोऽधिकारिणो राज्यशासनं कुर्वन्ति, तथैव महतोऽपि महीयसः प्रकृतिराज्यस्य शासनार्थं परमात्मशक्ति-साहाय्येन स्वयमधिकारवन्तः सन्तो देवास्तेषु तेषु विभागेषु शासनं कुर्वन्ति। चेतनशक्ति-साहाय्यमन्तरेण जडं वस्तु न नियमेन कार्यं कर्त्तुं शक्नुयात्। तथाहि—समस्त-ब्रह्माण्डे यावज्जलमस्ति, तस्य सञ्चालिका शक्तिर्वरुणनाम्ना व्यवह्रियते। एषैव जलद्वारा नियमेन संसार-कार्यं साधयति। यदीयं न स्यात् तदाजल-सञ्चालनं समीचीनं न भवेत्। वायुतत्त्वस्य या नियामिका शक्तिः सा पवनदेव-नामत आख्यायते, सैव संसारे सर्वत्र वातं सञ्चारयति। एवं हि चन्द्र-सूर्य-पृथ्वी-प्रभृतिग्रहोपग्रहाणां संचालकाश्चन्द्रसूर्यादयो देवा वर्त्तन्त इति सूक्ष्मेक्षणास्तत्त्वविदः पुराणेषु निश्चिक्युः। नान्यथा पृथिवीचन्द्रादिषु नियमितगतेः सम्भावना।

प्राकृतिकानां तत्तद्विभागानां मध्ये सत्त्वगुण-तैजस-विभागेषु येषामधिकारस्ते सुराः, तमोगुणात्मकेष्वन्धकार-विभागेषु येषामधिकारस्तेऽसुरा ज्ञातव्याः। ययाऽग्निसूर्यचन्द्रादीन् देवाननाश्रित्य प्रकाशो न स्वयमेव नियमित-कार्य-सम्पादनक्षमो भवति, तथैव राहुरूपस्याऽसुरस्य साहाय्याद्दते छाया, अन्धकारो वा सूर्य-गोलकं चन्द्र-गोलकं वा नाऽऽच्छादयितुं शक्नोति। अतएवाऽसुरो राहुः सूर्यदेवं चन्द्रदेवं वा यदा ग्रसते तदैव भवति ग्रहणमिति पौराणिकाः कथयन्ति। आधुनिका भौगोलिकास्तुत मनाहत्य छायागत-चेतनशक्तिं केवलं छायापातेनैव सूर्यग्रहणं चन्द्रग्रहणं च स्थिरीकुर्वन्ति; किन्तु सूक्ष्मदृष्टयः पौराणिका अन्धकार-सञ्चालिकां राहु-रूपां चैतन्यशक्तिं निर्दिश्य स्वीयमास्तिकत्वं मतसामञ्जस्यञ्चापि प्रदर्शितवन्तः। अमरसिंहप्रभृतयः कोषकर्त्तारोऽपि—

"तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः।"

इत्याख्याय तम एव राहुरिति साधु प्रमाणयन्ति। ब्रह्मपुराणेऽपि सुस्पष्टं व्यालोक्यते राहुमुद्दिश्य—

"पर्वकाले तु सम्प्राप्ते चन्द्रार्कौ छादयिष्यसि।
भूमिच्छायां गतश्चन्द्रं चन्द्रगोऽर्कं कदाचन॥" इति।

न केवलं महर्षय एव; अप्युत स्थूल-दृष्टयः पाश्चात्या-पाण्डिता अपि स्वीकुर्वन्ति ग्रहणकालस्य भयावहत्वम्। अनेकेषां ग्रहोपग्रहाणामन्योन्यं ग्रहणयोगेन पारस्परिकाऽऽकर्षण-विकर्षणशक्ति-सामञ्जस्य-राहित्यात् प्रलयः सम्भाव्यते। तस्मिन् भयावहे समये स्वल्पमपि स्नान-दान-तपोजपात्मकं धर्मकृत्यं महते पुण्याय कल्पते। अतएव ग्रहणकाले ध्यान-धारणा-जप-योग-पुरश्चरण-तपोदानादीनां विधानं धर्मशास्त्र-पुराणेषु विहितम्। अतो वै ये किल वास्तविकतत्त्वमजानन्तः पौराणिकमतं निदन्ति, तदज्ञानविजृम्भितमेव। वस्तुतः स्तत्त्वदृष्ट्या पौराणिकमतं, ज्योतिःशास्त्रमतं, पाश्चात्यमतं च सर्वमेव समञ्जसम्—इति॥

---

# चटुकलानि ( चुटकुले )

मनुष्याणां शरीरे पञ्चकोशा भवन्तीति वेदान्तविदो वदन्ति परं माथुराणां चौबे-महाशयानां शरीरे पञ्चाप्यमी कोशा अन्नमया एव भवन्तीति प्रतीयते। अत एवामी महाशया भोजनावसरे सर्वेष्वपि कोशेष्वन्नमेव भरन्ति।



श्रीशालग्रामशास्त्रिणः, साहित्याचार्याः

पश्चाच्च रोमन्थयन्तः शनैः शनैस्तत्सर्वं निःसारयन्तीति भुक्तभोगिनो जानन्ति।

× × × ×

ब्राह्मणस्य तु देहोऽयं क्षुद्र-कामाय नेष्यते' इति भगवान् मनुः प्राह। तस्माद् ब्राह्मणेन क्षुद्रः कामो (कार्यं वा) न कर्तव्यः, क्षुद्र-कामो यथा-शतरञ्ज-खेलनम्, पतङ्गोड्डायनम्, नस्य-शिङ्घनम्, मूत्रोत्सर्गश्चेत्यादि।

महान् कामः ( कार्यं ) पुनर्ब्राह्मणेनाऽवश्यं कर्तव्यः महान् कामो यथा-भङ्गा-घोटनम्, लड्डुक-जेमनम्, पुरीपोत्सर्गश्चेत्यादि—

एवञ्च ये यावदधिककालपर्यन्तं पुरीपोत्सर्गं कुर्वते, ते तावदधिकं धर्मात्मानो भवन्तीति सिद्धयति तदेवं स्व-स्व नगरे धर्मात्मानोऽनुसन्धेया जिज्ञासुभिः।

× × × ×

'न मनुष्यो निरामय' इत्यभियुक्ता भाषन्ते। तेन ज्ञायते यः खलु निरामयो भवति, स मनुष्यो न भवतीति। एवञ्च आमयेन सह मनुष्यत्वस्य कार्यकारणभावोऽप्रमाणितो भवति। इत्थं च यो यावदधिकसामर्थ्यवान् स तावदधिकं

मनुष्यत्ववानिति स्वयं सिद्ध्यति । तेन यः सर्वथा निरामयः स सर्वथा मनुष्यत्वहीन इति स्वतःसिद्धे सत्ये को नाम सचेतनः सन्दिहीत ?

× × × ×

'अग्निवर्णां सुरां पिबेत्' इति मनुना प्रोक्तम्—तस्मात् रक्तपीतवर्णा बिलायतीया सुरा पातव्येति विधिः सिद्धयति । श्वेतवर्णां भारतीयां सुरां पिबन् पतितो भवति, अग्निवर्णां पुनर्विलायतीयां पिबन् धर्मात्मा भवतीति विधेरस्य रहस्यम् । बिलमायतं यत्र तद् बिलायतं तत्रभवा बिलायतीयेत्यर्थः ।

× × × ×

'पृथक् शय्या च नारीणामशस्त्रविहितो वधः' इति धर्मविदो वदन्ति । तेन ज्ञायते यो नारीभ्यः पृथक्-शय्यां प्रयच्छति, स नारी-वध कृतेन पातकेनोपलिप्यते इति एवं च यस्य गृहे दश नार्यः स्युस्तेन सर्वा अपि ता एकस्यामेव शय्यायां शाययितव्याः । पृथक् पृथक् शय्या-प्रदाने तु नारी-वध-कृतं पातक मुपसंक्रमिष्यतीति विदाङ्कुर्वन्तु सर्वेऽपि सनातन-धर्मानुयायिनः ।

× × × ×

चतुर्विधास्त्रियो भवन्तीति कामशास्त्र-विदो वदन्ति तद् यथा—पद्मिनी, चित्रिणी, शङ्खिनी हस्तिनी चेति । तत्र पद्मिनी पद्मानि जिघ्रति, चित्रिणी चित्राणि निर्मिमीते, शङ्खिनी शङ्खान् धमति, हस्तिनी पुनर्हस्तिवद् बृंहितानि करोति । पुरुषा अपि चतुर्विधा भवन्ति, ते यथा शशो मृगो वृषस्तुरङ्गमश्चेति तत्र शशः श्वासरोगेण पीड्यते, मृगो मिर्गी (अपस्मार) रोगेण म्रियते, वृषो नीलपण्ड इव इतस्ततो बम्भ्रमीति, तुरङ्गमः पुनः स्वस्थाने एव तिष्ठन् हिनहिनायते । तदेवं स्वस्वपत्नीषु स्वस्वपतिषु च यथायथं लक्षणसमन्वयः कर्तव्यो धर्म-कोविदैः-इति ।

---

## भ्रमर !

साहित्यालंकारः श्रीप्रभातमिश्रः, प्रयागस्थः

१

जाते प्रिय–वसन्त – वन – भूपे
ज्वलिते दिशि दिशि सौरभ–दीपे
तरणि – सुतायाः तीर – समीपे
मुकुल – कुलाकुल – नमिते–नीपे
भ्रमर ! विहर रे मन्दं मन्दम्
पायं पायं मधु–मकरन्दम्

२

परिमल–संकुल–धृत–सुम – माले
प्रमदा – दर्प – दलन – करवाले
लसति विटप–तल–मृदु-दल-जाले
मञ्जरि –मेदुर – रम्य – रसाले
भ्रमर ! विहर रे मन्दं मन्दम्
पायं पायं मधु–मकरन्दम्

३

प्रतिपल- नग –खग–कलरव कान्ते
सुपमित–मुखरित–गहन –वनान्ते
प्रियतम– तरुवर – चुम्बन–शान्ते
कलित-कुसुम-कुल-ललित-लतान्ते
भ्रमर ! विहर रे मन्दं मन्दम्
पायं पायं मधु–मकरन्दम्

४

दिनकर – दर्शन – हर्षित – कञ्जे
प्रभवति कोकिल-'कुहु कुहु'-गुञ्जे
मृदुल विदुल-दल - पृथुल -निकुञ्जे
प्रतितरु–सुरभित–नवसुम –पुञ्जे
भ्रमर ! विहर रे मन्दं मन्दम्
पायं पायं मधु–मकरन्दम्

महान् वैदिक-विज्ञान-वेत्ता



विद्यावाचस्पतिः श्री मधुसूदन झा
जयपुरराज-प्रधान-पण्डितः

महान् वैदिक-विज्ञान-वेत्ता



विद्याभूपणम् श्रीदीनानाथशास्त्री चुलैट
इन्दौरराज्य-प्रधानज्योतिर्विद्



श्री अमरनाथझा एम० ए०, डी० लिट्
[ वाइसचान्सलर-अलाहाबाद-यूनिवर्सिटी ]



महामहोपाध्यायः डा० गङ्गानाथ झा-एम० ए० डी० लिट्०
[ भूतपूर्व वाइसचान्सलर-अलाहाबाद-यूनिवर्सिटी ]

# संस्कृत-साहित्यस्य वर्त्तमान-परिस्थितिः

साहित्य-व्याकरण-मीमांसाचार्यः—श्रीरामजीपाण्डेयः, शास्त्री, न्याय-वेदान्त-शास्त्री,

अंशुमाली प्रातरुदेति मध्याह्ने खरैः करैरखिलमेव धरणिमण्डलस्योपरितनमंशं भासयति, सायं निम्नांशप्रकाशनार्थं लीनो भवति, तदानीं विद्यमानोऽपि चन्द्रतारायुद्भासकत्वेन प्रत्यक्षतया समवलोक्यमानोऽपि चाश्मकान्तादि ( एशिया ) भागस्थितैर्विनष्ट इवाऽनुभूयते। पुनरपि समये समागते प्राच्यां दृष्टिपथमायाति। किन्तु न तदानीं तस्य माध्याह्निकी विभा कथमपि केनचनाऽपि कुत्रचनाऽपि द्रष्टुं शक्या। तस्य प्राथमिकदीधितयः कुत्रचनाल्पाः क्वचन न विशिष्टरूपाः भवन्ति, किन्तु शनैः शनैः स एव कालः समायाति यस्मिन् तस्य प्रखरता प्रकटिता भवति।

अस्माकं साहित्यं कदाचिद् वेद-ब्राह्मणारण्यकोपनिषदादिरूपेण प्रकटीबभूव। समतीते काले वाल्मीकिव्यास-भास-कालिदासादि-महाकविभिस्तादृशीं स्थितिमुपगमितम्, यथा निखिलमेव जगदुपकृतम्, यथा च "विश्वं कृण्वन्तु-आर्यम्" इति वेदवचनं सर्वत्रैव प्रचारमलभत। एतेषां समयेषु साहित्यभाषाऽन्या, साधारण-मानव-समुच्चार्यमाणा—जननीभिः सुतेभ्यः प्रोद्बोध्यमाना—चान्येति तेषामेव नाटकेषु स्फुटमवधारयितुं शक्यते। यद्यपि लोकभाषाऽपि तत्र तत्र भिन्ना भिन्नाऽभूत्-यथा पैशाची, महाराष्ट्री, गौडी च; तथापि सर्वाऽपि प्राकृत-जन-समुच्चारण-विषयतया प्राकृततया ख्यातिमगमत्।

अन्ते च न केवलं भाषाया एव, अपि तु भारतीयसाम्राज्यस्य, सभ्यतायाः, किमपरं ध्वजपटस्य पतनं संवृत्तम्। तदानीं साहित्यं म्रियमाणमिवाऽभवत्। संस्कृत-प्रचारोऽलुप्यत, न केवलं विदेशत एव अपि तु भारतादपि। प्राकृत-भाषैव व्यवह्रियमाणत्वात्कथञ्चनावशिष्टा। तदानींतनीमेतदीयामालोक्य दुर्दशां कस्य नाम सहृदयस्य मुखादिदं बलान्न निःसरेत्कस्यचन प्राचीनस्य पद्यम्—

**वाल्मीकेरजनि प्रकाशितगुणा व्यासेन लीलावती**
**वैदर्भी-कविता स्वयं वृतवती श्रीकालिदासं वरम्।**
**याऽसूतामरसिंह-शंकु-धनिकान् सेयं जरा-नीरसा**
**शून्यालङ्करणा स्खलन्मृदुपदा क क्षितौ नाश्रिता॥**

३

सैव दशा जरत्या एतस्या एतदीयैरपि नपुंसकाभासैर्बालैरुपेक्षितप्रायायाः, परयष्टिमादाय कथञ्चनाऽधिधरणि पदे निक्षेप्तुं कामयमानायाः परं वेपमानाया अवलोक्यते। मरणशय्यायां सुतेयं देवी, परेषां वाग्बाणैर्जर्जरीकृता जीवमानाऽपि मृता समुच्चार्यते।

अर्धनिशायां यदि भारते कश्चित्कथयेद् यद् भास्करो नाऽस्तमितस्तर्हि कतमो विश्वासं कुर्यात्, किन्तु तदानीमेव तल ( अमेरिका ) स्थाः स्वीयं दिनं मन्यन्ते। भारते—हिन्दूनां देशे परदेशीय-जन-रक्षिते नव-वधू-प्रायाङ्गलीसहचरे या वा भवतु दुर्दशा वराक्याः, किन्तु साम्प्रतमपि शार्मण्या नियमयन्ति, विधानं निर्मापयन्ति—यत्सर्वैरेवाध्यापकत्वं जिघृक्षुभिः संस्कृताऽध्येतव्यैव। एतदभिधाय ससंकोचं राष्ट्रियमन्त्रिणाम्-तत्राऽपि सर्वत्र प्रथमं वाराणसी-विभूषितयुक्तप्रान्तीय-राष्ट्रिय मन्त्रिणाम्-विशेषतश्च शिक्षामन्त्रिणां पुरः प्रार्थयितुकाम इव भणामि, यत् हिन्दीजननी-प्रपितामहीतादृशेन चक्षुषा निभालनीया, यादृशेन निभालयितुं योग्येयम्।

दूरं गतोऽस्मि पथः, निवेदनीयं निवेदयामि, यत् साहित्यस्याऽस्य नाद्याऽपि निशैव, अपितु-अरुणोदयकालः। इदं तु प्रागेव विनिवेदितं यदरुणोदयकाले न माध्याह्निकी विभा समवलोकयितुं शक्या।

साम्प्रतं राष्ट्रभाषापदे संस्कृतायाः प्रपौत्री हैन्दवी तिष्ठति; सा च यदि परेषां संसर्गमवाप्य, परकीयानां मतिं गतिञ्चादाय, भ्रष्टा न भवेत्तर्हि नूनं संस्कृता-पद-सेवनतत्परया तदनुरूपया संस्कृतारक्षणार्थं बद्धपरिकरया च भाव्यम्।

यदि हैन्दवी, हिन्दुस्थानीगर्त्तादुद्धृता भवेत्-शुद्धैव च तिष्ठेत्; परेषां शब्दान् यथेच्छं गृह्णीयात्; किन्तु तान् संस्कृतव्याकरण-यन्त्रे संस्थाप्य, शाणितान् विधाय, गृह्णीयात्; तदा कदाचित् केवलं क्रिया-कर्मादि-कतिपय-भेदमपहाय पुनः संस्कृतात्वं प्राप्नुयात्।

एतदर्थं ... प्रयत्नानि विधेयानि भवेयुः। सर्वतः

प्रथमं तु स्वीय एव मार्गस्तथा परिष्करणीयो येनाऽन्येऽपि चलन्तु मार्गेणाऽनेन। संस्कृतभाषायाः काठिन्यं तथा दूरीकरणीयं येन हैन्दवी—वेदिनः सुखेन कतिपयनियमान् व्याकरणस्य विज्ञाय संस्कृतं जानन्तु–शब्दानस्माकं शृण्वन्तु, श्रुत्वा च विचारयन्तु यत् किमेते लपन्ति, विलपन्ति वा। एतदर्थं संस्कृत–साहित्यस्य प्राचीनशैली, यस्यां कादम्बरी-वासवदत्तादयो विरचिताः, परित्याज्या भविष्यति। संस्कृत-पत्रेषु–अङ्गुलिगणनीयेषु–बहवो लेखकाः, बलात् पुनरपि तामेव शैलीमानयन्ति—परेषां सरलां शैलीं चावेक्ष्य विचार-यन्ति यदयं लेखोऽल्पबुद्धि-लिखित इति। तेषां क्षुद्रामिमां धारणामल्पमस्तिष्कतां च समीक्ष्य दयार्द्रो भवामि।

ते वराका इदमपि न जानन्ति यत्—
**"असंशयं हतो वक्ता यस्य श्रोता न बुध्यते"।**

अनेकार्थशब्दशतसंकुलायामस्यां कठिनलेखस्य कृते न परिश्रमो विधेयोऽपितु सरल—लेखस्यैव कृते सुमहान् श्रमः। संस्कृताध्येतारः,–तत्रापि पत्र-पत्रिकादि-निरीक्षकाः, अल्पा एव सन्ति–तेषां संख्यावृद्धये सरल–लेखः कियानुपकारकः स्यात्।

द्वितीयतश्च हैन्दवीशब्दानां संग्रहणे यत्नः। तस्या अपि सन्निधौ राजनैतिका वैज्ञानिका आधुनिक–नव–निर्मित–यन्त्रादिवाचका अन्ये चैवंविधाः शब्दा न सन्ति। परं प्राचीनायाः संस्कृतायाः कोशे तु तेषामन्वेषणं सिकतातैल-निस्सारणमेव। एतेषां वाचकाः शब्दाश्चावश्यं प्रचलिता भवेयुः, वस्तूनां प्रतिदिनं कार्यसंपादनार्थमावश्यकत्वात्। एवंस्थिते ये वाचकाः शब्दाः हैन्दवीकोशे स्थानं प्राप्नुवन्तु, ते त एव सन्तु, ये न केवलं हिन्दी-व्याकरणत एव; अपि तु संस्कृतव्याकरणतोऽपि संग्राह्या भवेयुः। ते च शब्दा यथा हिन्दीविद्भिर्व्यवह्रियमाणाः स्युस्तथैव संस्कृत-पत्र-पत्रिकादि-नवकोशादिषु च स्थानमासादयन्तु। एतदर्थं राजनैतिकक्षेत्रे प्रवेशो नितरामपेक्ष्यते संस्कृत-साहित्य-संरक्षण–तत्पराणाम्। अत्र गतशोचनं तु हानिकरमेवेति न तदुद्घाटयितुं शक्यते। एतदेव च मनसिकृत्य मया पूर्वं "ससंकोचम्" इत्ययं शब्दः प्रयुक्त इति परिचित एव भवेत्पाठकानाम्। किन्तु नाऽधुनापि च्छिन्नम्। स्वतन्त्रता दूरे तिष्ठति, तत्प्राप्तये पुनरपि पूर्वतोऽपि बलवत्तर तत्कार्यं मया आवश्यकत्वं भविष्यति, तत्र च त्यागं तपश्चर्यांश्च प्रदर्श्य पुनरपि विगतदोषमार्जनं विधेयम्।

संभावये, अत्र बहूनां चेतसि शंका, स्थानमासादयिष्यति यत् संस्कृत-व्याकरणेन कथमेते शब्दाः साधुत्व-पदवीमारोहयितुं शक्याः। सहैव चेदमपि संभावये यदीदृक्-विचारवन्तः संस्कृतव्याकरणस्य विषये दूरत एव, कस्माचन पण्डितमानिनो निरर्थकप्रायान् विचारान् श्रुत्वा स्वमतं स्वीकृतवन्तः। अस्माकं वैयाकरणास्तु सप्तद्वीपवत्या वसुमत्या-स्त्रयाणां लोकानाञ्च शब्दान् मनसिकृत्य व्याकरणं निर्मा-पयामासुः, तावतापि चाऽसंतोषमनुभवन्तः, **"उणादयो बहुलम्" "पृषोदरादीनि यथोपदिष्टम्"** इत्यादिवचनैः प्रत्ययानां बहूनां नवीनानां तथा—**"बहुलमेतन्निदर्शनम्"** इति गणसूत्रेण नवीनानां धातूनां सत्तामङ्गीकृतवन्तः। अत्र यदि दोषस्तर्हि तेषामेव ये व्याकरणतत्वमविज्ञाय वृथा दूषयन्ति तत्, वृथैव वा व्याकरणमधीत्य संस्कृत-भाषा-विनाश-दीक्षिताः सन्ति। हिन्दी-साहित्य-सम्मेलनस्य शिमलाऽधिवेशने प्रस्तावोऽयमुपस्थापितो निर्धारितश्च विग्रत इति शीघ्रमेव प्रयत्नोऽप्येतदर्थको भविष्यति। तत्र हैन्दवी-विदां स्कन्धैः स्कन्धान् संयोज्य कार्यं कर्त्तव्यम्। एवं स्थिते संस्कृतज्ञानां कार्यक्षेत्रमपि किमपि विस्तृतं भवेत्। अध्याप-नात्मिकां पञ्चदशमुद्रामितवेतनिकां वृत्तिमन्वेषयतां व्याकरणा-चार्यादिपदवीं दूषयतां स्वगुरूनधिक्षेप-पदवीमुपस्थापयतां स्वकुल-भारभूतानां कुलं दत्तदृष्टि चेदत्र न केवलमस्माकं साहित्यस्यैवाऽपितु तेषामप्युपकारः स्यात्।

तृतीयतश्च संस्कृतज्ञानां विचारधाराया अन्यतोमुखी-करणम्। महतः कालात् केचन विचारा रस-रीत्यलङ्कार-गुण-दोषादिमया अस्माकं साहित्यज्ञैः प्रचालिताः, त एव वारंवारमुद्घोष्यन्तेऽस्माभिः। यस्मिन् काले तैः प्रच-लितास्तदानीमस्माकं साहित्यस्य समालोचनात्मकः सर्वश्रेष्ठः काल आसीत्। अधुना तानेव विचारान् नवीनैः शब्दैः, तेष्वेव वा गभीरमध्ययनं विधायोत्पाद्य च नवीनान्, प्रकटनं नास्माकं लघुबुद्धौ संतोषकरं भवति। पुनरागते समालोचना-काले विधेयमेवैतद् भविष्यति, किन्तु साम्प्रतमेतदकाण्ड-ताण्डवान्नातिरिच्यते। एतदर्थमेव च यतमानानां पत्र-पत्रिकादीनामपि श्रमो व्यर्थप्राय एवेति वदन् स्वीयं हार्दं रोद्धुं न शक्नोमि।

"बुभुक्षितैर्व्याकरणं न भुज्यते,
पिपासितैः काव्यरसो न पीयते" ।

एतदर्थं सामयिक—विचारधाराऽनुसर्त्तव्यैव भविष्यति, "कःकालः" इति च विचारणीयमेव भविष्यति । ये स्वीयं जीवनं स्वस्वाश्च भाषायाः संरक्षणं समभिलषन्ते तैर्लोकमतमनुसर्त्तव्यमेव भविष्यति । यदि प्राक्तनं परिधिं न त्यक्तुं वाञ्छन्ति, संसारे द्रुतवेगेन प्रवहतः समाजवादादिविचारान् स्वीये साहित्ये न निवेशयितुं बद्धपरिकराः सन्ति, न तदुपयोगितामनुपयोगितां वा स्वसाहित्यच्छात्रेभ्यो दातुं कामयन्ते, तर्हि स्फुटाक्षरेण निःशंकं वक्तुमुत्कोऽस्मि यत्ते स्वमृत्यवे गर्त्तं स्वयमेव निर्मापयन्ति, तत्र च त्वरया गन्तुं क्षणमपि त्वरयन्ति । संस्कृत-साहित्यस्योपःकालोऽयम्, मरणकालो वा । उद्यन्तमेव भास्करं कवलीकर्त्तुं सैहिकेयो विदारितास्यः प्रचरति । विचारयन्तु भविष्यन्तम्, निर्धारयन्तु च कर्त्तव्य-व्रातम् ।

अन्येऽपि केचन प्रयत्ना आवश्यकाः भवेयुः, सन्ति च, किन्तु नाधुना तान् वक्तुं रसना प्रसरति । तेषु बहवो राजकीयसंस्कृतमहाविद्यालयीयपरीक्षानिर्धारणसमितेर्विचारकुक्षि—निक्षिप्ताः सन्ति । तेषु यावत् समितिः स्वीयं विचारं न प्रकटयति तावत् किमपि निवेदयितुं न शक्यते । ते स्वयमेव कियतैव कालेन भवतां दृष्टिपथमागच्छेयुस्तांश्च भवन्तः स्वयमेव चिन्तयेयुः । ईदृक्षगुरुतरकार्य-संपादनव्यस्तायाः समितेर्विचारणीयेषु वार्णीं व्यर्थमेव प्रयासमयीं विधातुं नाभिलषामि । किमपि वक्तुमुत्कोऽप्यनयाऽऽशापिशाच्या परं यन्त्रितोऽस्मि यत् समितेर्माननीयाः सदस्याः स्वयमेव संस्कृतसाहित्य-संरक्षण-तत्पराणां कृते पदमपि वर्धयिष्यन्त्येव । एतदकरणे च—

"चणका न तुसो नाऽपि कविकाऽस्ति मुखे स्थिता"

इति लौकिकाभाणकमेव चारितार्थ्यपदवीमाश्रयेत् । संस्कृतसाहित्यसंरक्षणे न तथोपकरिष्यति ग्रन्थपरिवर्त्तनादिक्षुद्रतमसुधारो यथा संस्कृतज्ञानां जीविकाविषयकजटिलसुधारः । सम्प्रति संस्कृतज्ञाः श्रेष्ठिनाम्—आजीवनं परेषां गलोद्देशं संधोख्य कोट्यधीशानाम्—धनैः—रुधिरैर्वा जीविकां संचालयतुं नोत्काः सन्ति, संचालयन्तश्च न संस्कृत-साहित्य-संरक्षणं विधातुं पारयिष्यन्ति । संभावये परीक्षासुधार समितिसदस्या अत्राऽपि दत्तदृष्टयः सन्ति, भविष्यन्ति च । नात्राऽधिककथनार्थं विधानानि प्रेरयन्तीति शम् ।

---

# अभिनव-संस्कृत-साहित्य-विषयकं किञ्चिन्निवेदनम् ।

श्रीविद्याधरशास्त्री, एम० ए०, प्रधानमन्त्री, भारतीय-संस्कृत-साहित्य-सम्मेलनस्य



सौभाग्येन पुनरपि सम्प्रति संस्कृतसाहित्ये सर्वत्र समवलोक्यते कश्चनाभिनवः समुत्साह-संचारः। अद्य न वर्तते कश्चनापि एवंविधो विद्यालयः, काचन सभा, किमपि पत्रं वा यत्र न संस्कृतभाषा-मधुरं किंचित् श्रूयते श्राव्यते वा सहस्रशः संस्कृतानुरागिणः साम्प्रतं स्वस्वभावान् प्रायशः सदैव संगीतमय्यां सुरभारत्यां प्रकटयन्ति, समाल्हादयन्ति च सहृदयानां रसास्वाद-निपुणानि चित्तानि। समयोचितमेत दिदानीं यद् वयं स्फुटमेतत्समालोचयामो यथा कस्यां दिशि प्रवहति नवीनोऽयं प्रवाहः ? क्व क्व वा विधीयतेऽस्य-सुन्दरः समुपयोगः।"

प्राचीनां स्थितिमध्येतुं संस्कृत-साहित्यं यदि वयं सूक्ष्म-दृष्ट्या समालोचयामस्तर्हि स्फुटमेतत् तत्र प्रतीयते यत् यादृशं जीवनतत्व-प्रकाशकं, प्रोत्साहकं, सरलं च काव्यं रामायणकाले, महाभारतकाले वा तत्र लभ्यते; न तादृशं केवलं कोमलकलाविलासप्रणयिषु कालिदासादिषु प्रस्फुटितं भवति, यादृशं च कालिदासादिषु; न तादृशं पुनस्ततोऽर्वाचीनेषु काव्येषु क्वचिद् विलसति। आदिमे हि काव्ये माधुर्यमोजः-सम्मिश्रितम्, सामान्येष्वपि वर्णनेषु किंचिद् विलक्षणं गाम्भीर्यम्, घटनावैचित्र्ये च सततं सदाचारवृत्तिः प्रधाना, माध्यमे मनोरञ्जनम्, मृदुवृत्तिगतिप्रकाशनं, सौकुमार्यं च मुख्यम्, अन्तिमे तु काव्ये पुनः सत्यप्यर्थगौरवे कवीनां प्रवृत्तिः पाण्डित्य-प्रदर्शनोन्मुखी दुरूहा चैव विशेषतो दृश्यते।

भवतु नामेदानीं तत्काव्यं सर्वथाऽऽदर्शभूतं निम्नश्रेणि-गतं वा; परं न तावत्येव कवित्वे कवीनां कवित्वं कविताया: क्षेत्रं वा पूर्णतामाप्नोति। आधुनिकैरस्माकं कविभिरपि किंचिदभिनवं गानं गेयमस्ति। न तैरपि सैव भाषा, सैव कथन-चातुरी, सैवालंकृतिः, सैव वा पुरातनजीर्णवनविहारिणी प्रवृत्तिः, स्वीये काव्ये प्रकाश्याऽनुसरणीया वा।

विद्यतां नाम मानवजीवने समानैरेव तत्तद्गुणैर्विशिष्टं तथापि तेन तेषु तेषु कालेषु किंचिन्नवीनमेव दृश्यते, श्रूयते, अनुभूयते च। संप्रति यदि सर्वेष्वेव कालेषु कविसमयमनुरुध्य प्रचलितप्रथामनुसृत्य वा किंचिदसकृदनुभूतमेव वस्तु मुहुर्मुहुर्वर्ण्यते प्रकाश्यते च; तर्हि जीवनस्यैकरूपं स्थिरं च तदतिपरिचयादवज्ञायोग्यमेव स्वभावतो भवति। यदा यदा वयं केवलं प्राचीनमेव पन्थानमनुसरामस्तदा तदा तेषु तेषु ततः प्रभिन्नेषु पथिषु यद्यन्नवीनं विकसति तत्सौरभेण वयं वंचिता एव भवामः। सत्यपि प्राचीने काव्ये परमोत्कृष्टे नास्मासिस्तत्र जीवनस्य विविधा गतयोऽनुभवितुं शक्यन्ते। तदानीन्तना परिस्थितिः, इदानींतना च परिस्थितिः सर्वथा पृथगेवास्ते। वैज्ञानिकेऽस्मिन् युगे जीवनं न जाने कियत्परिवर्तितमस्ति।

यदत्र यूरोपदेशीयाः कवयः प्रायः प्रतिवर्षं तत्रत्यकाव्ये कांचिन्नवीनतामेव विकासयन्ति, वर्णयन्ति च; तत् यत्प्रतिक्षणं तदैवोदेति किंचिद्विलक्षणं मानवजीवने। तत्रास्माकं कवयस्त्वद्यापि जीर्णानां समस्यानां पूर्तिषु, यद्वा व्याकरणज्ञान एव स्वीयं पाण्डित्यं प्रदर्शयन्ति।

काव्यैरेभिः स्वदेशे को नाम स्फूर्तिसंचारः ! कथं वा भवेत्पुनरपि नवीनस्य संस्कृतसाहित्यस्य समादरः !! संस्कृत-साहित्यं हि विश्वव्यापकं साहित्यं, तत्र यद् वर्ण्यते तद्यावत् समस्तजनमनोरञ्जकं, समस्तमनोवृत्तिविभासकं प्रसादगुण-गुम्फितं च न भवति, न तत्तावत् संस्कृतसाहित्यस्य वैशिष्ट्यं ख्यापयितुं प्रभवति। सर्वेष्वेव देशेषु संस्कृतभाषा समाद्रियते संस्कृतसाहित्यपोषकैरतः सदा तदेव लेख्यं येनाखिलेऽस्मिन् भूमण्डले तस्य प्रतिष्ठा नितरामेधमानैव विराजेत। सत्यमेतत् , यत्सम्प्रति सन्ति केचन नवयुग-प्रभाव-प्रभाविता अपि कवयः; परं तैरपि प्रायशः पाण्डित्यमेव प्रदर्श्यते। "पाण्डित्यं भिन्नं कवित्वं च भिन्नम्" सुतरामेतत् समालोच्य यदा वयं संस्कृतसाहित्यं स्रक्ष्यामस्तदैव तत्साहित्यं प्राकृतिकं सरसं सरलं च भविष्यति।

[ यावदेतदन्यच्च पण्डितम्मन्यैः कविभिर्विशेषतो विधेय-मस्ति ततः प्राक् युवकैः कविभिस्तु यदेव तेषां मनसि समुदेति यथा च यदुद्वेल्लति तत्सर्वं निःशंकं प्रकाशयितव्यम्। को जानाति किं कस्मै रोचते। भिन्नरुचिर्हि लोकः। बहूनां कृते तेषामेव काव्यं रुचिकरं सर्वगुणसमन्वितं च भविष्यति। निरन्तरं संस्कृतसाहित्यवृद्धिकरणात्मकं लक्ष्यमेव तैः स्वकर्त-व्यत्वेन निर्धारणीयम्। ]

# रण-निमन्त्रणम् !!

[ ऐतिहासिकं वृत्तम् ]

साहित्यवाचस्पतिः महाकविः श्रीज्वालारामनागर-'विलक्षण'-महोदयः, काशी ।

( १ )

जित्वा देशं गुर्जरं गर्वितात्मा
प्रापद्राणा-पत्तनं मानसिंहः ।
आतिथ्यार्थं तु स्वयं न प्रयातः
क्षुब्धो राणा प्रेषयामास पुत्रम् ॥

( २ )

पीड़ातयाऽद्य (?) शिरसो न गृहात्प्रतस्थे
राणा स्वयं ह्यतिथि-गौरव-रक्षणार्थम् ।
सेवाऽर्पितानि फल-पुष्प-दलानि राज—
न्नङ्गीकुरुष्व युवराज उवाच मानम् ॥

( ३ )

अलं गिराऽबोधि मया समासतः
स्वतन्त्रता-कानन—केसरिक्रिया ।
अपीडयाऽऽरादनुपस्थितिः सखे !
न मानमानादपमानशङ्कया ॥

( ४ )

इत्युक्त्वा झटिति निबद्ध्य तण्डुलानि
स्वोष्णीषे गमन-समुद्यतं नरेशम् ।
प्रासादात्समुपगतस्य वीरधाम्नो—
निर्भीका हृदय-सरस्वतीयमार्चीत् ॥

( ५ )

"याता स्वदेश—ममताऽऽर्य्यगुरुत्वयुक्ता
सैन्येन्द्र ! विस्मृतिपथं तव हृत्तलात्किम् ।
मन्त्रौषधैः कनक-रत्नमयैरनूनै—
स्त्वां भोगिनं नु किल कीलितवान्नृपेन्द्रः ॥

( ६ )

यावन्न दारुकृतिमाश्रयते कुठार—
स्तावन्न घोरवनपातविधौ समर्थः ।
नाशाय किं सविधि वीर-वसुन्धरायाः
जातस्त्वमेव जयचन्द इह द्वितीयः ॥

( ७ )

यत्त्वं भवोज्झितकुले भगिनीं समर्प्य
क्षात्रं क्षितौ समुपहासकथां व्यनैषीः ।
तच्चेष्टितं समवलोक्य निराकरिष्णु-
र्लज्जाऽपि हा झटिति नम्रमुखी बभूव ॥

( ८ )

आत्माभिभूत्यवसरे यदिदं शरीरं
क्षात्रोद्भवं विजयते समराग्निहव्यम् ।
पुष्णासि तद्यवन-मुष्टि-विमुक्त-धान्यै—
र्दासीकृतं, क्व विगतः सहजो विवेकः ? ॥

( ९ )

प्राण - प्रयाण - भयतो यवनाय कन्या—
दानं त्वया समरशान्तिविधायि चीर्णम् ।
सेनापतित्वमवलोक्य च कृत्रिमं ते
व्यङ्गं हसन्ति हृदयेऽप्यबला यवन्यः ॥

( १० )

शस्त्रास्त्र - धारणपरौ निजरक्त-रक्तौ
देशाभिमान-वहने नितरामनर्हौ ।
आभूष्य काच-वलयैर्मृदुलौ स्वपाणी
क्लीबायतां यवन-केलिकला-गृहेषु ॥

( ११ )

दासा वयं परवशा कुलकीर्तिहीनाः
श्रीमान् स्वतन्त्रनृपतिर्जनताभिवन्द्यः ।
आकर्णितं तव मया चरमं नृपत्वं
यन्मूर्ध्निगे कथयतः किल चामरे द्वे ॥

( १२ )

मेवाड़ - वीर - वनिता - गलदश्रुवार्भि -
र्विश्रान्तमङ्घ्रियुगलं नृप ! मार्जयिष्ये ।
द्रक्ष्यामि वीररुधिरोच्छलदच्छसिन्धौ
सौरभविकानि सततं यवनायुधानि ॥

( १३ )

क्षात्राभिमानभररोपतया प्रगल्भां
वाचं नरेन्द्र ! मृदुतां तव नाययिष्ये ।
चित्तौर-दुर्ग-शिखरं शशिकेतु-शोभं
सद्यः स्वमानचरितार्थमहं करिष्ये" ॥

( १४ )

इत्थं निगद्य तरसा प्रतिशोध—बुद्ध्या
नैजापमानपरितप्तमनाः स मानः ।
ताम्राननस्तरुणरोषवशादमन्दे–
दिल्ली-दिशं विधृतवांश्चरणारविन्दे ॥

( १५ )

तस्मिन् क्षणे तमथ कश्चन वीरवर्य्यः
प्रोवाच भूप ! भगिनी-भवनं प्रयातु ॥
आगम्यतां रणनिमन्त्रणसाङ्गताया
अभ्यर्थनेति भगिनी-रमणेन साकम् ॥

( १६ )

इन्द्रप्रस्थपुरं प्रविश्य विमना
नत्वा च दिल्लीश्वरम्,
स्वोष्णीषं नव-रत्न-संसदि जवा-
चिक्षेप तस्याग्रतः ।
एतन्मौनपुरस्सरं भयपथं
दृष्टं समैः कौतुकं,
भू-शक्रः स्वयमेव तत्क्षणमहो
चित्रार्पितस्तस्थिवान् ॥

---

## आर्योपदेशरत्नमाला

( १ )

अतुला प्रभाववन्तः
सूक्ष्मधियऽकर्मकौशलाऽपरमाः;
व्यायाम-पुष्ट-गात्राः
भुवि संयुक्ता जयन्त्वार्याः ।

( २ )

अर्पित-साराः कृषाः,
चूर्णित-लोष्ठा समुप्त-सद्बीजा;
सिक्ताः समृद्ध-धान्याः
वप्राः सन्तु प्रतिग्रामम् ।

( ३ )

आत्मगिरामवमानं
परवाचां भवति यत्र साम्राज्यम् ।
तत्रत्या वै तुच्छाः
दासा, मान्या न ते तृणायापि ।

( ४ )

श्रीश-प्रीतिद-कर्मसु
मनसा वचसा च कर्मणा प्रेम्णा;
निरता ये विद्वान्सो
नियतं तेषां हि जीवनं सफलम् ।

—श्रीगिरिधरशर्मा नवरत्नं 'काव्याऽलङ्कारः', झालरापत्तनम्

# संस्कृत-साहित्ये संस्कृत-कवयित्रीणां पद्य-रत्नानि ।

विदुषी रुक्मिणी देवी 'माधवी'

संस्कृत-कवयित्रीणां रचनाः प्रायशः श्रृङ्गाररस एव दरीदृश्यन्ते । ताभी रचनात्मकं गद्यं पद्यादिकं वा काव्यं नैव कृतमिति मदीयाऽभिप्रायो नाऽस्ति ।

श्रृङ्गाररस-रचनाः प्रायशः सर्वेषामेव मुखे नरीनृत्यन्ति । इदमेव कारणं वर्तते यत् कतिपय-कवयित्रीणां पद्यरत्नानि परम्परागतानि यत्र तत्र संगृहीतानि लभ्यन्ते ।

अधुना श्रृङ्गाररसे अरुचिं प्रकटयन्तः स्त्रीणामङ्गप्रत्यङ्गवर्णनात्मकपद्यादपमानं मन्यन्ते केचन महापुरुषाः । परन्तु संस्कृत-कवयित्रीणां रचनानि द्रष्टव्यानि,

*विकटनितम्बा—*

सुप्रसिद्धहिन्दीभाषा-कविना श्री "विहारी" लाल महोदयेनाऽपि स्वकीये 'सतसई' नामके काव्यग्रन्थे—

नहि पराग नहि मधुर मधु, नहि विकास यहि काल ।
अली कली ही ते विंध्यो, आगे कौन हवाल ? ॥

विकटनितम्बाया निम्नपद्यस्यैवानुवादः प्रतीयते—

अन्यासु तावदुपमर्दसहासु भृङ्ग !
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
बालां कदर्थयसि किं नवमालिकायाः !

परन्तु "विहारी" महोदयस्य कवितायां "अज्ञातरजसम्" इति नैवागतम् ।

कामशास्त्रीयं विधानमस्ति—

बाला तन्वी मृदुतनुरियं त्यज्यतामत्र शङ्का,
दृष्टा काऽपि भ्रमरभरतो मञ्जरी भज्यमाना ?
तस्मादेषा रहसि भवता निर्दयं पीड़नीया,
मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समग्रम् !

अपिच—चाटव वर्णने—

दिग्वधूवदन-चुम्बि चेर्ष्यया, वीक्ष्य सद्यति दिवा भवद्यशः ।
दर्शितः पृथुपयोधरोद्गमः, तेन सापि परिरभ्यतेऽखिला ॥

अपि च—

अनिहिताप्यभियोगपराङ्मुखी, उपरि ते पुरुषायितुमक्षमा ।
नववधूरिव शत्रु-पताकिनी, प्रकटसंगविलासमकुर्वती ।

अपिच—

अय्ययि साहस-कारिणि ! किं तव चङ्क्रमणेन ।
टसदिति भङ्गमवाप्स्यसि, कुच-युग-भार-भरेण ॥

अपिच—वसन्तवर्णने—

किं द्वारि दैवहतिके ! सहकारकेण
संवर्धितेन विषवृक्षक एष पापः ।
यस्मिन्मनागपि विकास-विकार-भाजि
घोरा भवन्ति मदनज्वर-सन्निपाताः ॥

*शीला-भट्टारिका—*

ससन्देह-सन्देशात्मक-सन्देशमुदाहरन्ती तरुणी, दूतीं प्रति वदति—

दूति ! त्वं तरुणी, युवा स चपलः, श्यामास्तमोभिर्दिशः
सन्देशः सरहस्य एव, विपिने संकेतकावासकः !
भूयो भूय इमे वसन्तमरुतश्चेतो नयन्त्यन्यथा,
गच्छ क्षेम-समागमाय निपुणे ! रक्षन्तु ते देवताः !

वियोगे निद्रा कुत्र ?

प्रियाविरहितस्याऽस्य, हृदि चिन्ता समागता ।
इति मत्वा गता निद्रा के कृतघ्नमुपासते ॥

सखीं प्रत्युक्तिः—

यः कौमार-हरः स एव हि वरस्ता एव चैत्रक्षपा—
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवाऽस्मि तथापि तत्र सुरत-व्यापारलीला-विधौ,
रेवा-रोधसि वेतसी-तरुतले चेतः समुत्कण्ठते ॥

उक्ति-प्रत्युक्ती—

विरहविषमो वामः कामः करोतु तनुं तनुं
[illegible] यमः ।

त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे !
किसलय-मृदुर्जीवेदेवं कथं प्रमदा-जनः ॥

सन्देशवाहिनीं कृतकार्यामवलोक्य—

श्वासाः किं ? त्वरितागताः, पुलकिता कस्मात् ? प्रसादः कृतः,
स्रस्ता वेण्यपि पादयोर्निपतनान्नीवीगमादागमात् ।
स्वेदार्द्रं मुखमातपेन गमितं, क्षामा किमित्युक्तिभिः
एतन् म्लानसरोरुहाकृतिधरस्यौष्ठस्य किं वक्ष्यसि ? ॥

*मोरिका—*

नायकं प्रति—

मा गच्छ प्रमदाप्रिय ! प्रियशतैरभ्यर्थितस्त्वं मया,
बाला प्राङ्गणमागतेन भवता प्राप्नोत्यवस्थां पराम् ।
किं चास्याः कुचभारनिःसहतरैरङ्गैरनङ्गाकुलैः,
चुम्बत्कञ्चुकजालकैरनुदिनं निःसूत्रमस्मद्गृहम् ॥

वियोगिनी—

लिखति न गणयति रेखा, निर्झर-वाष्पाम्बुधौतगण्डतटा ।
अवधि-दिवसावसानं माऽभूदिति शंकिता बाला ॥
प्रियतमस्त्वमिमामनघार्हसि
प्रियतमा च भवन्तमिहार्हति ।
नहि विभाति निशा-रहितः शशी
न च विभाति निशाऽपि विनेन्दुना ।

*फल्गुहस्तिनी—*

चन्द्रोदयवर्णने—

त्रिनयन-जटावल्ली-पुष्पं निशा-वदन-स्मितम्,
ग्रह-किसलयं सन्ध्या-नारी-नितम्ब-नख-क्षतिः ।
तिमिर-भिदुरं व्योम्नः श्रृंगं मनोभव-कार्मुकम्,
प्रतिपदि नवस्येन्दोर्बिम्बं सुखोदयमस्तु नः ॥

*इन्द्रलेखा—*

एके वारिनिधौ प्रवेशमपरे लोकान्तरालोकनं
केचित्पावक-योगितां विजगदुः क्षीणेऽह्नि चण्डार्चिषः ।
मिथ्या चैतदसाक्षिकं प्रियसखि प्रत्यक्ष-तीव्रातपं
मन्येऽहं प्रमरध्वनीन (?) रमणीचेतोऽधिशेते रविः ॥

*विज्जका—*

अरे ! चम्पकतरो, त्वं केनाऽस्मिन्कुग्रामे ग्राम निवासिनां मध्ये आरोपित इति अन्योक्तिः—

केनाऽत्र चम्पकतरो ! बत रोपितोऽसि
कुग्राम-पामर-जनान्तिक-वाटिकायाम् ?
यत्र प्रवृद्ध-घन-शाक-विवृद्धि-लोभाद्,
भो भग्नवाट—वटनोचित-पल्लवोऽसि ?

"विहारी" कवेः "फूल्यो अनफूल्यो भयो गंवई गाँव गुलाव" इयमुक्तिः उपरिलिखित—कवितामनुकरोति ।

मुखवर्णने—

कोषः स्फीततरः स्थितानि परितः पत्राणि दुर्गं जलम्,
मैत्रं मण्डलमुज्वलं चिरमधो नीतास्तथा कण्टकाः ।
इत्याकृष्टशिलीमुखेन रचनां कृत्वा तदत्यद्भुतम्,
यत्पद्मेन जिगीषुणाऽपि न जितं मुग्धे ! त्वदीयं मुखम् ॥

न जाने केन हेतुना मम हृदयं खण्डशो नैव भवति—

गते प्रेमाबन्धे प्रणयबहुमाने विगलिते,
निवृत्ते सद्भावे प्रणयिनि जने गच्छति पुरः ।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि ! गतांस्तांश्च दिवसान्,
न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥

काचिद्विदग्धा कथयति-प्रियस्य संगमेऽपि प्रियस्य नर्म, स्मितं, वचनं रसादिकं च यत्कथयसि, अतो धन्यासि इति व्यङ्ग्योक्तिः—

धन्यासि या कथयसि प्रियसंगमेऽपि,
विश्रब्ध-चाटुक-शतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण,
सख्यः शपामि यदि किञ्चिदपि स्मरामि ।

असती-वर्णने—

दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दापय-
प्रायेणाऽस्य शिशोः पिता न विरसाः कौपीरपः पास्यति
एकाकिन्यपि यामि तद्गृहमितः सन्त्रस्तमालाकुलं—
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥

शृङ्गारवर्णने—

नार्याः सा रतिशून्यता नयनयोर्या दृष्टिपाते स्थितः,
कामी प्रास्तरतार्थ एव न भवत्यालिङ्गितु वाञ्छति ।
आश्लेषादपि या परं मृगयते धिक्तामयोग्यां स्त्रियं,
श्रोणीगोचरमागतो रतिफलं प्राप्नोति तिर्यङ् न किम् ॥

सूर्योदयवर्णने—

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गाः
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥

वसन्तस्वभाववर्णने—

किंशुककलिकान्तर्गतमिन्दुकलास्पर्धि केषां भाति ।
रक्तनिचोलकपिहितं धनुरिव जतुमुद्रितं वितनोः ॥

सुरतवर्णने—

उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या,
हुँ ममेति वदनान्तरलीनं जल्पितं जयति मानवतीनाम् ॥

समस्यापूर्तौ—

कवेरभिप्रायमशब्दगोचरं स्फुरन्तमार्द्रेषु पदेषु केवलम् ।
वदद्भिरङ्गैः कृतरोमविक्रियैर्जनस्य तूष्णीं भवतोऽयमञ्जलिः ॥

विज्जकायाः गर्वोक्तिरपि पठनीयेव—

अहमस्मि सरस्वती ! तद् दण्डिना न जाने "सर्व-शुक्ला सरस्वती" इति कथं लिखितम् ।

नीलोत्पल-दल-श्यामां विज्जकां मामजानता ।
वृथैव दण्डिना प्रोक्तं "सर्व-शुक्ला सरस्वती ॥"

वस्तुतो गर्वोक्तिः समुचितैव प्रतिभाति—

### नागम्मा—

सूर्योदय-वर्णने—

शुकतुण्डच्छविसवितुश्चण्डरुचः पुण्डरीक-वनबन्धोः ।
मण्डलमुदितं वन्दे कुण्डलमाखण्डलाशायाः ॥

### मारुला—

मारुलायाः पद्यं दशाविशेषवर्णनस्योत्तमचित्रम्—

कृशा केनाऽसि त्वं प्रकृतिरियमङ्गस्य ननु मे,
मला धूम्रा कस्माद्, गुरुजनगृहे पाचकतया ।
स्मरत्यस्मान् कच्चित् ? नहि नहि नहीत्येवमवदत्,
शिरः कम्पं बाला मम हृदि निपत्य प्ररुदिता !

उपरि-निर्दिष्टानां श्लोकानां विस्तारभयाद् व्याख्यानं न कृतम् । कवयित्रीणां परिचयोऽपि नैव दत्तः ।

---

# शुभाशिषः !

साहित्याचार्यः श्रीपरमानन्दशर्मा, व्याकरणशास्त्री

यमहं पर्याप्तमहं तमोपहं हन्त ! चिन्तये स्वान्ते ।
यमवेक्ष्य यान्ति विघ्नाः स्मेरं हेरम्बमुच्चैर्निघ्नाः ॥ १ ॥
अहितः सहितः सशिवः सशिवः सशिवः शशिप्रभावान् सः ।
आयुधसिद्धिरिभास्यः प्रभासयेदाशु सुप्रभातं नः ॥ २ ॥
अतनु रिपुः स समन्तादतनुममङ्गलचयं रयाच्छिन्द्यात् ।
नितरामनङ्गशत्रो ! नानङ्गीकारमर्हति प्रार्थी ॥ ३ ॥
कलि-कलुषप्रान्ता शान्ता भवभवना सर्वमङ्गलापर्णा ।
सुप्रभातपर्णमार्या! दधतां हृदि मण्डनायेदम् ॥ ४ ॥
मङ्गलमङ्गलधामः सदाभिरामः सुमङ्गलायतनः ।
कमलायतनो यतनात् स सुप्रभाते वितन्वीत ॥ ५ ॥
यस्य प्रतापतोऽन्तं यान्ति सदैवान्तराय-सन्तापः ।
रक्षेत्स कर्मसाक्षी साक्षाद्देवोऽद्वितीयमाङ्गलिकः ॥ ६ ॥

# साहित्य-समाजयोः सम्बन्धे नव्य-मीमांसा

साहित्य-व्याकरणाचार्य; राजपण्डितः, श्रीभगवान् पाण्डेयः, तर्क-वेदान्त-सांख्यतीर्थः

पञ्चाशद्वर्षाण्यतीतानि—कस्याऽपि मानवस्यान्तरङ्गे नैतत्तर्कितमप्यभूद् यत् कियतामेव वर्षाणामनन्तरं राष्ट्र-जीवने किमपि क्रान्तिकारि परिवर्तनं भविष्यतीति। किन्तु परिस्थितिस्तदनुकूलैवाऽऽसीत्। प्राणिमात्रस्य हृदयं चिरप्रचालित-सामाजिक-व्यवस्थयाऽसंतुष्टं कथमपि पुराण-शृङ्खलया निगडितं, विद्रोह-भावनया-परिपूरितं, कस्यापि महतः परिवर्तनस्य कृते क्षुब्धमपि कालिक-संस्कारेणाऽवरुद्धं खिन्नतामनुभवदिवासीत्।

शनैः शनैः विद्रोह-शोणनदस्याऽतर्किता कल्लोलमाला, वयस्कां जीर्ण-शीर्णां प्राक्तन-रूढि-तटीं परिप्लुतां विधाय किमपि नूतनमेव युगान्तरमुपस्थापितवती। तेन च युगान्तरारम्भेण सकलस्यैव समाजस्याप्रत्यूहितं जागरणं प्रत्यक्षमस्माभिः साम्प्रतमनुभूयते। इदञ्च राष्ट्रस्य 'सुप्रभातम्'!

परञ्च मोहनिद्रां परित्यज्य समुत्थितेऽपि राष्ट्रे, अस्मदीयसाहित्यस्य पुनस्तादृश्येव दुरवस्था दरीदृश्यते। तत्र कृते दृष्टिपाते हृदयं नैराश्यपूर्णमेव भवति। यद्यपि विभिन्नासु दिक्षु देशस्य, महता वेगेन जीर्णवासो विहाय नवीन-वेष-धारणमीक्ष्यते; किन्तु साहित्येऽधुनापि किञ्चित् करणमकरणमेव वक्तुं शक्यते। अन्येषां सुदूरवर्तिनां राष्ट्राणां यादृगुन्नतिः समाजादिषु; ततोऽप्युत्कृष्टतरा साहित्यप्रगतावलोक्यते। किंतु नैतादृशमस्माकं राष्ट्रम्। अत्र च विद्वद्भिर्दत्तावधानैर्भवितव्यम्। इदञ्च विद्वत्संमतमेव मतं यत् साहित्याभ्युदयं विना कस्याऽपि देशस्य यथार्थाभ्युदयो भवितुं नार्हति। साहित्यमेव समेधमानं राष्ट्रं सशक्तं करोति, सशक्तं च राष्ट्रं साहित्यं दृढीकरोति। राष्ट्र-साहित्ययोर्जीवनमरण-संबन्धः।

क्रमिकविनाशवादिनामयं सिद्धान्तो यदतीतकाले सृष्टिप्रारम्भे नास्माकं सभ्यतायाः संस्कृतेभ्यः कश्चनाङ्कुरोप्यासीत्। मनुष्याः पशव इव स्वच्छन्दमा खेलन्तोऽटवीतोऽटवीमाहिण्डमानाः केवलमुदरदरीपरिपूरणार्थमितस्ततो मृगयां विदधति स्म। किन्तु सामयिकप्रगत्यैव पशु-मनुष्ययोर्वास्तविको भेदः स्फुटतामापेदे। मानवानामेकान्तजीवनं पशूनामिवासंसृष्टं परमार्थतो नाभिप्रेतमिति समाजं निर्माय ते स्थितिं कर्तुमारेभिरे। तेषां विवेकशक्ति-संपन्ने स्वान्तेऽयमपि तर्क-विशेषः स्थानमवाप यत् पशूनामिव नऽस्माकं जीवनपद्धतिरनियमिता भवतु। एवञ्च क्रमशो दलरूपेण तेषामवस्थानं बहुसंख्यकं, परस्परं च भिन्नेषु दलेषु नियमसमर्यादा-संघटितास्युदये सहानुभूतिरित्यादिकं व्यवस्थितं बभूव। सार्धमेव क्रमिकाभ्युदयेन रक्षा-संघटनम्, दण्ड-व्यवस्था, हर्षावसादसहयोगश्च प्रसारमलभत। माध्यमिक-समाज-निर्माणं तत्र च कालानुसारं परिवृत्तिरित्यादिकं तु समुपलब्धेतिवृत्ततो विदितमेव सर्वेषाम्। एतादृशस्य क्रमिकविकाशस्य बीजमद्यापि प्रमाणरूपेण मानवहृदये तिष्ठति। मनुष्यो ह्यद्यापि पूर्णतामधिगन्तुं प्रयतते। स हि स्वस्मिन् न्यूनत्वमेवाधिगच्छति, तद्दूरीकरणाय चाहरहश्चेष्टते। जन्ममरणयोः का कथा; बहूनि मन्वन्तराणि व्यतीतानि, किन्तु पूर्णत्वप्राप्तिसंघर्षो मानवसमाजेऽद्यापि प्रबल एवावलोक्यते। कदाचित् सोऽभिलाषः स्वाधीनतायाः, सुखस्य, समृद्धेः, पूर्णत्वप्राप्तेर्वा वर्तते। तदिदं यावन्नाधिगतं मानवानामध्यवसायोऽपि शिथिलतां नायास्यति। तादृगभिलापपूर्त्यै परस्परं साहाय्यस्य प्रोत्साहनस्य च महती आवश्यकतेति कृत्वा दलनियमान् परिष्कृत्य मानवसमाजोऽपि परिष्कृत-व्यवस्थया सततं समुन्नतिशिखरमारोढुं प्रयतमानोऽवलोक्यते। अयञ्च समाजसृष्टि-विकाश-क्रमः।

अनेनैव सार्धं साहित्यस्यापि क्रमविकाशो जातोऽत्र इत्यत्र नास्ति संदेहः। कस्यापि राष्ट्रस्य साहित्यावनत्या समाजावनतिरनुमातुं शक्यते। तदुन्नत्या च तदुन्नतिः।

सृष्टिप्रारम्भे निसर्गत एव मानवस्य यथा समाजनिर्माणे प्रवृत्तिरभूत्तथैव साहित्यनिर्माणेऽपि। एतद्त्र वक्तुं शक्यम् ।

कृतेऽपि कुलनिर्माणे, प्रचालितेष्वपि व्यवस्थानियमेषु, विहितायामपि भोजनाच्छादनव्यवस्थायाम्, मानवस्य सञ्जातायामपि बहिरङ्गतृप्तौ, नान्तरङ्गतृप्तिरभूदिति ध्रुवमेतत्। स हि बुभुक्षयाऽऽक्रान्तः सन् भोजनं चकार। पिपासाकुलितो नीरं पपौ। शीतोष्णरक्षार्थं वल्कलं जग्राह। तथापि नाऽसौ सन्तुतोष। तस्यान्तरङ्गे रहस्यमयं जगदवलोक्य कौतुकमाविर्बभूव। विभिन्नान् पदार्थानवलोक्य कल्पनाविष्टमानसोऽन्यं प्रति स्वभावादेवासौ स्वभावं प्रकाशयितुमैच्छत्। स हि सुभग-सलिलां भूधरतो निष्पतन्तीं पयस्विनीम्, नवनवं बाल-रश्मि-रञ्जितं 'सुप्रभातम्', स्वर्ण-प्रभान् किसलयान्, चन्द्रतारा-संकुलं गगनम्, नीरवं निशीथम्, मन्दं मन्दं वहन्तं समीरञ्च समीक्ष्य निसर्गत एव कमपि मोदं समवाप। कल्लोलिन्या कल्लोल-माला-ध्वनिषु संगीतमकल्पयत्, विहग-रवेषु कमपि सन्देशमशृणोत्। सततं प्रवहता पवनेन कर्मशीलतामशीलयत्। कल्पनाऽऽकुलं तस्य स्वान्तं तेषु तेषु वस्तुषु प्रकारान्तरेण दृश्यमानेष्वपि स्वानुभवशक्त्या कामप्यन्यामेव चमत्कृतिमलभत। किञ्च समाज-निर्माणे स्वस्वानुभवस्य लाभप्रदत्वं समुयोगित्वञ्च प्रथयितुमसौ किमपि सामयिकं वक्तुमभिललाष। एतदेव समाजस्य प्राथमिकं मौनं साहित्यम्। क्रमशस्तस्य मनोवृत्तिरधिकं कौतुकवती बभूते। निसर्गत एवाऽसौ स्वानुभूतं प्रकटीचकार। एतद्धि प्रकृतिसिद्धं स्वर्णप्रभातमवलोक्य विहंगो विरौति, तत्कस्य हेतोः? स्वान्तानुरागमेव प्रकटीकर्तुम्!! ततश्च संभाषणपटोर्वृद्धसमाजस्य मानवस्य का कथा? क्रमशः परस्परं स्वानुभवकथनं तदनुसारेण समाजप्रगतिरिति समाजाभ्युदये मूलत एव साहित्यं हेतुः। एवमेव गोष्ठीप्रलापादिकञ्च तस्य मनोरञ्जन-साधनं साहित्यं समभवत्। स्वस्वमधुरकल्पनायाः स्थायित्वाभिलाषे सत्यपि लेखन-मुद्रण-कलानामभावे कण्ठीकरणादिप्रथा समारब्धा। जानन्त्येवेतिवृत्तविदो विद्वांसो यदार्यसभ्यताया मूलभूतो ग्रन्थो वेदोऽपि गुरुशिष्य-कण्ठीकरणपद्धत्यैव संरक्षितो बभूव। शनैः शनैस्तत्तत्कलानामाविष्कृतौ साहित्यस्य तत्तत्समयनिर्गतविचारधारायाश्च ग्रन्थरूपेण सम्पादनमभूदिति नाविदितं समुपलब्धेतिवृत्तविदाम्।

क्रमेण साहित्येऽपि महती क्रान्तिः सञ्जाता। अपि च तत्र विपुलं परिवर्तनमभूत्। विज्ञानस्योत्तरोत्तरमाविष्कारे जाते लोकस्य साधारणोऽपि समाचारः सर्वेषां श्रुतीः प्रापयितुं मुद्रणं कृतवान्। दर्शनगणितादि-समावेशोऽपि विस्तृतरूपेण साहित्ये समभवत्। पुरातनं साधारणं साहित्यं साम्प्रतं रहस्यमयं साहित्यं सञ्जातम्। साहित्योन्नतिक्रमेणैव समाजस्यापि प्रगतिशीलता समवलोक्यते। अनुन्नतस्यास्माकं राष्ट्रस्यानुन्नतं साहित्यम्। एवञ्च समाजनिर्माणविधौ राष्ट्रजीवने समुपस्थितायामपि महत्यां क्रान्तौ साधनार्थं साहित्येऽपि महती क्रान्तिरावश्यकी, तां विना तदसंभवात्। एतेन क्रमिक-विकासं समुपलब्धयोः समाज-साहित्ययोः परस्परनिर्माणेऽविनाभावो दुर्निवारो निसर्ग-संबंध इति सिद्धम्।

---

# ❀ संस्कृत–साहित्ये वैचित्री ❀

श्रीदीनानाथशर्म्मा शास्त्री, सारस्वतः

संस्कृतभाषिक-साहित्य-सदृक्षं साहित्यं कस्यामप्यपरस्यां भाषायां नेति निश्चप्रचम्। धर्म्मार्ऽर्थकाममोक्षान् अखिलानेव पुरुषार्थांल्लक्ष्यीकृत्य प्रवृत्तमेतद् भाषासाहित्यं सर्व्वाङ्ग-पूर्णतां बिभर्त्ति, इतश्च प्राचीनताम्। अस्यां भाषायां यल्लालित्यमनुप्रास-यमकादिमूलकं निर्म्मीयते; व्यङ्ग्य-ध्वन्यादिमूलकश्चमत्कारो वा प्रकाशते, येन द्रष्टा विकसिताक्षो भवति; तद् भाषान्तरेषु सर्व्वथा नाऽस्ति। यथा सभङ्गपदादिश्लेषस्याऽत्र निर्व्वाहः, येनाऽनायासं द्व्यर्थप्रतीतिः; तथा भाषान्तरेषु न दृश्यते।

यथाऽत्र विविध-हार-खड्ग-मुरज-पद्म-मुसल-धनुश्शर-शक्ति-शूल-हल-चक्रबन्धादीनां रचना निर्म्मातुं शक्यते पद्यैः; न तथा भाषान्तरेषु। अत्र यादृशी छन्दोरचना; सा नाऽन्यसाहित्ये। अत्र यादृशं दृढमूलं व्याकरणम्, यावान् शब्दकोषः, यावद् अर्थजातम्, * यावती कल्पनाततिः, यावन्ति स्फुरणानि; तत्तदन्यस्यां भाषायां दुरापमेव। किं किं तावद् वैशिष्ट्यमस्या भाषायाः साहित्यस्य कीर्त्तयेम, काऽऽ का गुणगण-गणना वर्ण्णना वा विधेयाऽदसीयसाहित्यस्य।

वस्तुतस्तु संस्कृतसाहित्ये वैचित्रीकर्त्ता वैशिष्ट्योत्पादकश्च व्यङ्ग्यार्थ एव। व्यङ्ग्यार्थश्च स्वयमेव विचित्रो विशिष्टश्च भवति। स स्वोपासकं साहित्यमपि तथा कथं न कुर्य्यात्?

एतत्प्रशस्तौ वाग्देवतावतारेण भट्टमम्मटेन काव्यप्रकाशस्य पञ्चमोल्लासे निगदितम्—

"नच लक्षणात्मकमेव ध्वननम्, तदनुगमेन तस्य दर्शनात्। नच तदनुगतमेव, अभिधाऽवलम्बनेनाऽपि तस्य भावात्। न चोभयानुसार्येव, अवाचकवर्णानुसारेणाऽपि तस्य दृष्टेः। न च शब्दाऽनुसार्य्येव; अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनाऽपि तस्य प्रसिद्धेरित्यभिधातात्पर्य्यलक्षणात्मकव्यापारत्रयातिवर्ती ध्वननादिपर्यायो व्यापारोऽनपह्नवनीय एव"।

वस्तुत इदमक्षरशः सत्यमेव वचनम्। व्यङ्ग्यं सर्व्वेष्वर्थेषु साम्राज्यं भजते। इदमेव भाषाया जीवनम्, अनेनैव चमत्कारः, स एव रसपदवाच्यः, तेनैवाऽऽद्भुत्यम् भवति। तत्कृते श्रीधर्म्मदत्तेन श्रीनारायणस्येदं वचनं स्वग्रन्थे उक्तम्—

'रसे सारश्चमत्कारः सर्व्वत्राऽप्यनुभूयते †।
तच्चमत्कारसारत्वात् सर्व्वत्राप्यद्भुतो रसः।
तस्मादद्भुतमेवाऽऽह कृती नारायणो रसम्'॥

अपरमत्रेदं वैशिष्ट्यं यदत्र अर्थऽऽ प्रकरणविशेषवशेन नियतसम्बन्धोऽनियतसम्बन्धः सम्बद्ध-सम्बन्धश्च द्योत्यते। न खलु मुख्येनाऽर्थेन अनियतसम्बन्धो लक्षयितुं शक्यते; परमत्र (व्यङ्ग्ये) तु तत्सुलभता। यदि

'श्वश्रूरत्र निमज्जति अत्राहं दिवसके प्रलोकय।
मा पथिक! रात्र्यन्ध! शय्यायामावयोर्निमङ्क्ष्यसि'

अत्र चेदं नियतसम्बन्धोऽर्थः, पथिकरूपैकविषयत्वात्; तर्हि

'कस्य न वा भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माऽऽघ्रायिणि! वारितवामे! सहस्वेदानीम्'

अत्र अनियतसम्बन्धोऽपि व्यङ्ग्यः, तथाहि—

'अत्र वाच्ये सम्बोध्या सखी एव+विषयः। परं व्यङ्ग्ये तु—'भ्रमरेणाऽस्या अधरऽऽ खण्डितो ननूपपतिना-इत्यनियतमस्मत्कान्तो विषयः। ममैवं वैदग्ध्यं यन्मयेयं पतिकोपात् त्राता-इति व्यङ्ग्यस्य प्रतिवेशिनी+विषयः। 'इदानीन्तु मया समाहितम्, पुनरेवं स्पष्टचिह्नं तत्पत्यागमनदिने न विधेयमिति व्यङ्ग्यस्य उपपतिर्विषयः। 'प्रियस्य एवं दृष्ट्वा ... रोषो भवति, अप्रियायास्तु नेति

* यावती। अत्र स्त्रीलिङ्गे केचिन्नुमं कुर्वन्ति; अप्राप्तिवशात्तद्युक्तम्। क्लीबे जश्शसोस्तु शेः सर्वनामस्थानत्वान्नुम्।

त्वयैतदीयनिर्भर्त्सने आनन्दो न विधेयः; पत्याऽनिर्भर्त्सिताऽपि त्वं स्वस्मिन् पत्यदृष्टिपाताद् अधन्या-इति व्यङ्ग्यस्य सपत्नी-विषयः ! मयैवं वैदग्ध्येन समाधाय त्वं त्राता, अधुना निश्शङ्का भव, मा विभीहि ‡ येन कदाचित्त्वत्पतिः पुनः संशयाक्रान्तो भवेद्, दंशव्यथां व्यक्तीकुरु-इति व्यङ्ग्यस्य उपपतिदष्टाधरा नायिका + विषयः । इमे व्यङ्ग्या अनियतसम्बन्धाः । हंहो ! कियद् दूरं प्रगत्य विश्रान्तं व्यङ्ग्येन !!!

व्यङ्ग्यस्य सम्बद्ध-सम्बन्धतायां—

'विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति' ॥

इति पद्यं प्रसिद्धम् । ईदृश्येव कल्पना नैषधीयचरितकर्त्राऽप्युपात्ता । तथा च—

'संज्ञाप्य नः स्वध्वजभृत्यवर्गान्
दैत्यारिरत्यञ्जनलास्यतुल्यैः ।
तत्सङ्कुचन्नाभिसरोजपीताद्
धातुर्विलज्जं रमते रमायाम्, ३।३४ इति ।

उभयत्र व्यङ्ग्यं समानम् । पूर्वत्र—'यदस्य ( हरेः ) दक्षिणमक्षि, असौ स आदित्यः । यदस्य सव्यमक्षि असौ स चन्द्रमाः' अथर्ववेद० १४।१८।२ इति वेदनिर्दिष्टदिशा सूर्यस्य हरिदक्षिणनेत्रात्मकतां प्रदर्श्य; तन्निमीलनेन सूर्यास्तसमयत्वं, तेन च पद्मस्य सङ्कोचं, तेन च ब्रह्मणः स्थगनं प्रदर्श्य; लक्ष्म्या निःशङ्कं निधुवन-विलसितं वर्णितम् । विपरीतरतस्य चोपपन्नता विष्णोर्नाभौ स्थितस्य कमलस्य प्रतिबन्धवशात् । उत्तरत्र पद्ये तु कमलातिशायिनलमुखस्तुत्यैव कमलसङ्कोचं × तत्र ब्रह्मणः स्थगनञ्च प्रदर्श्य लक्ष्म्या निधुवनं वर्णितम्, येन नलमुखस्य पद्मातिशायिता व्यज्यते । हन्त व्यङ्ग्यदेव ! धन्योऽसि । तव कियद्दूरपर्यन्तं गतिः !!!

संस्कृतसाहित्ये केवलमेतादृक्ष्वेव स्थलेषु न वैशिष्ट्यम्, प्रत्युत तत्र पुरुषव्यत्ययेनाऽपि वैशिष्ट्यं प्रतीयते । 'एहि मन्ये ओदनं भोक्ष्यसे इति भुक्तः सोऽतिथिभिः' 'एहि मन्यसे ओदनं भोक्ष्ये इति भुक्तः सोऽतिथिभिः' अनयोर्वाक्ययोरपि व्यङ्ग्यस्य भेदः । पूर्वत्र वाक्ये 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' १।४।१०६ इति प्रकृतौ मध्यम-पुरुष-प्रयोगे परिहासो व्यङ्ग्यः । उत्तरत्र तु प्रकृतावुत्तमपुरुषप्रयोगे याथार्थ्यं व्यङ्ग्यम् ।

संस्कृतसाहित्ये पूर्वपरनिपातेनाऽपि वैशिष्ट्यं ध्वन्यते । तथाच—'धर्मराजौ जिन-यमौ' अमरकोषे ३।३।३१ अत्र 'जिन-यमौ' इति स्थापनेनाऽमरसिंहो जैनी प्रमाणितोऽभूत् । 'धर्म्मराजौ यमजिनौ' इति पाठे सति स सनातनधर्म्मा प्रतीतोऽभविष्यत्; यतो यम-जिनयोरुभयोः समानाऽच्कत्वाद् 'अल्पाच्तरम्' इत्यस्याऽप्रवृत्तौ 'अभ्यर्हितञ्च' इत्यनेन–यस्य मते जिनोऽभ्यर्हितः, स जिनं प्राङ् निधास्यति, यस्य च यमोऽभ्यर्हितः स तं प्राक् । सनातनधर्म्ममते जिनाऽपेक्षया यमस्यैवाऽभ्यर्हितत्वात् तस्यैव प्राङ्निपातोऽभविष्यत् । वैपरीत्येनैव अमरसिंहस्य जैनसाम्प्रदायिकता ध्वन्यते ।

एवमत्रैव साहित्ये विभक्तिविशेषेणाऽप्यर्थवैलक्षण्यं दृष्टम् । तथा च—

'प्रधनाऽध्वनि धीर ! धनुर्ध्वनिभृति
विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप ! भवानयुद्ध
विधिसिद्धसाधुवादपदम् ॥'

अत्र 'दिवसम्' इति 'कालाध्वनोरत्यन्तसंयोगे' २।३।५ इति द्वितीयया 'तव शत्रूणां सर्वाहमपि युद्धेन न साफल्यप्राप्तिरिति पिशुनम् । 'दिवसेन' इत्यत्र तु 'अपवर्गे तृतीया' २।३।६ इति अपवर्गा—( फल प्राप्त्य ) ऽर्थे विहिततृतीयया 'भवान् एकदिन युद्धेन शत्रूञ्जिगाय' इति वैशिष्ट्यं ध्वन्यते ।

पदे पदे ध्वनेरानन्दो निम्नपद्ये विलोक्यताम्—

'श्वश्रूरत्र निमज्जति, अत्राऽहं दिवसके प्रलोकय ।
मा पथिक ! रात्र्यन्ध ! शय्यायामावयोर्निमङ्क्ष्यसि ।'

निमज्जति–जरत्तरत्वेन निष्पन्दा शेते, तेन शङ्काराहित्यं व्यज्यते । अत्र–ततो भिन्नस्थले, अहम्–अहमेव । अत्र स्वाप-बोधकपदानुक्त्या मन्मथपीडया स्वस्य निद्राराहित्यं व्यज्यते । दिवसके–अत्र कुत्सायां 'कः' प्रत्ययः । कुत्सादिनस्यैतदर्थं यद् दिने शास्त्रनिषेधभिया वा अन्यकर्तृकदर्शनभिया वा मेलनाऽनवसरतया उभयोः श्रेयः प्रतिकूलत्वात् । प्रलोकय ... । पथिक रात्र्य-

‡ विभीहि । अत्र ङित्वाद् गुणो न । + विषयो नियतलिङ्गं ।
× सङ्कोचम् । द्वितीयान्तमिदम् ।

न्धेति रहस्यगोपनाय। पथिकत्वेन श्रमाद् विस्मरण-योग्यता, रात्र्यन्धत्वेन स्वशय्यापतनप्रसक्तिद्योतना। अन्यथाऽप्रसक्तप्रतिषेधे रहस्यभङ्गापत्तेः। अतएव निमङ्क्ष्यसीत्युक्तिः। ममेत्यनुक्त्वा आवयोः; अन्यथा स्वमात्रकथने रहस्यभङ्गापत्तेः। अथवा ममेति पाठे जरत्याः शय्यायां पाते दुःख-शङ्कामात्रम्, स्वस्यास्तरुणीत्वादतीव शङ्केति विशिष्योट्टङ्कनम्—इति उद्योते नागेशभट्टाः।

ईदृग् वैचित्री माधुर्य्यमाद्भुत्यं वा काऽन्यत्र प्राप्यते ? भाषान्तरसाहित्ये यस्यकस्यचिन्नाम्नः स्थापने कोऽपि विशेषो न प्रणिधीयते। परं संस्कृतसाहित्ये तु 'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः' अत्र 'कपालिनः' इत्येव नाम निन्दाया अभिप्रेतत्वाद् जुगुप्सा-व्यञ्जकतया काव्यानुगुणमिति ज्ञात्वैव निवेशितम्। 'पिनाकिनः' इति पाठे कृते तु वीरप्रकर्षद्योतकत्वाद् अभीष्टा निन्दैव विपर्य्यस्येत्।

अन्यदत्र संस्कृतसाहित्ये वैशिष्ट्यं यदत्र निन्दयाऽपि स्तुतिर्व्यज्यते, स्तुत्याऽपि च निन्दा। तथाच—

'कथमवनिप ! दर्पो यन्निशाताऽसिधारा-
दलनगलितमूर्ध्नां विद्विषां स्वीकृता श्रीः।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः'

अत्र आपाततः प्रतीयमानया निन्दया स्तुतिप्रकर्षः,

'हे हेलाजितबोधिसत्व ! वचसां किं विस्तरैस्तोयधे ! नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः। तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धाऽयशो—भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः'

अत्र स्तुत्या निन्दा व्यज्यते।

ईदृक् संस्कृतसाहित्यमितोऽप्यधिकचमत्कारान् वहति। एतत्कारणादेव तु अद्यत्वेऽप्येतद् वैदेशिकैरपि पूज्यते। एतदादिकवशादेव वयमधीना अपि तैः सम्मानदृष्ट्या दृश्यामहे। अन्यथाऽस्मासु अद्यत्वे को गुणोऽवशिष्यते; येन वयं वैदेशिकैःपूज्येमहि।

---

## मानवाः।

श्री जानकीवल्लभशास्त्री, साहित्याचार्यः, 'ललितललामः'

उत्पद्यैवोत्पतन-चपलान् मुक्तवासान् स्वपक्षान्।
नेक्षे व्योम्नि स्थिरचिरगतीनस्मि शोच्यान् विहङ्गान्॥
किन्तु ब्रूयां किमहमदयं पुङ्गवान्दान्तवृत्तीने—
तान् बद्धुं, किमपि हहहा व्याकुलं वा विधातुम्॥

नीरावासाः ! स्फुरितमतयो यूयमप्युत्सवन्तो।
नित्यं दृष्टा जलतलचिरस्थित्यसन्तुष्टचित्ताः ! ॥
कूपे ज्ञात्वा, शृणुत, पतितास्सन्ति केचिन्मनुष्या।
ये चोन्नेतुम्प्रयतनपरं पातयित्वा श्वसन्ति !!

दृष्ट्वा ऽनिष्टाचरणचरणौ द्रावहं साभ्यसूयो,
यूयं धात्रा हसितदयितेन स्वपूर्वाश्च सृष्टाः।
आशासे किं पुनरपि—?नृभिर्वन्धुवद्वन्द्यमाना।
पुण्यैर्गुण्यैः कुरुत पशवः ! स्वैर्गुणैस्तान् समेतान्॥

भूतेनैव प्रचलति दलं स्पृश्यमानं, रजश्च—,
ख्यातं, त्रात्या भवति, नटति व्याप्य 'वृत्त'–स्वरूपम्।
सर्वाङ्गाणि व्यसनसहितं 'पञ्चभूतात्मकानि'।
श्रित्वा नित्यं स्थिरतरधियो मानवा मानवास्तु॥

अग्रे सिंहः सरति समदो बुक्कतां कुक्कुराणां।
व्याकृष्य प्राक् करिणमसृजा स्निग्धवक्त्राग्रभागः॥
वीतौचित्यं कथमपि परस्यैव भागं गृहीत्वा।
धावन्तीमे मनुजदनुजा मे, वराकाश्च काकाः॥

धृत्वा धैर्य्यादुदरनिकरे वामपाणीन् निकामं।
नेत्राग्राणां स्पृशिपरिचितान् दक्षिणान् मस्तकेषु॥
लुप्तज्ञानास्तमसि ससुखं लब्धनिद्रास्सदैते,
सन्दृश्यन्ते विजितमनसो नव्यबुद्धा अबुद्धाः।

सूर्य्यस्त्वेतानुषसि गगनाद्भूशयानेत्य नित्यं,
पद्मोद्द्योतैस्स्वसकलकरैर्बोधयत्येव धीरम्।
प्रत्यग्राश्च प्रकृतितपनास्तीक्ष्णपादैः प्रहृत्य,
व्रीडा नैषां, न मरणभयं, विस्मयो न, स्मयो न॥

आख्यायिका—

# अश्रुप्रहारः

श्री मुकुन्दीलाल द्विवेदी, शास्त्री, हरद्वारस्थः ।

( १ )

अहं लता च समुद्र-दुकूले आयस-यूपाश्रयौ अस्ताचलगामिनं भगवन्तं मरीचिमालिनमवलोकयन्तावास्ताम् । आसञ्छान्ता दिशः, स्वच्छं नभः, पुरतो वीचिचित्रितानन्तपारावारः, नभसि कतिपया उड्डीयमानाः समुद्र-विहङ्गमाः, जीवनस्य यं मधुमयस्वप्नमेको युवा कल्पयति स मूर्तिमानिव मम प्रत्यक्षमासीत्, अधुनान्वभवमात्मानमतिसुखिनम्, नासीच्चिन्तालवोऽपि ।

सहसा शान्तिमपनयन्ती लता ललितया गिरागादीत्—"पश्य, अनिल ! पक्षिण एते कथं प्रशान्तस्वान्ता उड्डीयन्ते । यथा नैषां कष्ट-कणोऽपि" । आसमहं क्षितिजस्य पारे द्रष्टुं प्रयतमानः । अन्यदेव किमपि चिन्तयन्नहमवोचम्—"सत्यम्, वस्तुतः" ।

"यदीश आवाभ्यामपि द्वौ द्वौ मनोहरौ पक्षौ दद्यात्; तदावामपि शान्तेऽस्मिन्नाकाशेऽत्यन्तमुत्पतेयाताम्" । आवां पुनः समासमास्ताम् ।

"अनिल ! शृणोषि किमपि ?" शिशुरिव ममांसन्यस्त—भारा लता जगाद ।

"आम्, कथन्न ?" सावहितः स्पष्टं श्रोतुं प्रयतमानोऽहमुक्तवान् । कुत्रचिन्नातिदूरं केनचिद्गीयते स्म—"प्रियतम ! एहि, वस च मम मनसि ( बालम आय बसो मोरे मन मे )।" आसीन्मधुरो ध्वनिः । स्वरस्यारोहणावरोहणेन साकमावयोरपि चेतश्चञ्चलमभूत् । स्वहस्ते गृहीतो मया लता-हस्तः ।

अस्तमितो गभस्तिमान्, तमस्ततिरपि तन्वती अदृश्यत, अहमब्रुवम्—"बहुकालो जातोऽतः प्रस्थातव्यम्" ।

मार्गे लता-गृहे तां परित्यज्य समागतः स्वगृहम् । आनीतं क्षणान्तर एव महाराजेन ( पाचकेन ) भोजनम् । भुञ्जत्येव मयि तेनोक्तम्—"श्रीमन् ! क्षन्तव्योऽपराधः, किमपि पृच्छामि ?"—

महाराजो मत्पितृनियुक्तो विश्वस्तो भृत्यः, नाम्ना बद्रीति ।

अहमवोचम्—"स्वैरमाचक्ष्व यदस्ति वक्तव्यम्" ।

"बाबू जी ! विवाहं करिष्यति न वा भवान्" ।

"भद्र ! सर्वमेतज्जगतो वैचित्र्यम्, भावी चेत्त द्भविष्यति" ।

"श्रीमन्नद्य सुमेरुर्मिलितस्तेन चाऽहमुक्तो यल्लताकुमार्या उद्वाह-विषयिणी वार्ता भवतैव साकं सम्भविष्यति" । सुमेरुश्चाऽस्ति लतागृहे भृत्यः ।

"किन्तेऽनेन प्रयोजनं ? गच्छ, कुरु करणीयम्" स्वान्तौत्कण्ठ्यं गोपयन्नहमकथयम् ।

मम कटुव्यवहारमालोक्य स शनैस्तूष्णीक एव गतः । अहमचिन्तयं यदि सत्यमेतत्, न मत्तः कश्चिद्भाग्यवान् । मन्दं मन्दमहमगायम्—"भवेद्भव्यं मे भवनैकम् [ इक बंगला बने न्यारा" !! ]

( २ )

व्यतिक्रममाणान्यासन् सुदिनानि, एकदा शयितुमुद्यत एव सहसा केनचिदाहूतोऽशृणवम्—"ड्राक्तर ( डाक्टर ) महाशय ! ड्राक्तर महाशय !"—प्रतीयते परिचितः स्वरः । आज्ञापयं बद्रिणम्, पश्य, को बहिस्तिष्ठति ?

"अस्ति सुमेरुः श्रीमन् !" आगत्य तेनाऽहमुक्तः । "—कथयति रोगाक्रान्ता लतादेवी, आहूतो भवान्" ।

"का ? लता हि रोगाक्रान्ता !! प्रातरेवागमम् तत्समीपे, आसीत्सा सुस्था, किमेतदियतैव कालेन" ।

अपृच्छम्—भगवन् ! ब्रवीति मध्यन्दिने पूर्वं शिरसि वेदना जाता, पश्चात्सायमेवातितीव्रज्वरेणाऽऽक्रान्ता, अत आहूतो भवान्

"अस्तु, कथय, स गच्छेत्, सत्वरमागच्छामि"

परिहितानि वस्त्राणि, भेषज-मञ्जूषायां निहित-ञ्चावश्यकं वस्तुजातम्। तथा च मृत्तरे (मोटरकारे) समारुह्य सत्वरं लता-गृहं प्रस्थितः। तत्र गत्वा यत्किञ्चिदपश्यन्तेन अभवमाकुलः, आसीदुष्णो लताया सर्व-देहः, अक्षिणी निमीलिते आस्ताम्, इतस्ततो विलुठति, आसीच्च नाड्यास्तीव्रा गतिः।

"लते पुत्रि! आयातोऽनिलः, उन्मीलय क्षणमक्षिणी" लता-जनकेन श्रीनिरञ्जनमहोदयेन ससमाश्वासनमुक्तम्।

परिवृत्य तयाऽहं दृष्टः। भेषजं पुरस्कृत्याऽहमुक्तवान्—"पिबौषधम्" पीतमौषधन्तया। अर्धहोरानन्तर एव दृष्टो मया तापमाप-यन्त्रेण शरीर-तापक्रमः, अथासीन्मन्दो ज्वरः, नाड्या गतिरपि, शान्तं च हृदयम्। एतस्मिन्नर्धहोरासमय एव अभूद्विविधो वार्तालापः। श्रीनिरञ्जन-महोदयेन पृष्टोऽहम्—"अद्यत्वे कार्यन्तु सम्यक् चलति? यदीदानीं ते पितृमहोदयोऽभविष्यत्तदात्यर्थं प्रसन्नत्वमैष्यत्। प्रायः कथयन्ति स्म ते 'यन्मेऽनिलो भविष्यति एकदा विख्यात-चिकित्सकः, अस्ति स मेधावीति'। अनिल! आसंस्ते बाल्यादेव मे वयस्याः"—इत्यादि......। अथ सार्धदशवादनसमयो जातः, लताऽपि सानन्दं सुप्ता, आज्ञामधिगम्याऽहमपि गृहं प्रतिनिवृत्तः।

( ३ )

अतीता दश दिवसाः, लता तथैव रुग्णास्ति। अहमेव चिकित्सकः। नित्यवदद्यापि लता-पर्यङ्क-पार्श्वे आसन्दिकाधिष्ठितोऽचिन्तयम्—किन्नाम जीवनम्? अत्र जीवने मानव एकाकी जायते, म्रियते च। जीवनस्य दुःखं सुखं चासमानं समेषाम्, किन्तर्हि कारणं यदकाल एव काल-कवलिता जना अधिकांशतो दुःखमेवानुभवन्ति। सुखेन त एव जायन्ते, त एव च सन्तोष-तुष्टा येषां विचाराः क्रियायां परिणताः, अथवा येषां मधुराभिलापाः पूर्णत्वमुपगताः। अल्पीयसि समय एव लता सर्वतोभावेन मे भविष्यति, कियान् अहं सुखी स्याम्, [illegible] धनमस्त्येव, गरिष्ठा च प्रतिष्ठा, केवलमपेक्ष्यते एको जीवन-सहचरः, यो मम सुखे सुखं दुःखे दुःखञ्चान्वीत, सा लतास्त्येव, तामवाप्य जीवनं सफली करिष्यामि, सुखावाप्तिरेव जीवनस्य चरमं लक्ष्यम्, परं "स्वागतम्! एतु, आस्यतामास्यतां वैद्यराज, चिराद्दृष्टोऽसि" सहसाऽश्रौषं वाचूनिरञ्जनस्य स्वरावलिम्। बहिरागत्य च दृष्टं यद्वैद्यो हरिरामः समागतः। एष हि नगरस्य लब्धप्रतिष्ठोऽयः, सम्यगेनं वेद्मि, बहुशो गतश्चाहमस्य गृहे, जात्या द्विजः। अहमचिन्तयम्—वैद्योऽयं कथं कुतः मध्ये समापतितः, स्यादेभिर्निरञ्जनमहोदयैर्घनिष्ठा मैत्री, किन्तु एको द्राक्तरः चिकित्सतीति समकार्यत्वान्नोचितमस्यागमनम्—तथा चाहूतोऽहं निरञ्जनमहोदयेन, सत्यपि मित्रत्वे नायमाहूत इत्यपि विचारितव्यमनेन—इत्याद्यनेकविचाराः स्वार्थभरे तामसे मम मानसेऽजायन्त। कथं मया निर्णीतं यदस्य चिकित्सारम्भ एव भवेद् दुर्लभं लता-दर्शनम्।

वैद्योऽब्रवीत्—"आं, पञ्चपदिनेभ्यो बहिर्गतवानासम्, ह्य एव समायातः, आकर्णयञ्च लतास्ति रुग्णा, अत एवागतः, कथय का दशा साम्प्रतम्?" समेता वयं लता-समीपे। "नास्ति कश्चिद्विशेषो लाभः, चिकित्सा तु भवत्येव"—उत्तरितं निरञ्जनेन।

"चिकित्सा तु भवतामेव द्राक्तर-महाशय!" अप्राक्षीद्वैद्यः। ओमिति स्वीकृतवानहम्।

"आम्" शिरःकम्पयन्नुवाच वैद्यः—"कः कृतो रोगनिर्णयः?"

"आन्त्रिकज्वरः ( Typhoid )" भृशं मनसि क्रुद्धोऽहम्। वैद्येन रोगिणी दृष्टा। उत्थाय बहिरागतोऽहं यूपाश्रयस्थितोऽचिन्तयम्—स्वार्थाय जनः आत्मस्वरूपं विस्मृत्य स्वार्थसिद्धावेव यतते। सहसाकर्णयम् वैद्य-स्वनम्, कथयतेस्म एवन्तेन निरञ्जनमहोदयः—"शृणु, एषां द्राक्तराणामौषधिषु नास्ति मे विश्वासः, अथ यथेहसे! पश्यतु न, पञ्चपदिनानामस्ति कथा, आसीद्रुग्णो रायसाहबगुलाबचन्द्रस्य कनिष्ठो हि पुत्रः, नगरस्थविख्यातानां समेषामपि द्राक्तराणां चिकित्सा जाता, परं प्रतिदिनं क्षीयमाण एवासी-



विद्यावारिधिः श्रीसत्यनारायण शास्त्री, भिषक्-शिरोमणिः
[ प्रिन्सिपल-आयुर्वेद-कालेज, हिन्दू-विश्वविद्यालय, काशी ]



विद्यानिधिः श्री बलदेव मिश्र महोदयः,
दरभङ्गा राज—प्रधान पण्डितः



महोपाध्यायः श्रीरेवाशङ्कर मेघजी शास्त्री, देलवाड़ाकर
प्रधानाध्यापकः देवीदास-लल्लू भाई-
संस्कृत-पाठशाला, बंबई



श्री १०८ आचार्याः श्रीभागवताचार्याः, अहमदाबाद

श्री मोतीराम वेलजी शास्त्री,
दर्शन-केशरी, बंबई



द्राक्तो बाल:, ईशकृपातोऽहं स्मृतोऽगमम्, दत्तवाँश्चौषधम्, परेशकृपात: स साम्प्रतं क्रीडति। लतायै अपि देहि मे भेषजम्, त्रिभिरेवाऽहोभिर्न भवेच्चेत् लाभस्तर्हि नाम त्याग: क्रियते, कुलपरम्परया चिकित्साम:, कश्चित् !!

नाशकमभिकमाकर्णितुम्, वृद्धः क्रोधः, निरञ्जनबाबूं प्रति अपि न शक्तोऽहमेतत्कथयितुम्, अन्तर्दग्ध इवासम्, नातिसमयं तत्र स्थित:, प्रस्थितो गृहम्, कस्मिंश्चिदपि कार्ये नालगच्चेत:, क्रोधाकुलोऽहमशोचिषम्—यच्चिकित्साक्रमे हस्तक्षेपं कर्तुं कस्तस्याधिकार:, पूर्वमप्याचरितमनेनैवं द्विशस्त्रिश:, एवं शान्त्या तु नगरेऽत्र वासोऽपि कठिन एव, नहि ! नहि ! नैवं कदापि भविष्यति, अवश्यमस्य प्रतिकारं करिष्ये, पश्चात् यत्किमपि स्यात्, एधमान एवासीन्मे कोप: "न जाने किं चिन्तयिष्यति निरञ्जनबाबु:, अथ च लता······आ: !! प्रभो ! बलं देहि, येनाऽहं लतां दुष्ट-हस्ताद्रक्षेयम्, ओ:, युज्यते कथन्न एवं करोमि, न चेद्दंश: कुतो हि वेणु-स्वन:, परं···परं किं युक्तमेतत्, इत्थमेव मे कार्यं सेत्स्यति लता-रक्षणञ्च भवेत्, अस्तु,नाश एव वरम्, पर्याप्ता एकैव मात्रा, को द्रक्ष्यति" मन्त्र-मुग्ध इव उदतिष्ठम्, प्रविष्टश्च स्वभैषजागारम्, विष-मञ्जूषात एकां काचिकां ( Phial ) मादाय वैद्यहरिरामगृहं प्रस्थित:।

"कुत्र वैद्य-महाभाग: ?" पृष्टो मया भृत्य:।

"गतवन्त: कुत्रापि, सम्भाव्यते साम्प्रतमेवागमनम्, उपविश्यताम्" सुखासन्दिकां (आरामकुर्सी) ददता भृत्येनोक्तम्। अहमुपाविशम्, हृदये वातूल इव उत्थित:, कथं स्वकार्यं साधयेयम्, अग्रे रक्तचिटिकाचित्रिताऽऽसीदेका वृहत्काचिका ( बोतल ) अपृच्छम्-सङ्केतयन् "किमस्याम् ?"

रोगिणामासन्दिकां मार्जयन्नाह भृत्य:-"वैद्यमहोदयैरेव काचिदौषधि: प्रत्यहं भोजनानन्तरं पीयते, अद्य नूत्ना वृहत्काचिका निष्कासिता स्यात्सन्ना समाप्ता।"

"अस्तु" पुनरभवं तूष्णीक:, सहसाजनि मनस्येको विचार: "पानीयं पातुमिच्छामि, आनय।"

"यथाज्ञापयति देव: !" सदनं प्रविष्टो भृत्य:।

क्षणमपश्यं परित:, दिष्ट्या नासीन्मे कश्चित्, मत्कर:—'कोट'स्थित-भयङ्कर-विषकाचिकोपरि आसीत्, अवसरत्यागो नोचित इति शनै: कम्पित-करेण-वृहत्काचिकामुखमुद्घाट्य स्वकाचिका-विषं तत्राऽपातयम्। कीदृशो भयङ्कर आसीत्समय: ? यदि केनापि दृष्टो भवेयम् ? दीर्घं नि:श्वस्य लोचने चानुन्मील्य तथैव सुखासन्दिकायामुपविष्ट:, मत्कार्यं सिद्धम्, परं हृदयमथापि कम्पते स्म।

"श्रीमन् ! पिबतु पानीयम्" उवाचागत्य भृत्य:। पाणिना पयो गृहीत्वाऽपिबम्। पीत्वा मुखं मार्जयँश्चाकथयम्—"वक्तव्यो वैद्यमहाभाग:, द्राक्तर: समायात आसीत् केनचिदावश्यककार्येण, श्रुतम् ?।"

"इदमेव वक्ष्यामि।"

प्रतिनिवृत्तोऽहं स्व-सदनम् !

( ४ )

एवमेवातीतं दिनद्वयम् ! सायमहं क्रीडितुं गच्छन्नेवासम्, मृत्तरोऽपि शब्दयितुमारेभे, सहसा द्विचक्रारूढ: ( द्विचक्रं–Cycle ) सुमेरुर्धावन्नागतो दृष्ट:, यानादवतरन् स यथाकथमपि पतनान्मुक्त:।

"द्राक्तर—महोदय ! लतादेव्या सत्वरमाहूतो भवान्" स भृशमुच्छ्वसन्नाशङ्कित इव उवाच।

"कथं, का वार्ता ?" तद्दशा–दर्शनादहमपि साशङ्कोऽभवम्।

द्राक्तर ! अलं बहुना, शीघ्रं चलतु भवान्" वाष्पायिते लोचने आस्तां तस्य, व्यर्थमन्य: प्रश्न:, झटिति क्रीडा-दण्डं दत्त्वा लता-गृहमवाप्नवान्। आसीत्करुणाकलितं समस्तं सदनम्, एकत्र लता-मातारोदीत्, लता-पार्श्वस्थितो निरञ्जनबाबुरपि भृशं रुदन् शिरोधुन्वन्नास्ते, मां विलोक्यैव तेषां रोदन-वेगो द्विगुणोजात:, दृष्टा मया लता-नाडी, सा पूर्वमेव लुप्ता, शीतं चासीत् शरीरम्, नील-वर्णौ औष्ठौ, निमीलिते चास्ताम् लोचने। भगवन् ! त्वयाऽहं लतया वियोजित:, मल्लोचनाग्रे तमसावितमासीत् ...... सविक्रम,

अन्यस्मिन् गर्भागारे गत्वाऽहं शिरो गृहीत्वा आसन्दिकामधिष्ठितो न जाने कियन्तं कालं स्थितः।

"एहि अनिल ! यदासीद्भावि तदभूत्, उत्तिष्ठ !" ममांसं स्पृशन्निरञ्जनवावुराह—

उत्तिष्ठन्नहमप्राक्षम्—किमभूत् लतादेव्यै ?

"किमभूत्, न जाने किमासीत्तस्मिन् भेषजे, एकैव मात्रा दत्ता तदैव विमनायमानत्वमाप्ता, त्वां स्मर्तुं चारब्धा, इतः सुमेरुस्त्वत्सविधे प्रेषितः, ततः सऽत्यजत् प्राणान्"।

तेषा मश्रुप्रवाहः पुनः प्रवृत्तः, नाशकम् द्रष्टुं तेषां तां दशाम्, तदेव भेषजं द्रष्टुमहं पट्टसमीपं गतः। हे ईश्वर! एषा तु सैव रक्त-चिटिका युता वृहत्काचिका, यत्राऽपातयमहं तद्विषम्, भ्रममपनेतुं मया सा हस्ते गृहीत्वा अक्षिणी उन्मील्य दृष्टा, परं सा सैव वृहत्काचिकासीत्, सैव वस्तुतः सैव, तदेव पिधानम्, सैव रक्त-चिटिका, स एव वर्णः, तदेव सर्वं सर्वमपि तदेवासीत्; परं......परं नासील्लता, परमात्मन्! अस्मि हिंसकः? स्वयमेव स्वपादे कुलिशं पातितम्, हस्तात्स्रंसन्ती वृहत्काचिका मया तत्रैव काष्ठपट्टे स्थापिता। अक्षिसमक्षं तम आगतम्, अहं तत्रैव मूर्छितोऽपतम्।

( ५ )

अथ व्यत्यैत् सार्धमासः। गृहीतो राजपुरुषेण वैद्यो हरिरामः। तथैव प्रवहति संसार-प्रवाहः, विस्मियते लता जनैः, परमशक्तोऽहं विस्मर्तुम्, तस्याः मञ्जुलमूर्तिरद्यापि मन्नयने प्रीणयति, पीयूष-चमसमपि तिरस्कुर्वत्तस्या मधु-हास्यमिदानीमपि मदीयमानसं मदयति। कथन्तर्हि विस्मर्तुं शक्नोमि। मज्जीवनेऽपि जातमतिपरिवर्तनम्, नास्ति समीहा कस्यचिदपि वस्तुनः, न च कुत्रापि प्रवृत्तिः, औषधागारमपि प्रायोऽनुद्घाटित-कपाटमेव तिष्ठति, आयान्ति रोगिणः परं निवर्तन्ते। किं करोमि मन एव न लगति, पृच्छन्ति जनाः—किन्ते जातम्—किमुत्तरामि, सर्वं विदित्वाऽपि एवं प्रश्नयन्ति, सत्यं ब्रुवन्ति, इयमेव लोकरीतिः, आसीदेकन्तदप्यहः, यदाऽहमगायम्—"इक बंगला बने न्यारा..." आः, तस्य भित्तिमूलं स्रस्तम्, भवनमपि भग्नावशेषतामगात्। यस्मै पक्षिणे मधुरोद्यानं निर्मितं स विप्रकृष्टमुत्पतितः। अद्याऽहं चिराद्भ्रमणार्थमागतः, तदेवैतत् समुद्र-दुकूलम्, यत्र कतिचिद्दिनपूर्वमहं लता च प्रेम्णः सुन्दर-स्वप्नानचिन्तयताम्।

अस्ति सन्ध्या-समयः, शान्ता दिग्जनित-स्वनाः, अस्तमेति सूर्यः, सहसाऽऽश्रूयत दूरे गानम्—"अथ न व्यतियन्ति दिनानि, मम......( अब दिन बीतत नाहीं, मोरे...)..." आः, सर्वमपि तदेव, ममैवास्था परिवर्तनमिता, तदेव गानम्, स एव स्वरः, परं मय्येव परिवर्तनम्। अभूतामश्रु-पूर्णे अक्षिणी, पिपतिषन्त्यश्रूणि अवरोधयन्नासम्। वहुदिवसानन्तरं मे भग्न-हृदयस्य नीरव-दूताः समायाताः,—लते! लते! यत्र कुत्रापि स्याः, ममाश्रूपहारं स्वीकुरु, नैतान्यश्रूणि जानीहि, अपि तु अस्त्येष मे दुःख-दग्ध-हृदय-सारः—निमीलित-लोचनस्यैव मे पक्ष्म-पर्यङ्क-शायिनोऽश्रुविन्दवः पृथिव्यां निपत्य रजसि निमग्नाः।

---

# मेघदूत-मूल—विमर्शः

बुर्ली श्रीनिवासाचार्यः, 'मधुरवाणी'—सहसम्पादकः

कविकुलगुरोः कालिदासस्य कृतौ मेघदूतं नाम काव्यमनुपमां शोभां पुष्णातीति काव्यामृतरस-पिपासवश्च बहवो रसिका अतिलोलुपाः पायंपायम-तृप्यन्तः परमादरपुरस्सरमसकृदावर्तयन्तो विन्दन्ति किलामन्दमानन्दविशेषम् । परमीदृशस्यातिसुन्दरस्य मेघदूतस्य पुराणेतिहासादिषु मूलतया किमप्याधार-भूतमासीदुत स्वतन्त्रतया कल्पनया कविरेव स्वमनी-षितया निर्ममे—इत्ययं तावद्विचारणीयोंऽश इदा-नीम् । बहवो विमर्शका विद्वद्वरा महाकविरयं केवलया कल्पनयैव विरहिणः कस्यचन यक्षस्य कान्तायै सन्देश-प्रेषणमभिलषतो मेघमेव दूतं भावयतो वक्त-व्यांशमुपवर्णयन् काव्यमेतद्रचयामासेति मन्यन्ते । "माघे मेघे गतं वयः" इति साभिमानमात्मानं प्रख्यापयन् सुप्रसिद्धो मल्लिनाथोऽपि, "कश्चित्कान्ता" इति प्रथमश्लोकव्याख्यावसरे "सीतां प्रति रामस्य हनुमत्सन्देशं मनसि निधाय मेघसन्देशं कविः कृत-वानित्याहुः" इति निवेदयन्, यक्ष-तत्कान्ताविरहादिकं कल्पितमेवेति पर्यायेण निरूपयति । अर्थात्—मल्लिना-थोऽपि कालिदासीय-मेघदूत-मूलमजानन्, तत्संशोधने स्वशेमुषीमनुपयोजयन्, "माघे मेघे गतं वयः"—इति मुधैवात्मानं प्रशशंसेति केचिदाक्षिपन्ति च । हन्त ! तावदत्र वयं निरूपयामः, जगति ये चाऽपि महाकवयो वा यत् किमपि प्रस्तुत्यात्मबुद्धिप्रभावेण वर्णना-चातुर्येण संविधान-सौन्दर्येण कविता कामिनीमलङ्कार-गुणगण-भासुरां पुरतः प्रकाश्य प्रियपाठकानामन्तर-ङ्गाणि सम्प्रीणयन्ति तत् प्रायशोऽतिविस्तृतेषु पुराणो-पपुराणेतिहासेषु कुत्रचिदपि विद्यमानमेव तत्कथानकं भवतीति । तत्रभवान् किल कालिदासः कान्ता-लोलं कमपि यक्षं स्वाधिकार-प्रमत्तं वर्षभोग्येण शापेन कान्ताविरह-दुःखानुभवरूपेण अस्तङ्गत-महिमानमावे-दयाञ्चके मेघदूते । अत्र निरूपितो यक्षः किन्नामधेयः? कस्मिन्वा अधिकारे नियुक्तः? कीदृशः प्रमादोऽनेन रचितः? कोऽवाऽस्य भर्ता? साऽपि का कान्ता किन्ना-मधेया? इत्यादिकं सर्वथा संशोध्यमिति चिरादासी-दस्मन्मनसि । "व्यासोच्छिष्टं जगत्सर्वं" मिति किल वचनं पुराणेषु सर्वमुपलभ्यते इति पुराणेष्वेव संशोध्य-मिति वताऽस्मान् प्रावर्तयत् । एवं प्रयतमानेष्वस्मासु ब्रह्मवैवर्तपुराणे सर्वमुपलब्धमस्माभिरभिलषितम् । तदेव वयमत्र प्रियपाठक—प्रीतये समुपहरामः ।

मेघदूते कश्चिदिति निर्दिश्यमानो यक्षो नाम्ना हेममाली । तस्य चातिप्रिया सुरूपा पत्नी नाम्ना अर्थ-तोऽपि विशालाक्षी आसीत् । यक्षस्य भर्ता तु यक्षराजः कुबेर एव । हेममालीनामा यक्षोऽयं युवा नववध्वां विशालाक्ष्यामत्यासक्तः सुरत-संल्लापैरत्यानन्देन काल-मतिवाहयतिस्म । स च कान्ता-विलास-लोलुपतया एव स्वाधिकारात्प्रमत्तो बभूव । प्रमादे कान्तासह-वास एव कारणमभूदिति जानन् राजराजो भर्ता धनाध्यक्षो कान्ता-वियोग-रूपेण शापेन तं योजितवान् यत् कान्ताविियोगदुःखमसह्यमनुभुज्य पुनः स्वाधिकारे मा प्रमत्तो भवतु, प्रमादे च पुनरसह्यदुःखानुभव-प्रसङ्गः प्रसज्येत—इति भीतिरप्यस्य समुदेतु—इत्ये-तत्कारणादेवेदृशः शापो योजितो यक्षराजेन । अथ तावदस्य अधिकारो वा कीदृशः? तत्र प्रमादोप्यनेन कीदृशः कृतः? इत्ययं विषयो विज्ञायताम्—कुबेरस्तु धनाध्यक्षः, तेनाधिकारे नियुक्तोऽयं यक्षोऽपि धना-व्ययादिकर्मण्येव कमप्यक्षम्यमपराधं कृतवान् स्यात्; अर्थाच्च स्वामिद्रव्यं स्वात्मार्थे बहु उपयुक्तवान् स्यादिति अत एव स्वाधिकारे प्रमत्तो घोरं शिक्षितः स्यादिति न मन्तव्यं प्रियपाठकमहोदयैः । स्वामिनः कुबेरस्य धनोपयोगकर्मणि न सर्वथा नियुक्तोऽसौ । किन्तु अधिकारोऽयमन्य एव । स कीदृशश्चेत् ब्रूमः ।

राजधान्यामलकापुर्यां विद्यमानः कुबेरो विविधैः सौरभ्य-भरितैः कुसुम-समूहैः सुर-श्रेष्ठं शङ्करमाशुतोष-मर्चयति स्म । [illegible] पार्वतीशः परमेश्वरोऽपि परि-

तुष्टः प्रसन्नः सुवृत्तममित्यावेदयति स्म कुबेरं पूजकं पूज्यतमोऽपि महादेवः । धनाध्यक्षोऽयं कुबेरोऽपि शङ्करं विशेषतो धन-व्यय-साध्यानि पूजा-साधनानि असम्पादयन्नेव नाम सुमिष्टभक्ष्यभोज्यादि-परमान्न-सुवर्णालङ्कार-महार्हवस्त्रादीनि सम्पादनायासमकुर्वन्नेव सुलभानि मानससरःप्रभृतिषु प्रदेशेषु उद्भूतानि सुन्दराणि सुरभीणि पुष्पाणि यक्षेण समानाय्य तैरर्चयतिस्म पूजनीयं पिनाकिनम् । तन्मात्रेणैव प्रसीदतिस्म भगवान् त्रिपुरहरः शङ्करः । यत् धनाध्यक्षस्य कुबेरस्य धनरक्षणमात्र-दत्तदीक्षस्य व्ययीकरणाधिकारादक्षस्य यक्षराजस्य योग्यतां विदित्वा हरोऽपि न तस्मादधिकमाकाङ्क्षतेस्म । युक्तमेवैतत् । अत एव दानभोगरहितायाः सम्पदोऽधीश्वराः पुराणेषु "यक्षवित्ताः पतन्त्यधः" इति अवहेल्यन्ते धार्मिकैः । यक्षेश्वरस्य तथा यक्षाणामपि वा रक्षण एवाधिकारो नेतरत्र । अस्त्विदमप्रस्तुतम् । प्रकृत मनुसरामः ।

श्रीमान् यक्षराजः कुबेरो मानससरोवर-प्रभृतिप्रदेशेभ्यो मिलिन्द-लोभनीय-सौगन्ध्य-भरभरित-कुसुम-समूहानयनत्वे यक्षमेतं हेममालिनमादिदेश । प्रतिदिनं पूजा-समयतः प्रागेव समुपाहृत्य समर्पयतिस्म स्वामिने धनाधिपतये । महेश्वरार्चनोपयोगिकुसुमसमूहानयनमेव हेममालिनो यक्षस्याऽयमधिकारः । यावन्न नववध्वा सौन्दर्यरूपोपहसित-रतिरूपया विशालाक्ष्या सङ्गतस्तावदयं हेममाली यथासमयमुपपादयन् पूजा-साधनं, अप्रमत्तः प्रशंसनीयचरितः स्वाधिकारानुरूपमनुग्रहमपि कुबेरतः समपादयत् । तेन यक्षराजोऽपि हेममालिनि प्रसन्नश्चासीत् । यथाऽयं विशालाक्ष्या कटाक्ष-प्रक्षेप-भाजनीभूतस्तथातथा तद्विरहमसहमानः कुसुमानयनाय गच्छन्नपि समयमतिवाहयन् प्रसादमाचरन् स्वामिरोषपात्रत्वमयासीत् । यः कोऽपि वा स्वामी प्रमाद्यन्तं स्वाधिकारे नियुक्तं न क्षमते । अद्य श्वो वा पुनरयं यथासमयमुपागच्छेत्, स्वाधिकारानुरूपमाचरेच्च-इति हेममालिनमशिक्षयन् धनाध्यक्षः कंचित् कालमुपैक्षतैव ।

एकदा सा विशालाक्षी समपृच्छत् हेममालिनं प्रियवल्लभं—क भवान् सम्भ्रान्त इव अकाले एव मामपि रमणीं विहाय कुतो यास्यतीति । स प्रोवाच-प्रिये ! मधुरवाणि ! राजराजस्य कुबेरस्यानुज्ञया त्रिपुरहर-हरार्चनाय सुरभिकुसुमाहरणाय नियुक्तश्चिरादेव । अतः प्रतिदिनमहं मानससरःप्रभृतिषु प्रदेशेषु परिभ्रम्य सुरभीणि कुसुमान्युपहर्तुं गच्छामीति । अतश्च तावान् विरहः कथमपि वा क्षन्तव्यो निरुपायतया इति च समन्दहासं व्याहरन् विशालाक्षीं समाश्वासयाञ्चक्रे । सोऽपि विरहमसहमानः कुसुमान्यानीय प्रतिदिनं स्वगृहमागत्य पुनः प्रियया सह संल्लपन् कंचित् कालं विलंब्य कुबेरभवनमुपगच्छतिस्म । एवं काल-विलम्बमसहमानो यक्षराजः परिचारकानितरानपृच्छत्-कुत एवमयं हेममाली करोतीति । विदित-तदीय-वृत्तान्ताः यक्षाः, यथास्थितं वृत्तमावेदयन् । तत एव कुपितः कुबेरो यन्मूलोऽयमपराधस्तदुन्मूलनेन परिहरणीय इति विचार्य तं 'कान्ताया विरहो भवतु' इति शशाप । पुराणे ब्रह्मवैवर्ते एतावदेव वृत्तमावेदितम् ।

हेममाली-विशालाक्ष्योः प्रेमातिशयेन केचिदेवं कल्पयन्ति । महादेवपूजार्थमुपनीतानि सुरभीणि कुसुमानि अनाघ्रातानि प्रथमं विशालाक्षी-मनोविनोदनाय केश-पाशेषु प्रयुज्य ततस्तदनुज्ञातो हेममाली, कपालमालिनः पूजार्थे समर्पयतिस्म किलाऽलकाधिपतये—इति ईदृशोऽतिरसिकः कान्ता-लोलुपोऽतिसुरभीणि कुसुमानि विशालाक्ष्यै असमर्प्य कथमन्यत्रोपयुञ्ज्यात् । निर्माल्यप्रायाणि पर्युषित-रूपाणि सम्प्रेक्ष्य क्रुधा प्रज्वलन् यक्षराजः प्रायः शप्तवान् स्यादिति । अन्यथा कथमेवंविधं दारुणं शापं प्रयच्छेद्यक्षराजः—इति आस्तां तावत् । कथं वा भवतु । किंतु यक्षो हेममाली कान्ताविरहगुरुणा वर्षभोग्येण शापेनास्तङ्गमितमहिमा बभूव । यच्च राजशापेनैवाऽयं हेममाली कुष्ठरोगाभिभूतश्चेति पुराणे ब्रह्मवैवर्ते वर्ण्यते । परं कविकुलगुरुः कालिदासः स्वोद्दिष्टप्रस्तावस्यानुपयुक्त-इति श्वित्रीत्व-विषयं पर्यत्यजादिति ज्ञायते । विरहानल-दन्दह्यमान-मानसं

हेममालिनं कालिदासः कश्चिदिति निर्दिश्य कान्तायै सन्देशं प्रेषयितुमभिलषन् मेघं दूतत्वेन कल्पयित्वा काव्यमेतद्रचयामासेति । पुराणे तु शप्तो यक्षः श्वित्री, विरही च देशे देशे सञ्चरन् मार्कण्डेयमहर्षेः पुण्याश्रममुपागच्छत् । तं च पृष्टवान् कथमहं सुखी निरुजश्च स्यामिति । सोऽप्याह, आषाढे कृष्णपक्षे या एकादशी सा योगिनी नाम्ना कथ्यते । तामुपोष्य, भगवन्तमाराध्य पालय व्रतम् । तेन सन्तुष्टो रमापतिः कुष्ठात् त्वां मोचयति, इष्टया कान्तया ते विशालाक्ष्या योजयति चेति स हेममाली यक्षोऽपि तथा कृत्वा रोगान्मुक्तः कान्तया संयुक्तश्चेति निरूपितम् ।

अत्र तावत् हेममाली, मार्कण्डेयवचनादेकादशीव्रतमाषाढकृष्णपक्षे पालयामास तेन, च मुक्तो बभूवेति निरूपणेन च शापान्तसमयः आषाढावधिक एव स्यादिति भाति । परं कालिदासः "शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ" इति निरूपयन् कार्तिकमासावधिकः शाप इति सूचयति । तेन वियोगदुःखमष्टौ मासाननुभूय ततो मेघमवलोक्य आषाढस्य प्रथमदिने सन्देशदानमभ्यलपदिति च निरूपयति । एतेन कविकुलगुरुः कालिदासः स्वमनोरुचिरं पुराणगतं विषयमन्यथाकृत्वा यक्षयक्षिणीविरहादि स्वकपोल-कल्पितमेवेति भासयन् कश्चिदित्येव निरदिशदिति ज्ञायते । आर्याः, प्रियपाठकोत्तमाः !! हेममालिनो यक्षस्य विशालाक्षी-रतिलोलुपस्य, कान्ता-कामुकस्य, कुसुमानयनाधिकारप्रमत्तस्य, कान्तावियोगरूपस्य कुबेरशापस्य च ब्रह्मवैवर्ते निरूपणात् कालिदासीय-मेघदूत-कथितो यक्षः कश्चिदिति निरूप्यमाणो हेममाली एव भवति इति निवेदयामो वयम् । एतदाधारतया ब्रह्मवैवर्तगतान् कांश्चित् श्लोकान् उदाहरिष्यामः ।

अलकाधिपतिर्नाम्ना कुबेरः शिवपूजकः ।
तस्यासीत् पुष्पवटुको हेममालीति नामतः ॥
तस्य पत्नी सुरूपा च विशालाक्षीति नामतः ।
स तस्यां स्नेह-संयुक्तः कामपाश-वशं गतः ॥
मानसात् पुष्प-निचयं आनीय स्वगृहे स्थितः ।
पत्नी-प्रेम-समायुक्तो न कुबेरालयं गतः ॥
कुबेरो देव-सदने करोति शिव-पूजनम् ।
मध्यान्हसमये राजन् पुष्पाणि प्रसमीक्षते ॥
हेममाली स्वभवने रमते कान्तया सह ।
यक्षराट् प्रत्युवाचाथ कालातिक्रम-कोपितः ॥
कस्मान्नायाति हे यक्षा ! हेममाली दुरात्मवान् ।
निर्णयः क्रियतामस्य प्रत्युवाच पुनः पुनः ॥

यक्षा ऊचुः—

वनिता-कामुको गेहे रमते स्वेच्छया नृप ! ।
तेषां वाक्यं समाकर्ण्य कुबेरः क्रोध-पूरितः ॥
आव्हयामास तं तूर्णं वटुकं हेममालिनम् ।
ज्ञात्वा कालात्ययं सोऽपि श्रम-व्याकुल-लोचनः ॥
आजगाम नमस्कृत्य कुबेरस्याग्रतः स्थितः ।
तं दृष्ट्वा धनदः क्रुद्धो रोषसंसक्त-लोचनः ॥
प्रत्युवाच रुषाविष्टः कोपाद्विस्फुरिताधरः ।
रे पाप ! दुष्ट ! दुर्वृत्त ! कृतवान् देव-हेलनम् ॥
अतो भव श्वित्रयुक्तः वियुक्तः कान्तया सदा ।
अस्मात् स्थानादपध्वस्तो गच्छ स्थानमथाधमम् ॥
इत्युक्ते वचने तेन तस्मात्स्थानात्पपात सः ।
महादुःखाभिभूतश्च कुष्ठ-पीडित-विग्रहः ॥........

अग्रतश्च परिश्रमन्नसौ मार्कण्डेयाश्रमे महर्षिणा उपादिष्टो व्रताचरणेन रोगमुक्तः कान्तया संयुक्तश्चेति वर्तते । अत्र शापो वर्षभोग्य इति च न निरूपितः । स व्रत-प्रभावेण वर्षभोग्य एवाऽभूदिति वा कविकल्पितो वा स्यादिति मन्तव्यम् ।

मान्याः प्रियसुहृदः पाठकोत्तमाः !! श्रीमतः कविकुलगुरोः कालिदासस्य कृतेर्मेघदूतस्य ब्रह्मवैवर्तोदाहृतः संक्षिप्त इतिहासो मूलभूतः स्यादिति यदत्रोपन्यस्तमस्माभिस्तदनुवाच्य सन्तुष्यन्तु भवन्तः इति सप्रश्रयमभ्यर्थ्य विरमामो विस्तरात् ।

# पशुपति-रत्नमाला

प्रेषकः—डॉ० उमेश मिश्रः, एम० ए०, डी० लिट्, प्रयागविश्वविद्यालयाध्यापकः

का भूषा योषाणां ?
किञ्च शिशोः कण्ठभूषणं भाति ?
निर्मल-मुक्ता-माला
पशुपतिरचिता च रत्नमालैषा ॥ १ ॥

कः कुल-कमल-दिनेशः ?
सति गुण-विभवे च को नम्रः ?
कस्य वशे जगदेतत् ?
प्रियवाक्सहितस्य धर्म-निरतस्य ॥ २ ॥

परधन-हृदय-हरा का ?
सत्कविता सरस-वनिता च ।
कं न स्पृशति विपत्तिः ?
वृद्ध-वचोवर्त्तिनञ्च दातारम् ॥ ३ ॥

कस्मै स्पृहयति कमला ?
निरलस-चित्ताय नीति-वित्ताय ।
त्यजति च कं सा सहसा ?
द्विजगुरु-हरि-निन्दकञ्च सालस्यम् ॥ ४ ॥

किमगाधमम्बुधेरपि ?
खल-चरितं शब्द-विद्या च ।
क खलु विधेयो वासः ?
सज्जन-निकटेऽथवा काश्याम् ॥ ५ ॥

कः परिहार्य्यो देशः ?
पिशुन-वृतो दुष्ट-भूपस्य ।
केनाऽशोच्यः पुरुषः ?
प्रणत-कलत्रेण धीर-पुत्रेण ॥ ६ ॥

इह भुवने कः शोच्यः ?
सत्यपि विभवे न यो दाता ।
किं लघुताया मूलं ?
प्राकृत-पुरुषेषु या याञ्चा ॥ ७ ॥

रामादपि कः शूरः ?
स्मर-शर-निहतो न यश्चलति ।
किमहर्निशमनुचिन्त्यं ?
केशवचरणौ जगच्च लघुता च ॥ ८ ॥

के खलु नयन-विहीनाः ?
परलोकं ये न पश्यन्ति ।
वद के बधिरतमाः स्युः ?
हित-वचनं ये न शृण्वन्ति ॥ ९ ॥

कः प्रथितः खलु खञ्जो ?
व्रजति न यो वार्धके तीर्थम् ।
को मूकस्तव विदितः ?
प्रियवचनं यो न भाषते सततम् ॥१०॥

कः परिहार्यो रोगो ?
यदिदं लौल्यञ्च जिह्वायाः ।
को वा हस्त-विहीनः ?
सम्पदि सत्यां न यो भुङ्क्ते ॥११॥

का च सभा परिहार्या ?
हीना या वृद्ध-सचिवेन ।
किं गहनं भुजगादपि ?
स्त्री-चरितं राज-सेवा च ॥१२॥

ब्रूहि स्पर्शमणिः कः ?
स्वभ्यस्ता निर्मला विद्या ।
विषमिव विषमतरं किं ?
प्रच्छन्नं यत्कृतं पापम् ॥१३॥

किं नलिनी-दल-चपलं ?
यौवनधनमथायुश्च ।
प्राणादपि किं सरक्ष्यम् ?
स्वधर्मदार्ढ्यञ्च सत्यञ्च ॥१४॥

कश्च सहायः सुदृढो ?
निष्कपटेनार्जितो धर्मः ।
इह को नरक-निवासी ?
नव-नीता यस्य दृश्यते भार्या ॥१५॥

किं श्री-विनाश-मूलं ?
स्त्री-स्वातन्त्र्यञ्च वित्त-वाहुल्यम् ।
को निष्कारण-वैरी ?
पापार्थं यः प्रवर्तयति ॥१६॥

कस्तरति भव-समुद्रं ?
यस्य न केनाऽपि वाध्यते चेतः ।
किं मुक्तेरपि मूलं ?
गङ्गावासो हरेः सेवा ॥१७॥

कः पण्डितः प्रशस्तो ?
झटिति च शङ्का-परिच्छेदी ।
को दहति वंश-मूलं ?
गुरुजन-निन्दा-दवानलो गूढः ॥१८॥

को धर्म-नाश-हेतुः ?
पर-वनिता पर-धनाकाङ्क्षा ।
कुत्र न देयं चेतः ?
पर-हिंसायां परापवादे च ॥१९॥

को धर्मः खलु सुदृढः ?
परजिह्वाच्छेदनं नाम ।
कः सुकृती भुवि जीवति ?
यः खलु पश्चात्प्रगीयते लोकैः ॥२०॥

मरणादपि किं दुःखं ?
पण्डित-वंशेषु मूर्खता विदिता ।
किं पण्डितेन कार्यं ?
मोहलताच्छेदनोद्योगः ॥२१॥

कः कामधेनु-सदृशो ?
निर्व्याजं सेवितः स्वामी ।
को नृपतिः सुख-सेव्यो ?
निर्लोभो वृद्ध-सेवी च ॥२२॥

किं संसारे सारं ?
गङ्गाऽनङ्गारि-सेवनं सततम् ।
पर-द्रव्यैः किं करणीयं ?
देयं विप्राय साधवे सततम् ॥२३॥

निवसतु हृदये श्रीरिव
विशदसुवर्णावनद्धाङ्गी ।
श्रीमत्पशुपतिरचिता ?
समुज्ज्वला-रत्नमालैषा ॥२४॥

---

# अकर्मण्यता

श्रीनारायणपतिः त्रिपाठी,

कर्मण्यता-शिक्षण-पाटवेन,
नीचा असभ्या अपि सम्पदाढ्याः ।
निष्कर्मता-प्राप्त-विशिष्ट-कष्टाः
हा ! भारतीया वहवो मनुष्याः ॥ १ ॥

व्यापारिणो ये मम भारतीया,
वैदेशिकानामनुगा मतास्ते ।
वैदेशिकास्त्वत्र घृतं पिवन्ति,
प्रायो लभन्ते वणिजो न तक्रम् ॥ २ ॥

देशे समस्ते किमु शिक्षिताना,—
मशिक्षितानामपि बुद्धिभाजाम् ।
दारिद्र्यदुखोपहतान्तराणां,
निष्कर्मता घोरतरा तताऽस्ति ॥३॥

कृषीवला निर्वल-शक्ति-हीना,
दीनास्स्वदारिद्र्य-समुद्र-मीनाः ।
अनात्मनीनागत-भार-लीना;
सम्वन्धिसत्कार-विचार-पीनाः ॥ ४ ॥

*चक्र-प्रचारात् स्वकर-स्थितानि,
निर्माय वस्त्राणि जना दरिद्राः ।

---

* चरखा ।

कलेवरत्राण-परायणत्वं,
कथन्न कुर्वन्त्यवकाशिनोऽपि ॥५॥

अकर्मता-मूलनिकृन्तनाय,
उद्योग-वाणिज्य-सुशिल्प-कर्म ।
स्वयं विधेयञ्च विधापनीयं,
ग्रामे पुरे स्वावसथे स्वशक्त्या ॥ ६ ॥

देशाभिमानी निज-देश-शिल्पे,
कृत-व्यवस्थो भुवि सम्भवेच्चेत् ।
देशोन्नति-व्रातपरस्स एव,
यशो-धनोपार्जकतां प्रयाति ॥ ७ ॥

शिक्षापद्धतिरत्र या प्रचलिता सा जीविकार्हा नहि,
प्रायो वैतनिकीं स्ववृत्तिमधुनेहेच्छन्ति ये शिक्षिताः ।
वाणिज्यं लघुशिल्पमल्पमपि नो जानन्ति यस्मात्स्वयम्,
किञ्चित्कर्तुमपि क्षमाः कुशलिनः सन्तु स्वदेशे क्वचित् ८

केचिद्वैतनिका भवन्ति सुखिनः केचिद्धनाढ्याः क्वचित्
केचित्पामर-पुङ्गवाः क्वचिदपि ग्राज्य-प्रजापालकाः ।
स्वव्यापार-विशेष-लाभ-भरिताः केचित्स्वधर्मोद्यताः
प्रायः शासनगौरवाद्धतहृदो लोकाः क्वचित्तादृशाः ॥९॥

केचित्स्वार्थपरायणैकमनसः सम्भाविता बन्धुभिः,
केचिच्छासकगौरवाप्लुतमनस्तोषाधिकारोद्यमाः
केचिद्वञ्चन-तत्परा बहुतरा धूर्ताधिराजाः शठाः,
केचिद्भारत! भारतस्य गुणिता हा! हा! भवत्का जनाः१०

ऋणभर-दलितानां मानहानिं गताना—
मशन-वसन-दुःख-प्राप्तभोगातुराणाम् ।
निजगृहजन-रक्षा-व्याकुल-स्वान्तराणां,
प्रभवति नहि कश्चित्त्राणदः प्राणधारी ॥११॥

पर-पद-दलिता ये दासता-बद्ध-बोधा
कथमपि नहि नीचा उच्चतां प्राप्नुवन्ति ।
प्रभु-गुण-गरिमाणं ख्यापयन्ति प्रयत्नात्,
निज कुल-महिमानं हापयन्ति स्वमौढ्यात् ॥१२॥

---

# रुक्मिणी-सौभग-वर्णनम्

कविपतेः श्रीमदुमापतिशर्मद्विवेदस्य

इत्युक्तवाचि स मुनावमुना सुमेन
यावद्दृशं कुसुमितां समसज्जयत्स्वाम् ।
तावत् प्रिया-प्रहित-लोचनयुग्ममस्मिन्
पुष्पान्तरायितमिव प्रतिबिम्बितं द्राक् ॥
तस्या दृशोर्द्वयमयं प्रतिबिम्बितस्य
व्याजेन वीक्ष्य विभुरात्ममनोरमायाः ।
पुष्पे निखातमिव मामकलोचनाभ्या-
मात्मानुरक्तिमतिसूचयतीत्यवेदीत् ॥
प्रायुङ्क्त यद्यपि न याचनवाचमेषा
देशाटनप्रियमुनावनुमोदमाना ।
प्रीत्या तथापि सकलेहितदात्रदात्त-
त्सन्तानपुष्पमुपहारमिवेश्वरोऽस्यै ॥
सा रुक्मिणी समधिगम्य सुमप्रसादा
हर्षाश्रि[illegible] वपुरुदारमाया ।

कीलाल-सेकमुपलभ्य समुल्लसच्छ्री-
वल्ली-प्रमोद-परिपल्लवितेव रेजे ॥
एनां निरीक्ष्य शिरसाऽतिनतेन तेन
प्रत्यर्पित-प्रणयरूप-सुमोपहारम् ।
संगृह्णतीमथ हृदाहृतपाणिपात्रे
प्रीत्या कदम्बकुसुमायितकान्तिकायाम् ॥
आदाय तं च शिरसाऽथ हृदाऽभिनन्द्य
नेत्रोत्सवीकृतरुचिं सुमनोऽधिराजम् ।
स्वं राजमानवपुषं बहु मन्यमानां
ब्रह्मात्मजो मुनिरुवाच वचो विशिष्टम् ॥
धन्यासि भीष्मकसुते ! भगवत्प्रियेत्ये-
वान्या न मान्यपदमर्हति देवि ! वोढुम् ।
मानातिगामिसुभगत्वविभावनान्या
स्वर्णे सुगन्ध इव ते पतिमान्यतेयम् ॥

भूयः प्रयस्य विविधान् बलदर्प-भाजो
भूपान् प्रभूतबलमप्यभिभूय तेषाम् ।
सौभाग्यशालिनि ! यथाऽस्यमुनाऽऽहृता त्वं
सम्मानिताऽद्य हरिणाऽऽदरिणा तथैव ॥
पत्नीकृते सुरगणाधिपतेः शचीं तां
मान्ये ! न काचिदिदमर्हति सौभगं ते ।
यस्मात्तदेकरमणीयमनन्यलभ्यं
सन्तान-पुष्पमिदमाप्तवती त्वमद्य ॥
अष्टौ प्रियाः प्रकृतयो हि यथा हरेर्या-
स्तासां प्रधानमसि निश्चितमेतदद्य ।
सत्यापि तं भगवतोपहृतं प्रसून-
राजं न लब्धुमिमर्हति यत्त्वदन्या ॥
आरोहतां क्वचन काचिदमुष्य यात्रा-
स्वानन्दिनो हि गरुडासनवामभागम् ।
किन्त्वेतमेतदुपनीतममेयमात्रा-
स्वाप्तं त्वयैव कलये सति ! नाम भागम् ॥
'सत्यापिते'-तिपद-भङ्गिविशेष-वाच्य-
संव्यञ्जिताऽपरवधू-परिभाव-भावाम् ।
भैष्मी-प्रशंसन-परामृषिरा न-वाच-
मालोच्य चेतसि हरिश्चटुल-स्मितोऽभूत् ॥

—[ पारिजातहरणमहाकाव्यतः ]

---

## दीपावलि-स्वागतम् !!!

साहित्य-व्याकरण-मीमांसाऽऽचार्यः, न्याय—वेदान्तशास्त्री श्रीरामजीपाण्डेयः, शास्त्री

क्षुत्क्षामा अनवाप्त-गोपन-पटा आस्माक-बाला इमे
याचन्ते प्रतिसद्म नम्र-वदनाः पैचण्ड-सम्पूर्तये ।
त्वं बाले ! पुनरेपि बालिशतया दीपावलि ! स्वागतं
ब्रूमो वा स्फुटितं हृदन्तरथवा सम्पूरयामो वद ॥१॥

कालेनाऽपि विना कराल-रसना-व्यालोल-कालानले
गच्छन्तो नवयौवनागम-फल-भ्रान्त्या भ्रमन्तो मुधा ।
चिन्ताक्रान्त-नितान्त-तान्त-मनसो जीना युवानो वयं
गीर्वाणत्व-विदूरित-त्रिदशतालीढा वदामो नु किम् ॥२॥

अस्वातन्त्र्य -- भुजङ्ग—जङ्गम— विष – व्याघूर्णितानामयं
हाहाकार-समन्वितो गुरु-रवो भू-मण्डले जृम्भते ।
प्रोद्यद्दीप – शतावलोकित – महालोक—प्रभा—भासुरे !
भूमौ श्रोष्यति,कोऽधुना तव मुदाऽस्मद्व्याहृतं स्वागतम् ३

वैनायत्त – जनार्पितातिविपुल – ज्वाला –ज्वलच्चेतसा—
मार्याणां हृदयेषु दीप्तमधुना दीपावलीनां शतम् ।
लब्ध्वा तत्प्रतिबिम्बतां बहिरहो! व्यामर्दयन्ती जनान्
वारंवारमुपेत्य भारतमरे ! किं मारयस्यातुरान् ॥४॥

दृष्टं हैन्दव-गौरवं भुवि ततं येनेक्षणेन स्फुटं
तेनैवाऽद्य निरीक्षणीयमभवद् ध्वस्तं समस्तं हतम् ।
दृष्ट्वा दुःखमयी भविष्यसि गलद्बाष्पाम्बुपूरानना
तस्मादाः ! कथयामहे "नहि शिवे ! त्वत्स्वागतं कुर्महे" ॥५॥

आयातुं कृत-निश्चया यदि महारौद्रीं तनूं स्वीकुरु
प्रान्तारक्त-विघूर्णमान-नयना निस्त्रिंशहस्ता भव ।
त्रिंशत्कोटि-जनेषु शिक्षण-भरं संचारयस्व स्वयं
"स्वातन्त्र्यं शरणं, वरञ्च मरणं तत्प्राप्तये श्रीमताम्" ॥६॥

त्वां क्रान्ति समुपाह्वयामह इह व्याघट्टयन्तीं जगत्
त्रैवर्णीमतिविस्तृतां धृतवतीं तां वैजयन्तीं करे ।
आलोलाञ्चल-चेल-चञ्चल-चलामालोक्य चाग्रे स्थितां
वक्ष्यामो नत-मस्तका बहुतरं त्वत्स्वागतं स्वागतम् ॥७॥

हुङ्कारैर्गुरु-गर्जनैस्त्रिजगतीमापूरयद्भिः पुरा
यैश्चण्डादि-महासुराऽतुल-कुलं निर्मूलितं सर्वतः ।
तैरेव प्रथमान-मांसल-महावेगे ! महाकालिके !!
हिन्दून् स्मारय पूर्व-गौरवमथोऽस्मत् स्वागतं स्वीकुरु॥८॥

# संस्कृत-साहित्ये हास्य-रसः

कविरत्नम् श्री महावीरप्रसाद जोशी, साहित्याचार्यः, काव्य-कला-निधिः, आयुर्वेद-विशारदः

काव्ये हि रसस्य तावानेवादरो भवति यावान् जीवने देहे वाऽऽत्मनः, कलिकासु विकाशस्य, किरणेषु प्रकाशस्य, चेतसि ज्ञानस्य च। रसं विना निखिलाऽपि कविता तारुण्य-कालिकारुण्यवर्जिता कामिनीव, सुधाकर-विरहिता रजनिरिव, प्रकाश-वियुक्ता तारावलिरिव, कोकिल-विकला रसालकलिकेव, न सम्मानमधिगच्छति, तल्लक्षणं तूक्तामाचार्य-चरणैः—

'विभावानुभावव्यभिचारिसंयोगाद्-
रस–निष्पत्तिः।'

विभावानुभाव-व्यभिचारिभिः, संयोगात्=व्यञ्जनात्, रसस्य=चिदानन्द-विशिष्टस्थाय्यात्मनो, निष्पत्तिः=स्वरूपेण प्रकाशनम्—इत्यर्थः। यथा हि समुद्रेऽनिशं तरलास्तरङ्गा उत्पद्यन्ते, विलीयन्ते च। किन्तु न तरङ्गैः सह कदाचनाऽपि तदन्तःस्थायि सलिलमुद्वेल्लितं–विचलितं च भवति। तथैव काव्यनाट्ययोरपि बहवो विभावानुभावसंचारिभावादय उत्पद्यन्ते, विलीयन्ते च। किन्तु स्थायिभावस्तु न तथा। प्रत्युत स तु यथा सुरेषु इन्द्रः, नक्षत्रेषु चन्द्रः, ऋतुषु कुसुमाकरस्तथैव भावेषु कामप्यनिर्वचनीयामभिख्यां प्रख्यापयति। किन्तु स्थायिनो व्यञ्जनाय विभावानुभाव-व्यभिचारिणामपि नितान्तमुपादेयता दरीदृश्यते, यथा मदन-विकाशाय कुसुमाकर-चन्द्रप्रकाशादीनाम्।

येन स्थायिभावः सूक्ष्मतयाऽऽविष्क्रियते स विभावः। येनाऽविर्भूतस्य तस्यानुभावः कार्यते सोऽनुभावः। येनाऽनुभूतोऽयं सर्वत्र संचार्यते स व्यभिचारी। इति लक्षण-लक्षितैः सहायकैरभिव्यक्तः स स्थायिभाव एव रस-संज्ञां प्रपद्यते।

काव्ये हि श्रृङ्गार-हास्य-करुण-रौद्र-वीर-भयानक-बीभत्साऽद्भुत-शान्त-भेदेन नव रसा भवन्ति। तेषु हास्यरसो हि कामपि विचित्रां चमत्कृतिमादधाति। हृदये हि यदाऽऽनन्द चन्द्रः सकलाभिः कलाभिः प्रकाशते, तदाऽऽनन-कुवलयमपि पूर्णतया विकसितं भवति। वस्तुतो हार्दिकानन्द-प्रकाशको हासो हि यत्र स्थायिभावः स हास्यो रसः। अत्र चाऽभिप्रयन्ति रसज्ञाः—

चेतो-विकासो हास उच्यते।

"आत्मस्थः परसंस्थश्चेत्यस्य भेदद्वयं मतम्।
आत्मस्थो द्रष्टुरुत्पन्नो विभावेक्षणमात्रतः॥
हसन्तमपरं दृष्ट्वा विभावश्चोपजायते।
योऽसौ हास्यरसस्तज्ज्ञैः परस्थः परिकीर्तितः॥
उत्तमानां मध्यमानां नीचानामप्यसौ भवेत्।
स्मितं च हसितं प्रोक्तमुत्तमे पुरुषे बुधैः॥
भवेद्विहसितं चोपहसितं मध्यमे नरे।
नीचेऽपहसितं चातिहसितं परिकीर्तितम्॥"

लक्षयित्वा चैवमुदाहरन्ति—

'श्रीतातपादैर्विहिते निबन्धे
निरूपिता नूतन-युक्तिरेषा।
अङ्गं गवां पूर्वमहो पवित्रं
कथं न वा रासभ-धर्मपत्न्याः॥'

'गुरोर्गिरः पंचदिनान्यधीत्य
वेदान्तशास्त्राणि दिनत्रयं च।
अमी समाघ्राय च तर्क–वादान्
समागताः कुक्कुटमिश्रपादाः॥'

संस्कृतसाहित्ये हास्यरस-स्थितिस्तु प्राचीनैव, किन्तु श्रृङ्गार-करुण-वीराणां प्रचारे हास्यो रस उपेक्षित इवाऽभवत्। गौणरूपेण क्वचन दृश्यकाव्ये निबद्धः सत्तां धारयति। यत्र च क्वचन हास्यरसप्राधान्यम्; यथा हास्यार्णव-प्रहसनादौ, तत्राऽश्लीलतायाः स्वतन्त्रं साम्राज्यम्। तेन हि न तत्रापि निर्दुष्टो हास्यरसः। यद्यपि हास्येऽश्लीलादयः क्षन्तव्या भवन्ति, परं सीमानमतिक्रान्तास्तु सहृदय-हृदयोद्वेगजननहेतव एव भवन्ति। हन्त! साम्प्रतिका अपि कवि-सम्राजो न हास्ये रसे दृशं ददति, ये च ददति तेऽप्यश्लीलताम ङ्गीकुर्वन्ति। वस्तुतः संस्कृत-साहित्ये श्रृङ्गारादीनामिव नानुपमा हास्य-रस-रचना दृश्यते। रसश्चाऽयं सर्वोत्तमः। अस्याऽनुभवे यथाऽऽनन्दानुभावो भवति न तथाऽन्यत्र। किन्तु रसज्ञैरुपेक्षितोऽयमद्यापि न तथा प्रौढतामधिगच्छति

यथान्यभाषासाहितीषु गद्यरूपे पद्यरूपे च तथापि हास्य-रस-प्रधाना अभिरूपाः केचन प्रयोगाः पुरस्तादुपायनीक्रियन्ते ।

## ( १ ) वैयाकरणः—

'चित्रमहं योगे भवेदुत्तमः पुरुष एव,
प्राप्ते बहुव्रीहौ स्त्रियाः पुंवद्भावनैष्यते ।
लौकिकमलौकिकं ते विग्रहं विलोके द्विधा,
वचनं त्रिधा ते हन्त ! वृत्तिः पंचभेदा ते ॥
वैयाकरणेन्द्र ! धातु-सम्बन्धे हि प्रत्ययास्ते
भूते तव निष्ठा जातिराकृतितो गृह्या ते ।
संबोधने प्रथमाऽथ कर्मणि द्वितीया ततः
करणे तृतीया चेति पद्धतिर्नवीना ते ॥
( साहित्यवैभवे )

## ( २ ) विषादः

आपाण्डुराः शिरसिजास्त्रिवली कपोले
दन्तावली विगलिता न च मे विषादः ॥
एणीदृशो युवतयः पथि मां विलोक्य
तातेति-भाषण-परा इति मे विषादः ॥

## ( ३ ) शिवं प्रति गौरीवचनम् ।

रामाद् याचय मेदिनीं धनपतेर्बीजं बलाल्लाङ्गलम्,
प्रेतेपान्महिषं, तवाऽस्ति वृषभः फालं त्रिशूलादपि ॥
शक्ताऽहं तव चाऽन्नदानकरणे स्कन्दोऽस्ति गोरक्षणे
खिन्नाऽहं तव याचनात् कुरु कृषिं भिक्षाटनं मा कृथाः ।

## ( ४ ) मत्कुणः

कमले कमला शेते हरः शेते हिमालये ।
क्षीराब्धौ च हरिः शेते मन्ये मत्कुण-शंकया ॥

## ( ५ ) रघुनाथः

साधु साधु रघुनाथ ! यत्त्वया,
पर्यणायि जनकस्य कन्यका ।
कार्यमेतदपरेण दुष्करं,
युक्तमेतदज-वंश-जन्मनः ॥

## ( ६ ) गणिका

चूर्ण-खदिरयुत-वीटी-जनिताऽधर-राग-भंग-भयात् ।
पितरि प्रेते गणिका रोदिति हा तात तातेति ॥

## ( ७ ) उदरबाधा

एकः स एव जीवति हृदय-विहीनोऽपि सहृदयो राहुः ।
यः सकल-लघिमकारणमुदरं न बिभर्ति दुष्पूरम् ॥

## ( ८ ) विष्णुमिष्टरयोस्तुलना ?

विष्णुर्यदि गदाधरो भुवने विख्याप्यतेऽद्य,
मिष्टरोऽपि तर्हि यन्त्रधरः परिचीयते ।
बलशालि-दुर्जन-दलान्तकः प्रसिद्धः स तु,
बलहीन-सुजन-यमोऽयमभिधीयते ॥
चपला-हृदय-धनमुद्गिरन्ति कवयस्तं
अतिचपला 'लेडी'–प्राणेश्वरोऽयं गीयते ।
किमधिकमुच्यतामनेन विष्णु-तुल्यो वर्णः
'चमचम'—चंचद्बूट-युगले निधीयते ॥
( मदीये–मिष्टरमाहात्म्ये )

## ( ९ ) भङ्गातरङ्गाः

हिन्दवः, भवन्तो यमराज-सोदरान् वैद्यान् सकर्णग्राहं नगरान्निःसारयन्तु । यूयं वैद्यैः, नानापथ्यानुपान-सहकृताभि-रोषधिभिश्च किं करिष्यथ ? यतो युष्माकं वधूनां बालानां च रोगाः स्तन-संघर्षण-संमिश्रैस्थूत्कार-पुरस्सरैर्यवन-फूत्कारैर्मस्जि-दद्वारि क्षणादेव क्षयमेष्यति ।

## ( १० ) विदूषकः *

हा धिक् ! अस्य मे प्रिय-वयस्यस्य राज्ञः प्रज्ञाम् । यो मां मूर्खं मन्यते; कथमहं मूर्खः, योऽहं शुद्धां संस्कृतं वाच-मुचारयामि । मम समः किल को लोके ? योऽहं गुरुमेकमपि नाऽकार्षम् सर्वाणि शास्त्राणि च यथावदपठम् । अयं मां कामशास्त्रानभिज्ञं मन्यते, अहंतु कामशास्त्रं, क्रोधशास्त्रं, लोभशास्त्रं, मोहशास्त्रं सर्वमेव जानामि । अयं मया कर्म्म-तोऽपि दमयन्तीमिच्छति, न मामिच्छति । बुभुक्षया मे शुष्क-काष्ठदण्ड इव पृष्ठास्थिपञ्जरं वक्रीभवति । उदरं निर्जलकूप इव दृश्यते । मस्तकं घूर्णते । कटिपटमपि धर्तुं न शक्नोति । सदा लड्डुकं ध्यायति मे मनः । नाऽधिकं खादामि, स्वल्पा-हार एवाऽहम् । यदि ओदनं प्रस्थमात्रं खादामि ततो मोदकं पंच प्रस्थमात्रम् ।

* म० म० देवीप्रसाद-कवि-चक्रवर्ति-कृते, पुण्यश्लोको-दये महानाटके, सुप्रभात-प्रकाशिते ।

## (११) नखक्षतमहाविद्या

'यदि रेतोरोधेनामरत्वं प्राप्यते, यदि च 'ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत' इतिश्रुतेः रेतो-निरोध एव परमार्थ-तस्तात्पर्यं तदा किमिति नपुंसकाश्छागादयो म्रियन्ते।

—सुप्रभाते—होलिकाङ्के

## (१२) शकारः

किमेप समुदाहरामि निजकं बाह्वोः शूरत्वम्।
निःश्वासेऽपि म्रियते अम्बा, सुमृता सीता यथा भारते।

( मृच्छकटिके )

## (१३) चातुर्यम्

चतुरः सखि मे भर्ता यल्लिखति,
च तत् परो न वाचयति।
तस्मादप्यधिको मे स्वयमपि,
लिखितं स्वयं न वाचयति॥

## (१४) कौतुकम्

शृणु सखि ! कौतुकमेकं,
ग्राम्येण कुकामिना यदद्य कृतम्।
सुरत-सुख-निमीलिताक्षी
मृतेति, भीतेन मुक्ताऽस्मि॥

## (१५) कुवैद्यः

नटोऽपि दद्याद् गणकोऽपि दद्यात्,
सम्प्रार्थितः पाशुपतोऽपि दद्यात्।
वैद्यः कथं दास्यति याचमानो,
यो मर्तुकामादपि हर्तुकामः॥

## ( १६ )

चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः।
नाऽहं गतो न मे भ्राता कस्येदं हस्तलाघवम्॥

## ( १७ )

वैद्यराज ! नमस्तुभ्यं क्षपिताशेषमानव !।
त्वयि संन्यस्त-भारोऽयं कृतान्तः सुखमेधते॥

## (१८) मुण्डन-शंकर-संवादः

कुतो मुण्ड्यागलान्मुण्डी पन्थास्तत् पृच्छ्यते मया।
किमाह पन्था ? त्वन्माता मुंडेत्याह, तथैव हि॥
अहो ! पीता किमु सुरा नैव श्वेता यतः स्मर !
किं त्वं जानासि तद्वर्णमहं वर्णं भवान् रसम्॥१९॥

मत्तो जातः कलञ्जाशी विपरीतानि भाषते।
सत्यं ब्रवीति पितृवत्त्वत्तो जातः कलञ्जभुक्॥२०॥

## (१९) प्रश्नोत्तरे

के यूयं स्थल एव सम्प्रति वयं प्रश्नो विशेषाश्रयः।
किं ब्रूते विहगः स वा फणिपतिर्यत्रास्ति सुप्तो हरिः॥
वामा यूयमहो विडम्बरसिकः कीदृक् स्मरो वर्तते।
येनास्मासु विवेक-शून्यमनसः पुंस्वेव योषिद्भ्रमः॥

इत्येवं निदर्शनतया प्रदर्शिताः केचन हास्यरस प्रयोगाः। किन्तु वस्तुतः संस्कृतसाहित्ये हास्यरसस्य किमपि नैयून्य-मेवेति विरोधिवचोऽवरोधाय नियतं यतेलिमं साहित्य-रसिकै-रिति विरम्यते।



[ यद्यपि लेखक-महोदयेन स्वोपलब्धाः हास्य-रस-प्रधानाः श्लोकाः, गद्य-खण्डाश्च सङ्गृहीताः सन्ति, परमेतदतिरिक्तं सुभाषिता-वल्याम्, शार्ङ्धरपद्धतौ, अन्येष्वपि सङ्ग्रह-ग्रन्थेषु सन्ति केचन श्लोकाः। जयपुर-निवासिभिर्महाकविप्रवरैः श्री श्रीकृष्णराम-महोदयैर्हास्यरस-विषयका अनेके ग्रन्थाः निर्मिताः। अस्मद्गुरुचरणैराचार्य-रामावतार शर्म्म-चरणैरपि हास्य-रस-प्रधानं 'मुद्गरदूत' काव्यमेव प्रणीतम्। यस्य-कियानप्यंशः सुप्रभातस्य प्राचीनेषु [illegible] विद्यते। सत्यवसरे पुनः प्रकाशयिष्यामः।—सम्पादकः ]

# महाविद्यालयः

श्री बलदेवप्रसादमिश्रः, काव्यतीर्थः, साहित्यशास्त्री

एकदा मयाऽऽलोचितं मनसि कथं विसंष्ठुलेऽस्मिन्संसारे नाम स्थायि स्यादाकल्पमिति। कथितमपि विद्वल्लब्जैर्नसैवापरिणामि सारम्। कृपणा अपि एतत्स्थापनविशेषयत्नपरा दृश्यन्ते, कपर्दिका-व्यया-भावेन साध्यञ्चेद्यदि। अहन्त्वकृपणोऽतो निश्चितं व्ययेनाऽपि नाम-रक्षा-प्रकाराऽनुसरणम्।

यदा दृष्टं यन्न कार्यं सिध्येत जीर्णशीर्णविचारैस्तदा मया प्रिया निद्रा, प्रतिवेशिगृहे क्षिप्ता, बलाद्विचार-समाधौ शम्भुवत्प्रवेशः कृतश्च। समाधि-साधने च सप्तत्यशीति वा दिव्यवर्षाण्यतिवाहितानि। तदा तु मित्रसाहाय्येनात्युत्तमवार्त्ता-धेनु-लाङ्गूलं पतितं मम कञ्ज-कोमले करे विचार-वैतरणी-तरणार्थम्।

मया दृढीकृतं महाविद्यालय-स्थापनं स्वनामाऽमरतासिद्धये। अतः स्वप्न एव प्रभातकाले महाविद्यालय-निर्माणाय कटिबद्धोऽभवम्। विद्यालयस्थापन एव बहुधनाऽवश्यकताऽतो महाविद्यालयस्थापन-व्ययानुमानन्तु वरमनुमानमेव। तथापि मया कोषे हस्तो निक्षिप्तः दृष्टञ्चैकादशाणकपरिमितं धनम्। भवन्तो जानन्त्येव नैतेन कोणमप्येकं निर्मापयितुं शक्यते मन्महाविद्यालयस्य। अतः प्रार्थितो मया बन्धुवर्गः। ईश्वरो धन्यवादार्हः, येन महती कृपा कृता। यद्यपि तस्यैवाऽनुरोधात्प्रेरणावशाद्वा बन्धुभिर्दत्तम्, तथापि तेषामपि कृपां स्मारं स्मारं दीयतेऽञ्जलिबद्धो धन्यवादः, प्रार्थ्यते च जगद्गुरुस्तेषां दैनन्दिनं कोषवृद्धयेऽपि ?

अधुना तु यद्यहं सुवर्णमुद्राभिरेव महाविद्यालय-निर्माणं कारयामि; तथापि न शेषतां यास्यति कोषः। अस्तु, हरिकृपया निर्माणं जातम्। कियद्धनं व्ययीभूतमिति सम्यङ् न मनसि तथापि प्रयासेनेदमेव वक्तुं पार्यते यदेकोपरि शतत्रयाष्टसप्ततिशून्यानि दत्तानि व्ययाध्यक्षेण।

निर्माणन्तु क्षण एव सञ्जातं किन्तु भवन-पर्यवेक्षणे पञ्चत्रिंशद्वर्षाणि गलितानि।

यदा निरीक्षणं शेषतामगमन्मया हिमालय-कन्दराभिर्वारंवारं सिंहावलोकनं काकावलोकनञ्च कृत्वाऽनेकानेकोदण्ड-पण्डिता अध्यापनार्थमाहूतास्तेषां संख्या-प्येक-दशमलव-न्यूनैवेति महानानन्दसन्दोहावसरः।

ततस्ते महाभागा मया यथाशास्त्रं यथास्थानञ्च नियुक्ताः। त इमे—

(१) श्रीमन्तो मुग्धमणिशास्त्रिणः,कुदर्शनवाचस्पतयः, प्रधानाध्यापकाः।

(२) श्रीमन्तः पाखण्डप्रियधर्माधिकारिणः, धर्मशास्त्राध्यापकाः।

(३) श्रीमन्तः प्राणान्तकप्रसादा भिषक्चूडामणयः, आयुर्वेदशास्त्राध्यापकाः।

(४) श्रीमन्तो लुप्तलोचन-ज्यौतिषाभरणाः, ज्यौतिष-शास्त्राध्यापकाः।

(५) श्रीमन्तः शीलदावानल-नीतिदर्पणाः, नीतिशास्त्रात्मविद्याध्यापकाः।

श्रीमन्तो लुप्तलोचन-ज्योतिषाभरणा यद्यप्यन्धास्तथापि दिने गत्वाऽऽकाशे ग्रहोपग्रहविषयकाविष्कारं कुर्वन्ति, येनैतच्छात्रपिपठिषूणाममोघो लाभो भवति।

उपर्युक्तपण्डितप्रवरागमनानन्तरमेकस्मिन् दिने निशीथे बन्धुवर्गैः सहाऽहं महाविद्यालयोद्घाटनार्थमुपस्थितोऽभवम्।

सर्वाग्रे च मया प्रशंसित ईश्वरो येनानेकगुणगणैः सह मूर्खता-परद्रोह-परनिन्दादि-सद्गुणैरपि विभूषितः संसारः।

ततोऽस्माभिर्नियमावली निर्मिता। सा चैवं विधा-

(१) अस्य महाविद्यालयस्य नाम–"गगनगत-विद्या-वरुणालय—महाविद्यालय" इति।

(२) अस्मिन्विधवा-वन्ध्या-पुत्रा एव प्रवेष्टव्याः।

(३) सार्धैकदिनतोऽधिकवर्षीयाः, ऊनपञ्चाशद्वर्षीयाश्च छात्रा नात्राऽनुमताः।

(४) एकमारभ्य त्रिपलपर्यन्तं नस्यं, कक्षाऽनुसारं मासिकं छात्रैर्देयम्।

(५) रात्रौ द्वादशतः पञ्चवादनपर्यन्तमध्यापन-कार्यं भवेत्।

(६) सज्योत्स्नायाममायां छात्राणां समावेशो भविष्यति।

(७) कृष्णपक्षे युवत्यः, शुक्लपक्षे बालकाः शिक्षां प्राप्नुयुः।

(८) द्वितीया-द्वादशी-सन्धौ प्रतिमासं परीक्षा भवेत्।

(९) वार्षिकी परीक्षा ग्रीष्मे माघमासे भवेत्। सर्वोच्चाऽङ्कप्रापितारः पुरस्कारैर्योजनीया भवेयुः। स्व-स्वमनोभिलषित-पुरस्कारमेव ते प्राप्नुयुः।

(१०) अत्र कक्षा-पञ्चकं भविष्यति। स्त्रीणां कृते द्वे, शेषाश्च बालकानां कृते।

(११) प्रतिपदष्टमीभिन्नायाममायामध्यापनं भवेत्।

(१२) कस्मै अपि प्रयोजनायाऽवकाशो न दीयेत। अनुपस्थिते सति पञ्चक्षणाभ्यन्तरे वारद्वयं नाम-कर्त्तनं स्यात्।

(१३) दण्ड-विधानञ्च 'पिनलकोड' इत्याख्यराज-पुस्तकाऽनुसारेण भविष्यति।

(१४) 'मुहर्रम' इत्याख्याऽवसरे वर्षं यावदव-काशो भवेत्।

(१५) मलमासि चाऽवश्यकीयानध्यायः किन्तु नृत्यसङ्गीतशिक्षा भविष्यति।

(१६) लोभ-मोह-द्रोहादीनि भवसागरस्य-चतुर्दश-कोटि-रत्नानि पिष्ट्वा पेयानि च्छात्रैः।

(१७) विद्यालय-प्रबन्धकाः धूर्त्तवंशावतंसा जग-द्विदितमहाशयाः।

(१८) पाठ्यग्रन्था इमे:—

(क) व्याकरणे,—मुग्धमञ्जरी, शब्दसंहारः, अज्ञानचन्द्रिका च।

(ख) धर्मशास्त्रे,—वञ्चकवृत्तिरत्नाकरः, पाखण्ड-विडम्बनः, अधर्मसेतुश्च।

(ग) आयुर्वेदे,—मृत्युचिन्तामणिः, मनुष्यधनहर-णम्, कालकुठारश्च।

(घ) ज्योतिषे,—मुहूर्त्तमिथ्यावली, मूर्खाभरणम्, गणितगर्वाङ्कुरश्च।

(च) नीतिशास्त्रे,—नष्टनीति-दीपकः, अनीति-शतकम्, धूर्त्तपञ्चाशिका च।

कोषाः,—कुशब्दकल्पतरुः, शून्यसागरः, शब्दा-ऽडम्बरश्च।

नाटकग्रन्थाः—स्वार्थसंग्रहः, कृतघ्नकुलमण्डनश्च।

सर्वसाधारणग्रन्थाः—असत्यसंहिता, दुष्टचरि-तामृतम्, भ्रष्टभास्करादयश्च।

महाविद्यालये प्रविविक्षव एतत्समाचार-ज्ञानपूर्व-क्षण एव 'तार' द्वारा स्वनाम प्रेषयन्तु।

भो महाशयाः! मया मित्रकृपा न विस्मर्त्तव्या; यया महाविद्यालय-निर्माणं सुचारु-रूपेणाऽभवद्धनम-प्यपारं प्राप्तम्। ममोत्तराधिकारिणोऽपि लक्षवर्षसहस्रं यावद्यथाकामं धनव्ययं कृत्वाऽपि न कोषं रिक्तं कर्त्तुं शक्नुयुरिति महद्धर्षोत्कर्षस्थानम्।

महाभागाः! धन्या यूयं ये मनसा शरीरेण च धर्मकार्येऽस्मिन्प्रवृत्ताः, येनाऽपूर्वमहाविद्यालयोऽयं निर्मित आस्ते, भवतां पुत्रपौत्रादयः सर्वेऽस्मिन्महा-विद्यालये विद्वांसो भवितार इति शम्।

---

# अस्माकं राष्ट्रियं स्वास्थ्यं राष्ट्र-संरक्षणञ्च ।

श्री गिरिजाशंकर शास्त्री, अवस्थी, आयुर्वेदाचार्यः, ए० एम्० एस्०, आर्यावर्तौषधालयः, काशी ।

अद्यतने खलु भारते सर्वतोरूपेण समुन्नतिपथमारुरुक्षूणामाबालवृद्धास्मद्देशीय-स्त्रीपुरुषाणां स्वास्थ्य-विषयिणी भारतीय-शासक-वर्ग-विज्ञापिता यादृशी विज्ञप्तिस्समाचार-पत्रेषु यदा कदा प्रकाशिता दृश्यते, यथा चाऽस्माकं वास्तविकं राष्ट्रिय-स्वास्थ्यं तद्विजानाज्ञनानां प्रत्यहं लोचन-गोचरीभवति, तेन सुनिश्चितं प्रतीयते यदस्यां विंशतितम-शताब्द्यामयं देशः सम्मानं जगतीतले चिराय स्थातुन्न शक्नोति ।

यत्र काले विविध-शस्त्रास्त्र-सुसज्जिताः, हृष्ट-पुष्ट-वपुष्काः, स्वतन्त्रता-सुरा-मदोन्मत्ताः, पाश्चात्य-राष्ट्र-सैन्य-सैनिकाः, अपर्याप्त-साधनानथ च क्षीण-शक्तिकान् देशान् निर्दयं विजेतुं प्रतिक्षणं स्वशासकानामङ्गुलि-संकेत-मात्रमेवेहमाना दृश्यन्ते, यदा च शर्मण्य-जापानांतली (इटली) प्रभृतिदेशेषु तत्तद्राष्ट्राधिनायकानां मुख्यतमं कर्तव्यं स्व-सैनिक-शक्ति-सम्वर्द्धनेनेव विज्ञायते, यदर्थमनल्पकालादेव स्वदेशे गृहीत-जन्मवतां सुकुमार-सुकुमाराणां स्वास्थ्य-विवर्द्धनाय प्राप्त-यौवनानां स्वास्थ्य-संरक्षणाय च चतुर्दिग्दृष्टिपातेन सामूहिक-रूपेण विपुल-वित्त-व्यय-द्वारा खाद्य-सामग्री-संग्रहणे महान् प्रयत्नो विधीयमानो वर्तते, यत्परिणामो हि महायुद्धादृते नान्यःकश्चिद् भवितुमर्हति ।

एवम्भूतायां परिस्थितावस्मद्देश-शासकैर्गौराङ्ग-महाप्रभुभिः कतिपय-भारतीय-सुपुत्राणाम्मतबाहुल्येन केन्द्रीय-धारासभायां सैनिक-संग्रहावरोधकानान्निग्रहार्थैकं राजनियमं स्वीकार्यैव परमेतिकर्तव्यतां मत्वा सन्तोषो न करणीयः । तैरेतदपि विचारणीयं यदद्य सप्ताधिक-त्रिंशत्कोटि-भारतीय-जनतायामर्द्धाधिकेषु जनेषु सत्सु बुभुक्षितेषु भविष्यति महासङ्ग्रामे करिष्यमाणेषु च भारतेऽभ्याक्रमणेषु, अस्थि-मात्रावशिष्टाः, जाठर-ज्वाला-प्रपीडिताः, अतीव दैन्य-दशामापन्नाः, इमे भारतीयाः कथं युद्धाय सन्नद्धा भविष्यन्ति ।

यत्र देशे नानाविध-व्याधयो निर्बाधं वैदेशिक शासका इव कृत-शासनाः प्रतिगृहं विराजमाना विद्यन्ते; यैः शोषित-धातवो राष्ट्र-स्तम्भायमानाः, भारतीय-युवकाः, यौवन एव वृद्धायमानाः; अकाल एव काल-कवलिता भवन्ति; यत्र सम्राडिव राजभक्त-हृदयेषु स्थापित-सम्बन्धो रोगराड् (यक्ष्मा), प्रतिदिनमधिकाधिक-कृत-प्रसारो दृश्यते; यत्र खलु प्रतिवर्षं समागत - क्रूर - वैदेशिकाधिकारिभिरिवेतिभिर्निश्शङ्कं ताण्डवेन नृत्येन नृत्यते; यत्राऽव्यहितज्ञायमानयाऽतिवृष्ट्या यत्र तत्र प्रान्ते प्रति-सम्वत्सरं प्रलय-कालिकं दृश्यं समुपस्थाप्यते, येन न केवलं मानवानाम्पशूनाञ्च प्राण-हानिर्धन-हानिरेव वा भवति, अपितु खाद्य-पदार्थानां विनाशात् प्रसरितानेकरोगाणां संक्रमणाच्च तादृशी दुर्दशा भारतीय-दीनजनतयाऽनुभूयते; या कथमपि वक्तुन्न पार्य्यते, एवं यत्र देशेऽनावृष्ट्याऽन्नाभावात् प्रपीडिता मातरस्स्वोदर-पूर्तये समये पर्य्याप्तं भोजनमपि न लभन्ते । यत्र स्तनन्धयाः शिशवःपातुं क्षीरमपि न प्राप्नुवन्ति । यत्र क्षुधार्दिता बहवो मनुष्या पशुमारं म्रियन्ते राजपथेषु । यत्र वस्त्राभावाद् वीथिषु नग्न-कलेवराः कल्पनातीताः जना बद्ध-जानुकरा यमातिथीभवन्ति, तत्रत्येयं जनता साम्प्रतिकेषु वैज्ञानिकेषु युद्धेषु समष्टिरूपेण राष्ट्र-संरक्षणं करिष्यतीति तु दुराशामात्रमेव ।

एतदर्थं तु समस्ते खलु भारते आधि-व्याधि-निवारणाय जनतायाः शारीरिक-शक्ति-सम्वर्द्धनाय च कश्चन प्रबलतम उद्योगो विधेयतामाकाङ्क्षते ।

परन्तु किमेतत्सम्भाव्यते ? अत्र तु सुखन्निरीक्ष्यते यदत्रत्यैः शासक-वर्गैः केवलं कतिपय-लक्षसंख्याक-स्वसैनिक-जनानामेव शारीरिक-शक्त्युपबृंहणाय समुचित-स्वास्थ्य-प्रद-खाद्य-पदार्थानां संग्रहणे प्रबन्धोऽनुष्ठीयते, तदितरेषाञ्जनानामप्रतर्क्यां स्वास्थ्यहानिज्ञानानैरपि तत्प्रतीकारायोपेक्षित-दृष्टिभिरेव भूयते इति तद्दृष्टिमतां विदुषां सुचिन्त्योऽयं विषयः ।

# निकुञ्जविलासः !

श्री श्रीमदाचार्यपाद-विट्ठलेश—प्रणीतः

[ साहित्याङ्गेषु शृङ्गार-रसस्यैव प्रधानाङ्गत्वम् संस्कृत साहित्ये समालोक्यते । परमिदानीं नवशिक्षितानां कृते तदरुचिरमिव प्रतिभाति । वस्तुतः साम्प्रतं हिन्दू-समाजः केलि-गृहान्निःसृत्य, श्मशान-वासं करोति । अथापि भारतीय-सम्प्रदायेषु केषुचन शृङ्गाररसस्य नग्न-ताण्डवमालोक्यते । साम्प्रतमेव प्रकाशिते 'भारत-मत-दर्शन' नाम्नि पुस्तके श्रीवल्लभसम्प्रदायाचार्याणां श्रीमद्विट्ठलेशप्रभुचरणानां 'निकुञ्ज-विलास' नामकं काव्यं मुद्रितमस्ति । तद्दर्शनेन नितान्तचकिता वयं तत्काव्यमत्र प्रकाशयामः । येन साम्प्रदायिकाचार्याणां शृङ्गार-रस-रसिकता प्रतिपदं प्रतीयते । एतेनावलोकयन्तु रसिकाः पाठक-महाभागाः यदस्य सम्प्रदायस्य कीदृश आदर्शः, कथञ्च तत्र शृङ्गाररस्य नग्न-ताण्डवं विलोक्यते । काव्यमिदं बहुशः अशुद्धमपि अस्माभिस्तदवस्थमेव स्थापितम्, यतो न वयमाचार्य-चरणानां निर्मितौ लेखनी-लापन-लौल्यमाचरितुमीहामहे ! पाठकाः एव प्रमाणम् । — सम्पादकः ]

द्रुत-कनक-सुगौर-स्निग्ध-मेघौघ-नील—
च्छविभिरखिल-वृन्दारण्यमुद्भासयन्तौ ।
मृदुल-नव-दुकूले नील-पीते दधानौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

नव-किसलय-तल्पे कल्पयन्तौ विचित्रां
सुरत-समर-केलीमुन्मदानङ्ग—रङ्गौ ।
ललित-वलय-काञ्ची-नूपुर-ध्वान-रम्यौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

प्रतिपद-प्रतिकूलात्याग्रह-व्यग्र-मूर्ती
बहुविरचित-नानाकार-चाटु-प्रकारौ ।
नव-सुरत-विलासौत्सुक्य-गूढ-प्रकाशौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

तदतिमधुर-लीला-लोल-लोलाङ्ग-लक्ष्म्या
सुललित-ललितादेर्निर्निमेषाक्षिरन्ध्रैः ।
हृदयमुपनयन्तौ पूर्ण-सौख्याम्बुराशी—
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

प्रियतम-कृत-गाढाऽऽश्लेष-खर्वायितोरु-
स्तन-मुकुल-मनोज्ञा-वल्लभैकात्मतैप्सू ।
किमपि रचित-शुष्क-क्रन्दितोदार-हासौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

सतत-सुरत-तृष्णा-व्याकुलावुन्मदिष्णू
विपुल-पुलक-राजद्गौर-नीलाऽञ्चलाङ्गौ ।
मिथ उरुपरिरम्भादेकदेहायमानौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

ललित-नव-किशोरौ नव्य-लावण्य-राशी
सकल-रसिक-चूडालंकृती मुग्ध-वेशौ ।
मधुर-मधुर-मूर्ती विद्युदम्भोद-कान्तौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

जघन-लुलित-वेणी-विस्फुरद्-बर्ह-चूडौ,
रुचिर-कनक-चूडा-कङ्कणोद्भासि-पाणी ।
विलसदरुणरोचिःपीतकौशेय-रम्यौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

कनक-जलज-गात्रौ नील-पीताम्बरेशौ
मृगमद-रस-भालौ मालती-कुन्दमालौ ।
तरल-तरुण-वेशौ नील-शोणाब्ज-नेत्रौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

निखिल-निगम-गूढौ नित्यमन्योन्यगाढ—
प्रणय-भर-विवृद्धोच्चलज्ज्वलाऽनङ्ग-चेष्टौ ।
सुरत-रस-मदान्धौ न्यस्त-जीवौ मिथोऽङ्गे
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

प्रियकर-परिमर्दाज्जृम्भमाणोरुवक्षो—
रुह-मनसिज-कण्डूद्दण्ड-कन्दर्प-लीलौ ।
कलित-दयित-पाणि-पृष्ठ-नीवी-निबन्धौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

मिथ उरु-पुलक-श्रीदोर्लताऽवद्ध-कण्ठा-
वतिललित-मुखेन्दु-किङ्करी-लालिताङ्गौ ।
नवरति-रण-खेला-श्रान्त-तन्द्रालु-नेत्रौ,
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

मनसिज-रस-सिन्धोरद्भुताऽऽवर्त्त-वेग—
भ्रमित-तनु-मनस्कौ केलि-विस्मापितालौ ।
मिथ उरुविधगात्र-स्पर्श-जल्प-प्रहासौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥

सुरत-रस-समुद्रे पार आचूडमग्नौ
त्रुटि-लवमिव जातां मन्यमानौ त्रियामाम् ।
प्रतिनिमिषमसीमोज्जृम्भिताऽनङ्ग-चेष्टौ,
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥



डा० मङ्गलदेव शास्त्री, एम० ए०, डी० फिल०
[ प्रिन्सिपल-गवर्नमेन्ट-संस्कृत-कालेज, काशी ]





महामहोपाध्यायः, सर्वतन्त्र-स्वतन्त्रः
श्रीबालकृष्ण मिश्र-महोदयः
[प्रिन्सिपल-संस्कृत-कालेज, हिन्दू विश्वविद्यालय, काशी]



प्रोफेसर रामस्वरूप शास्त्री, न्याय व्याकरण तीर्थः, व्या० आ०, विद्यावाचस्पतिः

[ अलीगढस्थ—अ० भा० विद्वत्-सम्मेलन-परीक्षा पीठ-कार्यसञ्चालकाः ]



प्रोफेसर हरिहर द्विवेदी शास्त्री, काव्यतीर्थः, साहित्याचार्यः, विद्यासागरः,



श्री [illegible] शास्त्री

वहल-सुरत-वेलायास-संखिन्न-गात्रौ,
दयित-निजसखीभिर्वीज्यमानौ पटान्तैः ।
सरस-भुजग-वल्लीं भुज्यमानौ च भूयः
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
विलुलित-वर-वेणी-हार-मालावतंसौ,
मृदुल-मधुर-हासोल्लासि-वक्त्रेन्दु-बिम्बौ ।
रति-रस-मद-लोलौ चित्र-कन्दर्प-केली,
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
सुरत-रस-महाब्धौ सन्ततं सन्तरन्तौ
त्रुटित-ललित-काञ्ची-दाम-हारावलीकौ ।
मणि-कनक-विभूषोत्सर्पि-भास्वत्प्रकाशौ,
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
नव-ललित-वयस्कौ नव्य-लावण्य-पुञ्जौ
नवरस-चल-चित्तौ नूतन-प्रेम-वित्तौ ।
नव-निधुवन-लीला-कौतुकेनातिलोलौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
प्रथम-मिलन-भीतोद्भाविताऽश्वास-वाचौ,
प्रियतम-भुजरोध-व्यग्र-हस्तौ रतोत्कौ ।
अलमलमिति लीलागद्गदेत्युन्मदान्धौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
स्तबकित-मणिदाम्ना प्रेयसी-गुम्फितात्यद्—
भुत-सुललित-वेणी-प्रेयसाक्लृप्त-चूडौ ।
मिथ उदयदखण्ड-प्रेमरज्जु-निबद्धौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
सुरत-कलह-सौख्ये काकुवाद-प्रणामाऽऽ—
धिक-विरचित-मान्यैर्दुर्गम-प्रेमभङ्गी ।
स्मित-मधुर-मृदूपालम्भ-हृन्मीलितान्तौ,
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
प्रियरति-समनुज्ञा-मार्गणाऽनम्र-वक्त्रो—
न्नमितचिबुक-दृष्ट्या स्मेर-कान्ता-मुखाब्जौ ।
किमिव कुरुष इत्यास्वाद्यवाक्किञ्चनोक्ती,
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
रमण-वदन-चन्द्रादत्त-ताम्बूल-वल्ली—
निजरस-निधि-वक्त्रे न्यस्त-तच्चर्व्विभागौ ।
मिथ उरुरसदाङ्गस्पर्शने नोद्यमानौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
व्रतति-भवन-रन्ध्रायात-सन्मन्दशीता—
निल-दलित-सुतुङ्गानङ्ग-संग्राम-खेदौ ।
क्षणमिव परिरम्भारब्ध-भूयो विहारौ,
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
प्रणय-मद-वयस्या-कुञ्ज-रन्ध्रार्पिताक्षी—
क्षितितलमनुलब्धानन्दमूर्च्छा-पतन्तौ ॥
प्रतिरति-विदधानौ चेष्टितैश्चित्र-चित्रैः
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
किमपि परम-शोभा-माधुरी-रूपचेष्टा—
हसित-लपित-दृष्ट्यात्यद्भुतोत्कर्षकाष्ठाम् ।
परम-रस-रहस्याऽऽवेशतः सन्दधानौ,
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
सततमपरिमाणोज्जृम्भमाणानुरागो—
न्मद-रस-भर सिन्धूल्लोल-लोलायिताङ्गौ ।
दलित-सकल-सेतू धन्यगोप्यैक-वश्यौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
अतिरस-मद-वेगान्निस्त्रपाधैर्यतृप्ती—
क्रम-समुदित-तत्तत्सौरताश्चर्य-रीती ।
बहिरति-सुख-लीलानूद्यतेक्ष्यानुबन्धौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
क्व बत ! विचलितं वः प्रास्य मां शूरहस्ते
कलयत मम देशं स्रक्छिदामात्मसख्यः ।
इति मिलित-वयस्या-सूक्तिभिर्हासयन्तौ,
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥
परमतर-रहस्याऽनन्द-निस्यन्दि-वृन्द-
विपिन-नव-निकुञ्जे दिव्य-दिव्यैर्विलासैः ।
निरवधि-रममाणौ राधिका-नन्दसूनू,
स्मर सकलमुपेक्ष्योच्चावचाः शास्त्रयुक्तीः ॥
स्तवमिममतिरम्यं राधिका-नन्द-सूनु—
प्रमद-रस-विलासैरद्भुतं भावयुक्तम् ।
पठति य इह रात्रौ ( ? ) नित्यमव्यग्रचित्तो
द्विजवरपरिमुक्तः प्रेम-भक्तिं लभेत ॥



# आदिकविः श्री वाल्मीकिः

श्री देवीनारायणः, बी० ए०, एल्० एल्० बी०, एडवोकेट, विद्यासागरः

योगीन्द्रश्छन्दसां स्रष्टा रामायण-महाकविः ।
वल्मीकजन्मा जयति प्राच्यः प्राचेतसो मुनिः ॥
—श्रीराजशेखरः

भूमण्डलेऽध्यात्म-विद्यावत् साहित्यविषयेऽपि भारतवर्षस्य सर्वोत्तमं स्थानं वर्तते । वैदिकसाहित्यं हि प्राचीनतमम् । पाश्चात्यविद्वांसोऽपि वैदिक-साहित्यस्य प्राचीनत्वं विशेषत्वञ्च स्वीकुर्वन्ति । वैदिकसाहित्य-साहाय्येन महर्षिवाल्मीकिना नवीनच्छन्दसां प्रणाली प्रकटीकृता । उक्तञ्च महाकवि-भवभूतिना—

"–प्राचेतसो मुनिवृषा प्रथमः कवीनां
यत्पावनं रघुपतेः प्रणिनाय वृत्तम् ।
भक्तस्य तत्र समरन्न ममापि वाच–
स्तासु प्रसन्नमनसः कृतिनो भजन्ताम् ।

आत्रेयी—अस्मिन्नगस्त्य-प्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति
तेभ्योऽधिगन्तुं निगमान्त-विद्यां
वाल्मीकिपार्श्वादिह पर्यटामि ॥

वनदेवता—यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणाय उपासते, तत् कोऽयमत्र आर्य्यया दीर्घप्रवास-प्रयासः ।

आत्रेयी—तत्रमहान् अध्ययनप्रत्यूह–इति दीर्घप्रवासोऽङ्गीकृतः ।

वनदेवता—कीदृशः ?

आत्रेयी—

अथ स ब्रह्मर्षिरेकदा मध्यन्दिनसमये नदीं तमसामनुप्रपन्नः तत्र युगमचारिणोः क्रौञ्चयोरेकं व्याधेन विध्यमानमपश्यदाकस्मिकप्रत्यवभासाच्च देवीं वाचमव्यतिकीर्णामानुष्टुभेन छन्दसा परिणतामभ्युदैरयत् ।

मा निषाद ! प्रतिष्ठात्वमगमः शश्वतीः समाः ।
यत् क्रौञ्च-मिथुनादकेमवधीः काममोहितम् ॥ इति ।

वनदेवताः—चित्रमाम्नायादन्यो नूतनश्छन्दसामवतारः ।

आत्रेयीः—तेन खलु पुनः समयेन तं भगवन्तमाविर्भूत-शब्द-ब्रह्म-प्रकाशमृषिमुपसंगम्य भगवान् भूतभावनः पद्मयोनिरवोचत्, ऋषे ! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि, तद् ब्रूहि रामचरितम्, अव्याहतज्योतिरार्षं ते प्रातिभञ्चक्षुः, आद्यः कविरसि, इत्युक्त्वान्तर्हितः । अथ भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्त्तमितिहासं रामायणं प्रणिनाय ।"

वाल्मीकिरामायणेऽपि कथितम्—

समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा ।
सोऽनुव्याहरणाद् भूयः शोकः श्लोकत्वमागतः ॥
तस्य बुद्धिरियं जाता महर्षेर्भावितात्मनः ।
कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम् ॥
प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।
चकार चरितं कृत्स्नं विचित्रपदमर्थवत् ॥
चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः ॥

महर्षिवाल्मीकेरेतादृशम्महत्वमतुलितप्रभावं गौरवञ्च यत् कविकुलगुरु-कालिदास-भवभूति - राजशेखरादि - महाकविभ्यो मुक्तकण्ठेन तस्य हार्दिकी-वन्दना कृता । तेषां कविकुलमण्डलीनां महामण्डलीश्वराणाङ्कतिपयवाक्यान्युद्धृयन्ते—

भवभूतिः—

इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे ।
विन्देम देवतां वाचममृतामात्मनः कलाम् ॥

लौकिकानां हि साधुनामर्थं वागनुवर्त्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥

राजशेखरः—

योगीन्द्रश्छन्दसां स्रष्टा रामायणमहाकविः ।
वल्मीकजन्मा जयति प्राच्यः प्राचेतसो मुनिः ॥

बभूव वल्मीकभवः कविः पुरा,
ततः प्रपेदे भुवि भर्तृमेण्ठताम् ।
स्थितः पुनर्यो भवभूतिरेखया
स वर्तते संप्रति राजशेखरः ॥

जयदेवः—

मम पुनः कविकमल-सद्मनि मुनौ वल्मीकजन्मनि मनः कौतुकितं यस्यैकमपि वदनारविन्दमासाद्य चतुर्मुख-कमल-वन विहारविनोदमनुभवति भारती नाम राजहंसी ।

भास्वद्वंशावतंसकीर्तिरमणी-रङ्गप्रसङ्ग-स्वन—
द्वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा मुनिः ।
पीत्वा यद्वदनेन्दु-मण्डलगलत्काव्यामृताब्धेः किम–
प्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ॥

वेङ्कटाध्वरिः—

प्राचेतस-व्यास-पराशराद्याः
प्राञ्चः कवीन्द्रा जगदञ्चितास्ते ।
गोष्ठी नवीनाऽपि महाकवीनां
पूज्या गुणज्ञैर्भुवनोपकर्त्री ॥

अन्येऽपि:—

कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् ।
चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः ॥
सदूषणापि निर्दोषा सखरापि सुकोमला ॥
नमस्तस्मै कृता येन रम्या रामायणी कथा ।
तमृषिं मनुष्यलोक-प्रवेश-विश्राम-शाखिनं वाचाम् ।
सुरलोकादवतार-प्रान्तर-खेद-च्छिदं वन्दे ॥

महर्षिवाल्मीकेर्भारत्यतीव मनोहरा, सरला, हृदयग्राहिणी च । गङ्गोदक-सममधुरा स्निग्धा, तरला, पुण्या च । कानिचन पद्यान्युद्धृयन्ते—

हंसो यथा राजत पञ्जरस्थः सिंहो यथा मन्दर-कन्दरस्थः ।
वीरो यथा गर्वित-कुञ्जरस्थश्चन्द्रोऽपि बभ्राज तथाम्बरस्थः ॥४॥
स्थितः ककुद्मानिव तीक्ष्ण-शृङ्गो महाचलः श्वेत इवोर्ध्वशृङ्गः ।
हस्तीव जाम्बूनद-बद्धशृङ्गो विभाति चन्द्रः परिपूर्ण शृङ्गः ॥५॥
विनष्टशीताम्बु तुषार-पङ्को महाग्रह-ग्राह-विनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को रराज चन्द्रो भगवाञ्छशाङ्कः ॥६॥
शिलातलं प्राप्य यथा मृगेन्द्रो महारणं प्राप्य यथा गजेन्द्रः ।
राज्यं समासाद्य यथा नरेन्द्रस्तथा प्रकाशो विरराज चन्द्रः ॥७॥

महर्षि-वाल्मीकेः प्राकृतिकसौन्दर्यस्य वर्णनमतीव मनोहरं स्वाभाविकञ्च । भगवत्याः गङ्गायाः कीदृशं विचित्रं चित्रं चित्रितम्—

तत्र त्रिपथगां दिव्यां शीततोयामशैवलाम् ।
ददर्श राघवो गङ्गां रम्यामृषिनिषेविताम् ॥१॥
आश्रमैरविदूरस्थैः श्रीमद्भिः समलंकृताम् ।
कालेऽप्सरोभिर्हृष्टाभिः सेविताम्भोह्रदां शिवाम् ॥२॥
जलाघाताट्टहासोग्रां फेन-निर्मल-हासिनीम् ।
क्वचिद्वेणी-कृत-जलां क्वचिदावर्त-शोभिताम् ॥३॥
क्वचित्स्तिमित-गम्भीरां क्वचिद्वेग-समाकुलाम् ।
क्वचिद् गम्भीर-निर्घोषां क्वचिद्भैरव-निःस्वनाम् ॥४॥
देवसंघाप्लुतजलां निर्मलोत्पल-संकुलाम् ।
क्वचिदाभोग-पुलिनां क्वचिन्निर्मल-वालुकाम् ॥५॥
हंस-सारस-संघुष्टां चक्रवाकोपशोभिताम् ।
सदामत्तैश्च विहगैरभिपन्नामनिन्दिताम् ॥६॥
क्वचित्तीररुहैर्वृक्षैर्मालाभिरिव शोभिताम् ।
क्वचित्फुल्लोत्पलच्छन्नां क्वचित्पद्मवनाकुलाम् ॥७॥

महर्षिवाल्मीकिर्नतु केवलमरण्यवासी मुनिः, सन्यासी, अथवा त्यागी आसीत्; परन्तु तस्य राजनैतिकसामाजिक व्यवहारिकानुभवश्च मार्मिकः, सम्प्रति घोरकूट-नीतियुगेऽपि लाभदायकः, सत्य-धर्म-शान्ति-न्याय-मार्ग-प्रदर्शकश्च । विद्यावाचस्पति पण्डितवर-शालग्राम-साहित्याचार्यायुर्वेदाचार्य्य-महोदयेन "रामायण में राजनीति" नामकं पुस्तकं लिखितन्तद्दर्शनीयम् । तस्मिन् समीचीनतया नवीनरूपेण च रामायणे राजनीतिरिति दर्शितम् ।

"नृशंसमनृशंसं वा प्रजारक्षण-कारणात् ।
पातकं वा सदोषं वा कर्तव्यं रक्षता सदा ।
राज्यभार-नियुक्तानामेष धर्मः सनातनः ।
अधर्म्यां जहि काकुत्स्थ ! धर्मो ह्यस्यां न विद्यते ॥"

# संस्कृत-साहित्यम्

श्री नेमीचन्द्रो जैनः

विचारयन्तु तत्र भवन्तो भवन्तश्चार्यमिश्राः भाववरेण्या यत्किन्नाम संस्कृत-साहित्यम्? कथं वाऽस्य प्राचीनत्वमर्वाचीनत्वं वा संघटते।

सहितस्य भावः साहित्यमेवैकमात्रं मानव जातिसभ्यता-संस्कृति-स्वाधीनताऽऽदीनां विकासनार्थमद्वितीयो मार्गः।

साहित्यमेव जातिविशेषेषु नवीन-जीवनं सञ्चारयति, सुसाहित्यमेव मृतकजातीनामपि जीवित-जातित्वसम्पादनाय प्रभवति। तत्तत्कालिक-साहित्य एव तत्तत्कालिक-देशविशेषस्योत्कर्षापकर्षयोः, सामाजिक-रीत्यरीत्योः, सुनीति-दुर्नीत्योः, तथा जातीय-सदाचार-दुराचारयोः, प्रतिविम्बं स्पष्टतया प्रतीयते। अतएव संस्कृत-साहित्यं देश-जाति-समाजानां दर्पणमिति कथनमपि नाऽनौचित्यभाक् भवति।

आस्माकीनं संस्कृत-साहित्यं नूनमतिप्राचीनमितरसाहित्यानां मध्ये शिरोमणिभूतमस्ति।

विशाल-संस्कृत-साहित्यस्य सम्यग् दिग्दर्शनं कर्तुमशक्यमेवाऽस्माभिस्तथापि, एतादृशमेव पश्यामो यदस्मिन् संस्कृतसाहित्ये सम्पत्तिशास्त्र-विज्ञान-कला-कौशल-कोशेतिहास-ज्यौतिष-वैद्यक-काव्य-नाटक-विषयकाण्यनेक-ग्रन्थरत्नानि वर्तन्ते। दौर्भाग्यमस्माकं भारतीयानां यत्तेषां समस्तग्रन्थ-रत्नानामन्वेषणमद्यावधि न जातम्।

ये परचक्रैः पददलिता एव न कृताः; अपि तु नष्टप्रायतामानीता एव।

संस्कृत-साहित्यस्य क्षेत्रमप्यतिविस्तृतमस्ति, नाऽस्ति च तन्न्यूनात्मकत्वमन्यस्मात् प्राचीनात् किं वा अर्वाचीनात् भाषा-साहित्यात्। संस्कृतसाहित्यस्य प्रतिपाद्य-विषयोऽपि सर्वदैव प्रौढः सर्वगामी धर्माधिष्ठितश्चाऽस्ति, संशोधक-विद्वांसः शतद्वयवर्षतः रात्रिन्दिवमन्वेषणं कृतवन्तोऽपि, अधुना अन्तस्तलं नैव प्राप्ताः।

संस्कृतसाहित्यस्य प्रारम्भः कदा बभूवेति न ज्ञायते, तथापि अन्यभाषासाहित्यापेक्षया प्राचीनमस्तीति निश्चप्रचम्। संस्कृतसाहित्यशब्दात्काव्य-नाटकालङ्काररूपाः। ग्रन्थाः द्योत्यन्ते। भर्तृहरिणा स्व-नीति-शतक-ग्रन्थे "साहित्य-संगीत-कला-विहीनः" इत्यादिश्लोकेनोपर्युक्त-संकुचितार्थ एव साहित्य-शब्दस्य प्रयोगः कृतः। विल्हणोऽपि "साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः!" इत्यत्र नाटक-काव्यालङ्कारविषय एव साहित्य-शब्दं प्रयुक्तवान्।

परञ्च राजशेखरेणेयं साहित्य-विद्या पञ्चमी-विद्या स्वीकृता, "पञ्चमी साहित्यविद्येति यायावरीयः, सहित्यं चतसृणां विद्यानामपि निष्यन्दः"—इति काव्यमीमांसायां लिखितम्। अर्थादान्विक्षिकी, त्रयी, वार्ता, दण्डनीतीति चतसृणां विद्यानां सारभूता पञ्चमी साहित्यविद्या। अस्याः प्राचीनत्वविषयेऽनेकानि प्रमाणानि सम्मिलन्ति। पुरातन-काले संस्कृतसाहित्यमिति व्याप्य-प्रकारकः प्रयोगो नासीत्; किन्तु व्यापकस्य साहित्यशब्दस्यैव प्रयोग आसीत्। परञ्च संस्कृतशब्दस्य सर्वप्रथम-प्रयोगो रामायणे दृश्यते। उक्तञ्च—

अहं ह्यतितनुश्चैव वानरश्च विशेषतः।
वाचं चोदहारिष्यामि मानुषीमिह संस्कृताम् ॥१॥
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥२॥

तथा च यास्क-पाणिन्यादि-महापुरुष-विरचित-ग्रन्थावलोकनादिदमवगम्यते,—यत्तत्समये लोक-व्यवहारोऽपि संस्कृत-भाषयैवासीत्।

अधुना आस्माकीनं संस्कृत-साहित्यं द्विधा वर्तते-वैदिक-संस्कृत-साहित्यम्, लौकिक-संस्कृत-साहित्यञ्च। वैदिक-संस्कृत-साहित्ये संहिता—ब्राह्मणारण्यकोपनिषदादिग्रन्थाः सन्ति। लौकिक-संस्कृत-साहित्येऽनेकानि ग्रन्थरत्नानि वर्तन्ते। वैदिककालादारभ्याद्यपर्यन्तं संस्कृत-साहित्यस्येतिहासावलोकनेनेदं ज्ञायते यत् कालपरिवर्तनभेदात् संस्कृत-साहित्येऽपि समयो-

प्रयोगी विकासः परिवर्तनञ्च बभूव। कैश्चित् संस्कृत साहित्यस्येतिहासकोविदैः त्रीणि काल-खण्डानि कृतानि तत्र तावत् चिन्तामणि विनायक-महोदयेन (१) श्रुति-कालः (२) स्मृतिकालः (३) भाष्यकालः ? इति त्रीणि साहित्य-विकासपरिवर्तन-काल-खण्डानि स्वीकृतानि। परञ्च 'सर भाण्डारकर'-महोदयेन भाषा-सरणिं प्रधानमाश्रित्य (१) संहिताकालः, (२) मध्यकालः, (३) लौकिक-संस्कृतकालः ? इत्यन्यानि त्रीणि काल-खण्डानि कृतानि। उपर्युक्त-प्रमाणेन संस्कृत-साहित्यस्य विकासः परिवर्तनकालश्च सम्यक् प्रकारेण ज्ञायते।

पुरातन-कालेऽस्या भाषायाः प्रचारः सर्वस्मिन् प्रदेशे एवाऽऽसीत्। यत्कुविन्दादयोऽपि वक्तुमेतां वाणीं पूर्णतया समर्था अभवन्।

एकदा भोज-राज्ये काचित्सभा समजनि तत्र बहवः समागता आसन्, कुविन्दोप्येकोऽकस्मात् तत्रागतः पृष्टश्च तेन राज्ञा-किं भो! त्वं काव्यं करोषि ? तूर्णमेव तेनोत्तरितम्—

काव्यं करोमि न हि चारुतरं करोमि।
यत्नात् करोमि यदि, चारुतरं करोमि॥
भूपाल-मौलि-मणि-मण्डित-पाद-पीठ!
हे साहसाङ्क! कवयामि, वयामि, यामि॥१॥

कीदृगत्र कुविन्दस्य काव्य-वैदग्धी-प्रतिभाति।

इत्थमेव केनाऽपि काष्ठभृतं प्रति प्रतिपादितं कदाचित् "**किन्ते भारो न बाधति**" इति श्रुत्वा तेन-काष्ठभृतैवं प्रत्युत्तरितम्। "भारो न बाधते राजन्! यथा 'बाधति' बाधते।" इत्यादि-प्रमाणेन सुनिश्ची-यते, यदस्माकं संस्कृत-साहित्यमतिप्राचीनं प्रचुर-तरञ्चाऽस्ति इति।

---

# अनयोः कः श्रेयान् ?

पं० श्रीसीतारामझा, ज्यौतिषाचार्यः, साहित्यरत्नम्
संन्यासि-संस्कृत-पाठशालाध्यापकः

एकः सदा स्वतन्त्रः परम्परातोऽपरः पराधीनः।
एकः सहज-सुवेषः कृत्रिम-रूपोऽपरो भुवने॥
एकः श्वस्तनचिन्तां विहाय रात्रौ सदा सुखं शेते।
'श्वः किं भविते'त्यपरो दुःखित-हृदयो न निद्राति॥
एकः प्राप्य सुवस्त्रं तिष्ठति वस्त्रादिचिन्तया हीनः।
अपरस्तदर्थमनिशं सहते कष्टं भवन् दीनः॥
एकोऽनधीतशास्त्र स्तनुते प्रीतिं निरत्ययां स्वजने।
अपरस्त्वधीत्य शास्त्रं छिद्रान्वेषी स्वबन्धूनाम्॥
एकस्त्वयाचमानः सादरमधुना सदाश्रयं लभते।
याञ्चापरोऽपि सततं परस्तु सधनैस्तिरस्क्रियते॥
एकं तदपि लघिष्ठं पश्यत्यपरो महान्तमात्मानम्।
किन्त्वनयोः कः श्रेयानिति मनसि विविच्यतां विज्ञैः॥

# विविध-विदुषां परिचयः।

'वाग्जन्म वैदग्ध्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनिता चेत्।'

किमपि स्वतन्त्र-कारणवशात् शारदावकाशे गुर्जर-प्रान्त-यात्रां कुर्वता मया तत्र तत्र महानगरेषु समासादिताः केचन सहृदय-धुरीणाः, स्पृहणीयाः, सुरभारती-प्रणयिनः, प्रणयिन्यश्च; येषां परिचयाऽप्रदानं वस्तुतः सहृदयता-विरह-सूचकमेव स्यात्। तत् क्रमशः सुप्रभात-पाठकेभ्यः सहृदयानां सुरसरस्वती-समाराधन-प्रणयिनां तेषां परिचय-प्रदानमेकैकशः क्रियते।

## श्रीमद्भागवताचार्याणामभिषेकमहोत्सवः।

गुर्जरप्रान्तीय-'चान्दोद'-नगरे श्रीमद्वेङ्कटेश-वालाजी-मन्दिरम्, नितरां प्राचीनम्, प्रतिष्ठितम्, प्रधानञ्च मन्दिरं विद्यते। एतन्मन्दिरस्य शाखा-मन्दिराणि, वड़ोदा-डभोई-सूरत-बंबई-बड़नगर-भडौच-प्रभृति नगरेषु विद्यन्ते। एतन्मन्दिराध्यक्षाः पूज्यपादाः, वयोवृद्धाः, आचार्यवर्याः श्री १०८ स्वामी श्रीनारायणाचार्य-महोदया अस्मिन्नेव वत्सरे कैवल्यं प्राप्ताः सन्ति, तेषामेव प्रधान-शिष्याः श्रीमन्तः श्री १०८ भागवताचार्यापरनामकाः श्रीमद्वेङ्कटाचार्याः ससमारोहं तत्र समभिषिक्ताः। एतेषामभिषेक महोत्सवः २८-८-३८ दिवसे चान्दोदनगरे महता-समारम्भेण सम्पन्नः।

अभिषेक-महोत्सवावसरे चन्द्रोदय-तीर्थं (चान्दोद) आमन्त्रितेभ्यः शिष्येभ्यः, समागतेभ्यश्चातिथिभ्यः परिपूर्णं महनीयां शोभां धारयतिस्म। अस्मिन् महोत्सवे, अहमदाबाद-मोहमयी-वडोदरा-डभोई-अलीराजपुर - बड़नगर-छोटाउदयपुर - सूरत-भडौच-वाराणसी-प्रभृति नगरेभ्यः सहस्रश आचार्याः, विद्वांसः, शिष्याः, भक्ताश्च सम्मिलिता आसन्। एतस्मिन्नवसरे श्रीमद्भिराचार्यपादैः स्वाभाविकोदार-तया मुक्तहस्तं दान-मानादिभिः सत्कृताः समागता अतिथयः। महार्हवस्त्राणि च सहस्रशः प्रदत्तानि।

श्रीमतामाचार्याणामायुः ५३ वर्षात्मकं विद्यते। हिन्दी-गुर्जर-महाराष्ट्रादिभाषासु प्रगाढं पाण्डित्यमस्त्येवैतेषाम्, परं संस्कृत-भाषा तु मातृभाषावद् व्यवह्रियत एभिः। व्याकरण-साहित्य-दर्शनादि-शास्त्रेषु प्रचुर-पण्डित्यवन्त इमे विशिष्टाद्वैतसम्प्रदायस्य मान्या मर्मज्ञाः सन्ति। एतेषां स्वरूपम्, भाषणम्, औदार्यम्, हृदयम्-सर्वमपि महनीयम्, प्रभावजनकञ्चास्ति। डभोई नगरे महता समारम्भेण एतेषां स्वागत-महोत्सव अभूतपूर्व एव समजनि।

अहमदाबाद-नगरे चाऽपि महोत्सवः समजनि। सहस्रशो ब्राह्मण-भोजनम्, याचकेभ्योऽन्न-प्रदानम्, शिष्येभ्यः, अतिथिभ्यश्च महार्ह-वस्त्र-प्रदानादिसत्कारो विपुलाडम्बरेण सम्वृत्तः। तत्र चासां पङ्क्तीनां लेखकोऽपि सम्मिलित आसीत्। एतेषां सम्मेलनेनाऽस्माकं चेतसि महान् सन्तोषः प्रमोदश्च समजनि, यत् साम्प्रतमपि सन्ति सुयोग्यतमाः, सुरभारती-प्रणयवन्तो विद्वांस आचार्या भारते वर्षे, ये वस्तुतः स्पृहणीयाः, माननीयाः, श्रद्धेयाश्च सन्ति। वयमाशास्महे यदिमे न केवलं विशिष्टाद्वैतकृते; परं समेषामपि सनातन-धर्मानुयायिनां कृते आदर्श भूताः, वास्तविक-सेवकाः, समुन्नति-शीला भविष्यन्तीति। एतेषां चित्रं चित्रा-वल्यां द्रष्टव्यम्।

× × ×

## सौभाग्यवती विदुषी क्षमाराव-महोदया

मोहमयी-नगरे विचित्रमेकं दृश्यं दृष्टमस्माभिः। यत् स्मारं स्मारं गौरवपूर्णं भवति चेतः। केषाञ्चन मित्राणां कृपया तत्र प्रसिद्धायाः सुरभारती प्रणयिन्याः श्रीमत्या क्षमा-देव्याः परिचयं प्राप्य नितान्तचकितोऽहमभवम्। एषा देवी स्वर्गीय-शङ्करपाण्डुरङ्ग-पण्डितस्य दुहिता, श्रीमतो राघवेन्द्रराव-महोदयस्य सहधर्मिणी,

संस्कृत-विद्याधरीव संस्कृतभाषायाः परम-पक्षपातवती, सर्वशुक्ला सरस्वतीव महान्तं गौरवस्थानमासादयति संस्कृत-प्रणयिनां हृदयेषु।

एषा पाश्चात्यशिक्षा-शिक्षिता, प्रायः फ्रान्स-महादेशस्थ-पेरिसनगरे निवसन्ती, प्रचुरतरधनवती, सौभाग्यवती, संस्कृत-भाषाया नितान्त-पक्षपातिनी, संस्कृत-पुस्तकानां प्रचुराणां प्रणेत्री, अविरल-संस्कृत-भाषिणी च विद्यते। प्रायशो दक्षिण-देशीयाः पण्डिता एनां श्रीमती जानन्ति। वहवश्च पण्डिताः, एतस्याः पार्श्वे समागच्छन्ती। सार्द्धहोरां यावदहं श्रीमत्याः सकाशं स्थित आसम्, तदानीं यावदनया संस्कृत-प्रणयिन्याः संस्कृत एव भाषणं कृतम्। संस्कृत-भाषाया अधःपतनम्, विदुषाञ्चालस्यम्, अस्या अप्रचारश्चेति विषयानवलम्ब्य भूयान् वार्तालापः समजनि। अस्माभिरनुभूतं यदस्याः हृदये संस्कृतभाषा-कृते यादृशी विषमा वेदना वरीवर्त्ति, तादृशी कस्याऽपि संस्कृत-विदुषो हृदये भविष्यति नवेति सन्देह एव। वयमस्याः, वार्तालापं समाकर्ण्य नितरां सम्मदमनुभवामः।

एनया संस्कृत-भाषायां पुस्तक-त्रयं विरचितम्। तेषां समालोचनम्, समालोचन-स्तम्भे विहितमस्माभिः। इयं न केवलं संस्कृत एव, आँग्लभाषायाम्, महाराष्ट्र-भाषायाञ्च सुप्रसिद्धा नाट्य-लेखिकाऽपि विद्यते। एतत् प्रणीत-नाटकानामभिनयोऽपि दक्षिणप्रान्ते मोहमयी-प्रान्ते च बहुशः सञ्जातः। तत्रत्यसमाचार-पत्रेषु, पाश्चात्य-देशीय-समाचार-पत्रेषु च बहुश एतन्नाटकानामस्या वैदुष्यस्य च चर्चा भवति, परमुत्तरभारतीया ईदृशीमपि संस्कृत-विदुषीं न जानन्ति-इति परं सङ्कोचमञ्चति चेतः।

अपरमिदमाश्चर्यम् यत् अस्या विदुषी कुमारी लीला देवी सप्तदशवर्षीया 'पेरिस'—नगरे गृहीत-शिक्षणाऽपि संस्कृतपक्षपातवती विद्यते। तया सहाऽप्यस्माकं संस्कृतभाषायामेव वार्तालापः समजनि। अन्यदिदमद्भुतं यत् तया भारतीय-नाट्याचार्य-श्री भरतमुनि-प्रणीतनाट्यशास्त्रानुसारं नाट्यकला शिक्षिता। मातृप्रणीत-नाटकेषु सैव प्रधानमभिनयं करोति।

एतस्याः क्षमादेव्याः संस्कृत-प्रमाणमालोकमाल्लोकं वयमस्यै स्पृहयामः, सादरं हार्दिकान् धन्यवादांश्च वितरामः। एतादृशे धनिक कुले जन्म गृहीतवत्या अहर्निशं पश्चात्य-संस्कृतिवातावरण-निवासिन्या अपि तस्याः संस्कृतभाषायां प्रेमातिशय स्तस्या महत्पुण्यं प्रकटयति। अयोध्यातः प्रकाशी भवता 'संस्कृत'—कार्यालयेन तस्यै 'विदुषी'—इत्युपाधिर्दत्तः। तन्मानपत्रञ्चाशुद्धमालोक्य भवती तत्र विपण्णा प्रतिवादमकरोत्। संस्कृतस्य संस्कृतन्तु जानन्त्येव सुप्रभात-पाठकाः। अतो वयं कामयामहे यत् वाराणस्यां भाविनि कस्मिन्नपि संस्कृत-महोत्सवे, विदुषी क्षमादेवी, सादरं सबहुमानं सानुरोधं सोत्साहं सम्माननीया, प्रोत्साहनीया, समादरणीया चेति।

एतस्याः चित्रं याचितमपि कार्यालय-प्रमादेन प्रणष्टं नाऽत्राङ्के प्रकाशमायातम्। आगमिन्यङ्के प्रकाश्येत।

× × × ×

## महोपाध्यायाः श्रीरेवाशङ्कर-मेघजी-शास्त्रिणः

इमे मोहमयी-नगरस्थाः विद्वत्तल्लजाः, तत्रत्य-संस्कृत-समाजस्य जीवनभूताः सन्ति। इमे देवीदास-लल्लूभाई - संस्कृत-पाठशालायाः प्रधानाध्यापकाः सन्ति। एतादृशी सुव्यवस्थिता पाठशाला न कुत्राप्यस्माभिः समालोकिता। अस्यां पाठशालायां छात्राणां कृते यादृशो भोजन-निवास-पठनादि-प्रबन्धो विद्यते, न तादृशस्तेषां गृहेष्वपि सुलभः स्यात्। अस्याः शालायाः शिक्षिताश्छात्रा अपि सन्ति वास्तविकाः संस्कृत-प्रणयिनः, कार्यकर्तारश्च।

अस्या आदर्शभूताः प्रधानाध्यापकाः श्रीमन्तो रेवाशङ्करशास्त्रिणः, ज्यौतिषे, व्याख्यान-कलायाम्, अध्यापनकलायाञ्च सुनिपुणाः सन्ति। लेखन-कलायान्तु समस्तगुर्जर-प्रान्ते प्रथितयशसो लेखका विद्यन्ते। सनातन-धर्मस्य तु प्रधान-पोषकाः, विख्याताः कार्यकर्तार एव सन्ति। मोहमयीस्थे विद्वत्समाजे सहृदयः, विद्वान्, लेखकः, कार्यकर्ता, विद्वन्मान्यः, विदुषां मानदो नाऽन्यः, प्रभावशाली विद्वान् विद्यते।

मोहमयी-निवासिभिरपि विदुषोऽस्य वारं वारं मानपत्रादिभिर्महत् सम्मानं प्रदर्शितम्। विद्वद्वर्यस्याऽस्य वयं ससम्मानमभिनन्दनं कुर्वन्तः परं प्रमोदमश्नुमः।

× × × ×

## श्रीमन्तो मोतीरामशास्त्रिणः, दर्शनकेशरिणः।

मोहमयीस्थे प्राचीन-विद्वत्समाजे परमसमान्याः, सदाचार-परायणाः दार्शनिक-प्रवराः श्रीमन्तो मोतीराम वेलजी शास्त्रिणोऽपि मोहमय्यां विद्वद्रत्नायमानाः सन्ति। एतेषां दार्शनिक-प्रवचनानि, भाषणानि च मार्मिकाणि भवन्ति। नागरिक-धनिक-गृहस्थेषु शास्त्रिवर्याणां समधिकं सम्मानं वरीवर्त्ति। इमे प्रत्यहं शाङ्करभाष्य-गीता-उपनिषदादीनां प्रवचनं कुर्वन्ति, यत्र सहस्रशो नराः, नार्य्यश्च सम्मिलिता भवन्ति। एभिर्बहवः प्रबन्धाः, पुस्तकानि च प्रणीतानि।

इमे सारस्वत-कुलमौलिमणयस्तत्रत्य-सारस्वत-ब्राह्मणसमाजे प्रधानस्थानमधितिष्ठन्ति। उदात्त चरिताः, उदार-हृदयाः, साधुस्वभावाः, प्राचीनवैदिक-सनातनधर्म-मर्यादा-संरक्षण-बद्धपरिकराः, विदुषां नितान्त-स्पृहणीयाः शास्त्रिवराः वस्तुत आदर्शभूताः, सन्ति। वयमेतेषां परिचयं प्रापयन्तः परं प्रमोदमनुभवन्तश्च काशीविश्वेश्वरादेतेषां दीर्घञ्जीवितं कामयामः।

× × ×

## महान् गवेषकः श्रीदीनानाथशास्त्री, चुलैट।

श्रीमतां मान्यानां दीनानाथशास्त्रिचुलैट-महोदयानां नाम प्रायः सर्वेऽपि संस्कृत-विद्वांसो विशेषतश्च भारतीया ज्योतिर्विदो जानन्त्येव। इमे मध्यप्रान्तीय-एलिचनगर-वास्तव्याः, साम्प्रतं इन्दौर नगरे कियद्भ्यो वर्षेभ्यो निवसन्ति। एतेषां 'प्रभाकर-पञ्चाङ्गम्' प्रसिद्धमासीत्।

कियन्ति वर्षाणि सञ्जातानि इन्दौर-नरेश्वरैर्भारतीय-पञ्चाङ्गानामेकीकरणाय समुत्साहः प्रदर्शित आसीत्। तत्र केवलं वार्द्धक्येऽपि नवयुवकोत्साहमधरीकुर्वद्भिर्विद्याभूषण-श्री दीनानाथशास्त्रिभिरुत्साहः प्रदर्शितः। तेषां साहाय्यार्थं महतां प्राच्य-पाश्चात्योभय-ज्योतिर्विज्ञानविदां विदुषां समितिरेका संस्थापिता; यस्या अध्यक्षपदं श्रीमद्भिश्चुलैट शास्त्रिभिरेव गृहीतम्। अस्याः समितेः वृहद् विवरणं ( रिपोर्ट ) विदुषां मननीयम् विद्यते। अस्याः समितेर्निणयानुसारं तैः—'भारतविजय'-नामकं पञ्चाङ्गमपि प्रणीतम्। एतेषामेव सदुद्योगेन इन्दौरनगरे निखिल-भारतीयं ज्यौतिषसम्मेलनमपि महता समारम्भेण सम्पन्नं श्रीमतां मालवीयमहोदयानां साभापत्ये।

श्रीमन्तो दीनानाथ शास्त्रिणः साम्प्रतं निखिलेऽपि भारतवर्षे भ्रमणं विधाय, विविधैः प्राचीनैः, नवीनैश्च खगोल-विज्ञान-साधनभूतैर्यन्त्रैः, जनतायामाकाशविज्ञान-प्रचारं कुर्वन्तः सन्ति। तस्य विस्तृतः समाचारः, 'संस्कृत-समाचार' शीर्षके स्तम्भे प्रकाशितो वरीवर्त्ति।

एभिः—वैदिककाल-निर्णय-नामकं पुस्तकं महद्गवेषणा-पूर्णं मुद्रापितम् यत्र केवलं वैदिकैः, खगोलीयैश्च प्रमाणैर्वेदानां लक्षत्रयवर्षात् प्राचीनः कालः स्थिरीकृतः।

एतेषां विषये बहूनां विदुषां मतभेदो विद्यते। संस्कृतज्ञास्तु कियद्भ्यो वर्षेभ्यः प्रचलितां सरणिं रेखामात्रमपि व्यत्येतुं न प्रभवन्ति, अतएव ते नवीनमनुसन्धानमवलोक्य चकित-चकिताः, अश्रद्दधाना एव न भवन्ति, प्रत्युत विरोधमप्याचरन्ति। तथैव दीनानाथशास्त्रिणामपि नवीनानि मार्मिक-जनवेद्यानि वैदिकान्यनुसन्धानानि दर्शं दर्शं विरोधमाचरन्ति। परमस्माभिः सम्यक् परीक्षितमनुभूतञ्च यत्-चुलैट-महोदयाः, यया गणित-प्रणाल्यः गणितं कुर्वन्ति, सा न सर्वसाधारण-प्रसिद्धा प्राचीन-ग्रन्थानुसारिणी पद्धतिः, प्रत्युत नवीनैव काचन। अपरं वेदेषु भूगोल-खगोल-नक्षत्रादीनां पूर्णं विज्ञानं वर्वर्त्त्येव। नेदानीं यावत् केनाऽपि तत्र दृष्टि निक्षेपो विहितः। परमेभिस्तत्र यदनुसन्धानं कृतम्, तद्दर्शं दर्शं वस्तुतो मर्मज्ञाः प्रमुदिताः, पुलकिताश्च भवन्ति। हन्त! वृद्धावस्थायामपि शास्त्रिणः, अहर्निशं अतन्द्रिताः, निरलसाः, गणितं कुर्वन्ति। तेषां गणित-प्रणाली च वैदिकी विद्यते। द्वित्रा एवैतादृशाः संस्कृतविद्वांसः समवलोकिता परिश्रमशीलाः। वयमेतेषां प्रबलपरिश्रममालोक्य चकिताः, स्तब्धाः, लज्जिताश्च भवामः। एतेषां विषये सम्पादकीयेऽपि निवेदनं विद्यते।

# संस्कृतसाहित्ये यवनाः

सुश्री यशोदादेवी ( द्वादशवर्षीया ) काशी

प्राचीने समये संस्कृतसाहित्यानुरागिणो यवनाः अप्यभूवन् ।

श्रीअब्दुलरहीमखानखाना, अकबरः, शरीफः, उकलैदसः (यू क्लीड्स), फिरोजशाहः, मोलशी, मुल्लासावरी, सुलतानहाजी वदापूर्तिः, हाजी इब्राहीमः, मुल्लामोहम्मदः, अबुलफजलः, नकीबखाँ, अबुलफैजः-इत्यादयः अनेको संस्कृतज्ञाः यवना आसन् ।

*अब्दुर्रहीमखानखाना*—

अस्य महाशयस्य प्रचुरःसमयोः युद्ध-कार्ये व्यतीतः । तथापि संस्कृतभाषायाः हिन्दीभाषायाश्च नैसर्गिकः कविरासीत्—इति स्पष्टमेवाभासते तस्य कविताऽवलोकनेन ।

खानखानामहोदयः, छद्म-हिन्दुत्वमवलम्ब्य संस्कृतमपठत् काश्यामिति प्रचलीचलीति वृद्धकथाऽप्यस्माकं देशे ।

अस्य पिता वैरमखानखाना आसीत् । अयमर्कवरस्य भूतपूर्व-सभ्यः, पश्चात्, देशद्रोही अब्दुर्रहीमखानखाना परमकृष्णभक्त इति तस्य कविताऽवलोकनेनैव प्रतीयते—

आनीता नटवन्मया तव पुरः श्रीकृष्ण ! या भूमिका
व्योमाकाशखखांबराब्धिवसुवस्त्वत्प्रीतयेद्यावधि ॥
प्रीतस्त्वं यदि चेन्निरीक्ष्य भगवन् च प्रार्थितं देहि मे
नो चेद् ब्रूहि कदापि मा नय पुनस्त्वेतादृशीं भूमिकाम् ॥१॥

रत्नाकरोऽस्ति सदनं गृहिणी च पद्मा
किं देयमस्ति भवते जगदीश्वराय ॥
राधा-गृहीत-मनसे मनसे च तुभ्यम्
दत्तं मया निजमनस्तदिदं गृहाण ॥२॥

गंगां प्रति कविः कथयति—

भगवति मुनिकन्ये ? तारयेः पुण्यवन्तं
स तरति निजपुण्यैस्तत्र किन्ते महत्वम् ।
यदिह यवनजातं पापिनं मां पुनीहि
तदिह तव महत्वं तन्महत्वं महत्वम् ॥
अच्युतचरणतरंगिणि ! शशिशेखरमौलिमालतीमाले !
मम तनु वितरण-समये, हरता देया न मे हरिता ॥

भगवन्तं रामं प्रति कवेरुक्तिः—

अहिल्या पाषाणः प्रकृति-पशुरासीत् कपि-चमूः
गुहोऽभूचाण्डालस्त्रितयमपि नीतं निजपदम् ॥
अहं चित्ते नाश्मा पशुरपि तवार्चादिकरणे—
क्रियाभिश्चाण्डालो रघुवर ! न मामुद्धरसि किम् ॥

दृष्ट्वा तत्र विचित्रितां सुमलतां मैं था खड़ा बागमें
काचित्तत्र कुरंगशावनयना, गुल तोड़ती थी खड़ी ।
उन्मद्भ्रूधनुषा कटाक्ष-विशिखैः घायल् किया था मुझे,
तत्सीदामि सदैव मोहजलधौ हे दिल् ! गुज़ारो शुकर ॥

किय‌द् गूढरहस्यं वर्तते, अत्र,—

खानखानामहोदयेन "खेटकौतुकजातकम्" नामको ज्योतिषविषयक-ग्रन्थोऽपि रचितः । येनाऽस्य ज्यौतिषशास्त्रपाण्डित्यमपि प्रकटितं भवति । खेटकौतुकजातके संस्कृतेन सह फारसी-शब्दानां संयोगोऽद्भुत एव वर्तते ।

करोम्यब्दुलरहीमोऽहं खुदाताला-प्रसादतः ।
फारसीकपदैर्युक्तं खेटकौतुक-जातकम् ॥
फारसीयपदमिश्रित-ग्रन्थः
पण्डितैर्बहुकृतः खलु सभ्यैः ।
प्राप्य तत्पदपथं करवाणि—
खेटकौतुकमसंवनबुद्धिः ॥

यदा मुश्तरी कर्कटा वा कमाने यदा चश्मखो राजनीवाऽऽवसाने
तदा ज्योतिषी क्या लिखेगा पढ़ेगा हुवा बालको पादशाही करेगा ॥

नायिकावर्णनम्, मदनाष्टकम्, दोहावली, रहीमकाव्यम्, शृङ्गारवर्णनम्, इत्यादीन् गद्यपद्यात्मकं-प्रबन्धानपि प्रणीतवान् ।

गोस्वामी-तुलसीदासमहोदयैः सहाऽपि खानखाना-महोदयस्य परिचय आसीत् ।

गोस्वामिमहोदयेन अधोलिखितमर्धं पदं लिखितम्—
"सुरतिय, नरतिय, नागतिय, सब चाहत अस होय,"

"गोद लिये हुलसी फिरै, तुलसी सो सुत होय ।"

अस्य द्वितीयं चरणं रहीमेन पूरितम् ।

अकबरः

मुजफ्फरजलालउद्दीन-मुहम्मद अकबरबादशाह नाम्ना जगद्विख्यातो यवन-सम्राट् । अस्य सभायाम् अनेके धर्माचार्याः, पण्डिताः, गुणिन आसन् ।

शरीफः

अयं 'महमूदगजनवी' सम्राजः सभ्य आसीत् । संस्कृतस्य उत्कृष्टः कविः । अस्य रचना ईदृशी—

अत्यन्तोन्नत-पूर्वपर्वत-महापीठे हरस्पर्धया,
दूरोदञ्चितधूमसन्निभतमस्तारा-स्फुलिङ्गाकुलम् ।
नूनं पञ्चशरोऽकरोच्छशिमिपात् स्वं ज्वाललिङ्गं यतो,
गर्वाच्छर्वपरान् दहेन्मुनिवरान् सर्वानखर्वांशुभिः ।

उकलैदसः ( यूक्लीड्स )

एष ख्रिस्ताब्दस्य त्रयोदश्यां शताब्द्यां भारतभागस्य गणित-विद्यामधीतवान् ।

अस्य निर्मिताऽनुवादित-रेखागणितनामको ग्रन्थः सम्प्रति प्राप्यते ।

फिरोजशाहः

अनेन फारस्यां श्रीमद्भागवतस्याऽनुवादः कृतः । दिल्लीसम्राट् मुहम्मदतुगलकोऽस्य पितृव्य-पुत्रो ज्येष्ठ-भ्राता आसीत् । अस्य नाम फिरोजशाहतुगलक सम्राट् । अनेनाऽपि १३५१ त आरभ्य १३८८ ईशाब्दपर्यन्तं राज्यं कृतम् ।

मोलाशी

एष अकबर-सम्राजः सभ्य आसीत् । अनेन नकीबखांसहचरो भूत्वा महाभारतस्य फारस्यामनुवादः कृतः ।

मुल्लासावरी

अकबरस्य सभ्यः

महाभारतानुवादे—सहायकश्च ।

सुलतानहाजी

अनेनाऽपि महाभारतस्यानुवादः कृतः । अस्य नाम सुलतानहाजीखानेश्वरी ।

बदापूनिः

अनेन, अधुना—सिंहासनबत्तीसी नाम्ना ख्यातस्य द्वात्रिंशत् पुत्तलिका-ग्रन्थस्याऽनुवादः "खिरद अफजा" फारस्यां कृतः ।

श्रीवाल्मीकीयरामायणस्य, महाभारतस्य चाऽनुवादः, अकबराऽऽज्ञया अनेन कृतः ।

हाजी इब्राहीमः ।

श्री अकबरानुरोधेनाऽनेन अथर्ववेदस्य फारस्यामनुवादः कृतः ।

मुल्लामोहम्मदः ।

महाभारतानुवादकर्तृष्वयमप्येकः ।

अबुलफजलः

अकबर-सभासदः, संस्कृतज्ञश्च ।

नकीब खाँ

अकबरस्य सभ्यः । महाभारताऽनुवादकर्ता ।

अबुल्फैजः

अकबरस्य सभ्यः । अनेन स्वहस्तेन ४६००० पुस्तकानि लिखितानि ।

महाभारतादि-अनुवादकर्ता संस्कृतज्ञः ।

सम्प्रत्यपि

अनेके यवनाः संस्कृतं पठन्ति ! पाठयन्ति च । ढाका-विश्वविद्यालयस्य संस्कृताध्यापको डा० मुहम्मद शाहीदुल्ला एम० ए० महोदयो विद्यते !

संस्कृत-भाषायाः प्रचारो यवनेष्वपि वर्तते । इति महद् गौरवमस्मत्साहित्यस्य ।

# वाङ्मयालोचनम् ।

## शिवराज-विजयः ।

प्रणेता—स्वर्गीय - महाकवि - भारतमार्त्तण्ड-पण्डित अम्बिकादत्त व्यासः, साहित्याचार्यः, प्रकाशकः-प्रणेतृ-पौत्रः श्रीकृष्णकुमार व्यासः, व्यास-पुस्तकालयः, मानमन्दिर, काशी । मूल्यम्-मुद्राद्वयम् । चतुर्थसंस्करणम् । प्राप्ति–स्थानम्, सुप्रभात-कार्यालयः, काशी ।

वयमेवास्य सम्पादकाः, अतएव तद्विषये किमपि कथनं प्रशंसनं वा न रोचतेऽस्माकमपि । परं तद्रहस्याऽभिज्ञानामस्माकमेव तत्राधिकारः प्रशंसितुम् । समासतश्चेदमेव वक्तव्यम् संस्कृतज्ञैरेकवारमिदमवश्यमवलोकनीयम् । य एकवारं पठिष्यन्ति, तेऽस्य स्वयं वन्दिनो भविष्यन्तीति सुदृढोऽस्माकं विश्वासः । समस्तेऽपि समुपलब्धे संस्कृत-साहित्ये नैतादृशी सत्यकथा, नैतादृशञ्च मसृण-मधुरं गद्यमद्यावधि समालोक्यते । एतद्गुणमुग्धैः परीक्षाध्यक्षैः प्रायः सर्वत्र संस्कृत-परीक्षासु पाठ्यत्वेन निर्द्धारितमिदं पुस्तकं संस्कृतज्ञैरेकवारं नूनमवलोकनीयम् ।

## भावप्रकाशः ।

प्रणेता—विद्वद्वर - श्री जीवनाथ दैवज्ञः, गुर्जर भाषान्तरकर्त्ता—ज्योतिर्विद्-भूषणम्, दैवज्ञ-प्रभाकरः श्री ज्यौतिषी वृन्दावन मणिकलाल शर्म्मा, कालूपुर, नवा दरवाजा, कंसारावाड, अहमदावाद । मूल्यम् सार्द्धमुद्रा ।

फलित-ज्यौतिष-विषये सरल-सरलः, नितरां प्रामाणिकश्च ग्रन्थः । अस्य भाषान्तरकर्त्रा विद्वद्वरेण, विविधज्यौतिष शास्त्र-ग्रन्थ-प्रकाशकेन सम्पादकेन, टीकाकारेण च श्रीमता वृन्दावन शर्म्म महोदयेन सुवर्णे सुगन्धिरिव सरलतरोऽनुवादः कृतः । येन स्वल्पज्ञा अपि सारल्येनार्थमवगन्तुं प्रभवेयुरिति बलवानस्माकं विश्वासः । वयमस्य परमोपयुक्ततया प्रचुरतरं प्रचारमभिलषामहे । अनुवादकेन, सम्पादकेन विदुषा विविध - ज्यौतिष - पुस्तकानां समयोपयुक्तानां सम्पादनं प्रकाशनं क्रियते च । इति वयं तस्मै धन्यवादान् वदन्तोऽस्योत्साहसमृद्धिं समभ्यर्थयामहे ।

## याज्ञवल्क्य-शिक्षा

'शिक्षावल्ली'–विवृति सहिता । टीकाकारः सम्पादकश्च श्रीअमरनाथशास्त्री, दीक्षितः । प्राप्तिस्थानम्—पशुपतीश्वर, काशी, अथवा सुप्रभात-कार्यालयः, काशी । मूल्यम्—एकामुद्रा ।

शिक्षा हि नाम वेदस्य षडङ्गेषु प्रथमं प्रधानञ्चाङ्गम् । परमिदानीं कियतः कालादस्य पठन-पाठन-प्रचारो लुप्तप्राय एव । विविधेषु शिक्षाग्रन्थेषु याज्ञवल्क्यशिक्षा सर्वाङ्गपूर्णा मूर्द्धन्यं स्थानमलङ्करोति । प्रचाराभावादस्यां काठिन्यं समायातम् । नास्याः काचन टीका प्रौढा, सरला, व्युत्पादयित्री, मर्मस्फोटिनी च समुपलभ्यते । अतः श्रीमद्भिर्दीक्षितमहोदयैरत्र 'शिक्षावल्ली' नाम्नी सर्वाङ्गसुन्दरी, स्फीततरा, मर्मप्रकाशिका प्रामाणिकी च टीका विनिर्मिता, प्रकाशिता च ।

अस्याष्टीकाकाराः केवलं वैदिका विद्वांस एव न सन्ति, परं व्याकरण-साहित्ययोः, धर्मशास्त्रे, मीमांसायाञ्चातिनिपुणाः, श्रौत-भास्कराः सन्ति । एभिर्महता परिश्रमेण, महताञ्च महाविदुषां सहयोगेन, सम्मत्या, साहाय्येन चेयं विवृतिः सम्पादिता ।

वयमस्याः प्रचारं प्रतिदिनमेधमानं समीहामहे ।

× × ×

## चरण-व्यूहः ।

महर्षि-शौनक-प्रणीतानि चरणव्यूहसूत्राणि । आचार्यमहिदासकृत-भाष्य-सहितानि । वेदाचार्य श्रीमदनन्तरामडोगरा-महोदयेन सम्पादितानि । चौखम्भा-संस्कृत-ग्रन्थमालायां प्रकाशितानि, तत एव च लभ्यानि ।



सम्पादकः

वेदानां संख्या, तेषां भेदाः, शाखाः, विकृतयः, सूत्राणि अन्ये च वेद-सम्बन्धिनो विषयाः अत्र सन्ति । परमप्रसिद्धोऽयं प्रमाणिको ग्रन्थः । तत्र वैदिकप्रवरैः श्रीमदनन्तरामडोगरामहोदयैर्विविध-पुस्तकादीनां विदुषाञ्च मतमादृत्य टिप्पण्यादिभिः परिष्कृत्य [illegible] सम्पा-

दितः सर्वथा समीचीनः। अष्टौ विकृतयः सोदाहरणाः प्रदर्शिताः। वैदिक-पुस्तकानां संशोधने सम्पादने च सिद्धहस्ता एव श्रीमन्तो डोगरामहोदयाः। मूल्यमस्य न लिखितम्।

## सत्याग्रह-गीता।

प्रणेत्री–श्रीमती क्षमाराव। प्राप्ति स्थानम्—२७, मॅरीन्लाइन्, बंबई। पेरिसनगरे मुद्रिता।

श्रीमती विदुषी क्षमादेवी कीदृशी विद्यत इति विविध-विदुषां परिचये निवेदितमेवास्माभिः। तस्या एव महार्हासु कृतिषु सत्याग्रहगीता प्रधानं स्थानमासादयति। अस्या अष्टादशाध्यायेषु सत्याग्रहस्येतिहासः, तदपेक्षया च गान्धि महोदयस्य जीवनवर्णनमपि कृतम्। अफ्रीका-देशादारभ्य लवण-सत्याग्रहं यावत्, मोहमयी प्रभृति नगरेषु च जातस्य वैदेशिकानामत्याचारस्य सजीवं प्रत्यक्षमिव चित्रं चित्रितम्।

अस्याः रचना, वाल्मीकि-व्यास सरणिमनुसरन्ती, सरस-सरला, प्रसन्न-मधुरा, मसृण मसृणा, पाठकानां हृदयङ्गमा, आकर्षण-कारिणी च विद्यते। साम्प्रतं स्थानाभावादत्र समुदाहरणानि दातुं न पार्यते। केवलमाद्यन्तयोः द्वित्राः श्लोका आदर्शरूपेणोद्ध्रियन्ते—

गम्भीरो विषयः कार्यं श्रेष्ठःसत्याग्रहात्मकः।
कृत्स्ने जगति विख्यातः क मे लघुतमा मतिः॥

× × ×

दुहिता शङ्करस्याहं पण्डितस्य क्षमाभिधा।
अक्षमाऽपि कवेर्मार्गे श्रोतव्या वस्तुगौरवात्॥

× × ×

लोकधर्मद्वयग्लानेर्नृपधर्मस्य च क्षयात्।
सञ्जातः सर्वतः क्षोभो लोकाश्चासन् विपद्गताः॥
तस्मादधर्मनाशाय प्रशान्तेः स्थापनाय च।
गान्धिरूपेण भगवानवतीर्णः किमु स्वयम्॥
सत्यं विजयतां लोके मुक्तं भवतु भारतम्।
नन्दन्तु सुखिनः सर्वे देशजाश्च विदेशजाः॥

एनया कथाकुसुमम्, विचित्र-परिषद्यात्रा नामकं स्वल्पं पुस्तकद्वयमन्यच निर्मितम्। तदग्रिमाङ्केषु प्रकाशयिष्यामः। पुस्तकमिदममूल्यं संस्कृतज्ञैः पठनीयम्। अस्य प्रचुरं प्रचारमभिलषामः।

× ×

# संस्कृत-समाचाराः।

## अखिल-भारतीय-संस्कृतच्छात्र-सम्मेलनम्।

अखिल-भारतीय-संस्कृतछात्र-सम्मेलनस्य द्वितीयमधिवेशनं वाराणस्यां दिसम्बरमासस्य २९-३०-३१ दिवसेषु वाराणस्यां महता समारम्भेण सम्पत्स्यते। स्वागताध्यक्षाः, महामहोपाध्यायप्रथमनाथतर्कभूषण-महोदया विद्यन्ते, स्वागत-मन्त्रिणौ च श्रीगजानन्दगुरु—श्रीमाधवप्रसादमिश्रौ वर्त्तेते। सम्मेलन-साभापत्याय सप्त नामानि निर्दिष्टान्यासन्। तत्र शङ्कराचार्याः भारतीकृष्णतीर्थ-महोदयाः [ पुरी ], श्रीमन्तः पण्डित ईश्वरीदत्त-दौर्गादत्ति शास्त्रिणः [ विहार-संस्कृत-समिति-सम्पादकाः ], श्रीमन्तो महामहोपाध्यायाः श्रीगिरिधरशर्म्माणश्चतुर्वेद-महोदयाः, श्रीमन्तो विद्यावाचस्पतयः श्रीशालग्रामशास्त्रिणः [ लखनऊ ], महामहोपाध्याय-माधवशास्त्रिणः, भण्डारी ( लाहौर ), महामहोपाध्याय-बालकृष्णमिश्राः ( काशी ), एतेषां नामसु श्रीमन्तः सुप्रसिद्धाः, व्याख्यानवाचस्पतयः, संस्कृत-साहित्य-सम्मेलन-सञ्चालकाः, महामहोपाध्यायाः पं० गिरिधरशर्म्म-चतुर्वेदा एव समधिकमतैर्निर्वाचिताः सन्ति। एतेन सम्मेलनेन सह अभिनवसाहित्य-सम्मेलनम्, कविसम्मेलनम्, सम्पादक-सम्मेलनम्, युक्तप्रान्तीय-छात्र-सम्मेलनम्, वाराणसेय-छात्र-सम्मेलनञ्च भविष्यति।



श्रीमाधवप्रसाद मिश्रः

अत्र कार्ये वाराणसेय-संस्कृत-छात्र-सम्मेलन-मन्त्री महाकुलो महोत्साहः श्रीमाधवप्रसादमिश्रो महत्कार्यमनुतिष्ठति । तस्यैव महता परिश्रमेण, महतोत्साहेन च संस्कृतच्छात्रेषु जागर्तिः समुत्पन्ना ।

× × ×

## आर्ष-पाणिनीय-व्याकरण-प्रचारः ।

आश्विनमासे वाराणस्यां 'टाउनहाल'-नाम्नि सभामण्डपे संस्कृत-साहित्य-समाज-प्रयत्नेन महती सभा समपद्यत । महामहोपाध्यायैः पण्डित-शिरोमणिभिः श्रीप्रमथनाथतर्कभूषण—महोदयैः सभापतेरासनं गृहीतमासीत् । सर्वप्रथमं संस्कृत-शिक्षा-परिवर्तनविषयमवलम्ब्य सुप्रभात—सम्पादकानां श्रीकेदारनाथशर्म्मणां गभीरं व्याख्यानमभूत् । तदनन्तरञ्च पटना विश्वविद्यालय-प्रधान-संस्कृताध्यापकानाम् श्रीहरिशङ्कर पांडेय व्याकरणाचार्य-महोदयानां स्वनिर्मित—आर्ष-पाणिनीय-व्याकरण—विषये सुविस्तृतं भाषणमभूत् ततश्च श्रीमतां सभापति शर्म्म—महोदयानाम्, श्रीगोपालशास्त्रिणाम्, श्रीतर्कभूषण-महोदयानाञ्च भाषणान्यभूवन् । सभायामेव निर्णयो जातो यत् सिद्धान्तकौमुद्याः पठने छात्राणां भूयान् समयव्ययो भवतीति—अष्टाध्यायीक्रमानुसारमेव प्राचीनप्रणाल्या अध्ययनं भवतु । तदर्थञ्च श्रीमद्भिः पण्डित हरिशङ्कर महोदयैरार्षपाणिनीयं व्याकरणं सम्पादितम्, तदतितरां रमणीयम्, मननीयम्, सुलभञ्चेति । [ एतत् पुस्तकं सुप्रभात-कार्यालयतो मुद्रात्रयेण लभ्यते ] ।

× × ×

## वेध-विज्ञान-परिषद् ।

सुप्रभात-कार्यालये सितम्बरमासस्य १४ दिवसे सायं काशीस्थ-विदुषां ज्योतिर्विदाञ्च महत्त्वपूर्णा सभा सञ्जाता । तत्र च इन्दौर-नगर-प्रधान-ज्योतिर्विदाम्, 'भारत-विजय'-पञ्चाङ्ग-प्रणेतॄणाम्, वैदिकतत्त्वानुसन्धानाचार्याणाम्, विविध ग्रन्थ-लेखकानां विद्याभूषण-श्रीदीनानाथशास्त्रिचुलैटमहोदयानां स्वागतमभूत् । सभापतेरासनञ्च दैवज्ञशिरोमणिभिः श्रीदाऊजीदीक्षित-महोदयैः स्वीकृतमासीत् । तत्र पञ्चाङ्गानामेकीकरण-विषये श्रीमतां सभापति महोदयानाम्, ज्यौतिषाचार्य पं० रामानन्दमिश्र महोदयानाम्, चुलैट-शास्त्रिणाञ्च शास्त्रीय-युक्तिपूर्णानि, गभीरतराणि, विस्तृतानि च भाषणान्यभूवन् ।

काश्यां वेध-विज्ञान-परिषत्-स्थापन-विषये श्रीकेदारनाथ शर्म्मणां रुचिरं युक्तिपूर्णं भाषणमभवत् । तदनन्तरञ्च श्रीमद्भिः विन्ध्येश्वरीप्रसादशास्त्रिभिः प्रस्तावत्रयमुपस्थापितम्, यथा—

( १ ) काशीस्थविदुषामियं सभा विद्यानुरागवद्भ्यः श्रीमद्भ्यो महाराजाधिराज-इन्दौर-नरेश्वरेभ्यो हार्दिकान् धन्यवादान् वितरति, यैः ज्योतिर्विज्ञान-प्रचाराय प्रचुरतरं व्ययमुररीकृत्य पञ्चाङ्गसमितिः संस्थापिता, पुरस्कृताः प्रोत्साहिताश्च वैदिक-गवेषणाचार्याः, महाविद्वांसो दीनानाथशास्त्रि महोदयाः—इति ।

( २ ) काशीस्थ—विशिष्ट—विदुषामियं समितिः श्रीमद्भ्यो विद्यानुरागिभ्यो महाराजाधिराज-इन्दौर-महाराजेभ्यः सादरं निवेदयति, तान् सविनयमनुरुणद्धि च, यत् वाराणस्यां तेषां किमपि विशिष्टं कीर्त्तिचिह्नं नास्ति । तदत्र संस्कृत-विद्याप्रधान-केन्द्रभूतायां वाराणस्यामस्यां ते स्वीये प्रासादे वेधशालां तदध्यापन प्रयत्नञ्च सम्पाद्य धन्यवादार्हाः पुण्यभाजश्च भवन्त्विति ।

(३) अत्र वाराणस्यां वेध-विज्ञान-प्रचाराय विदुषां ज्योतिर्विदाञ्च समितिरेका संस्थाप्यते । यस्याः सभापतयः श्रीदाऊजीदीक्षिताः दैवज्ञचूडामणयः, मन्त्रिणश्च सुप्रभात-सम्पादकाः श्रीकेदारनाथशर्माणो भवन्तु । तस्य सदस्यास्त्विमे—१—श्रीमन्तः पं० रघुनाथशर्म्ममहोदयाः ( उपसभापतयः ) २—श्री तारादत्तपन्ताः, ३—श्रीगोपालशास्त्रिणः, दर्शन केशरिणः, ४—श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः, ५—श्रीलालचन्द्र आयुर्वेदाचार्याः, ६—श्रीदेवीनारायण-एड्वोकेट-महोदयाः, ७—श्री गौरीनाथपाठकाः, ८—श्रीरामेश्वर जोशी, ९—श्रीरामानन्दमिश्राः, ज्यौतिषाचार्याश्च ।

एतदपि निश्चितं यत् ज्योतिःसम्मेलनम् वाराणस्यां भवत्विति । —श्रीशिवशङ्कर त्रिपाठी, उपमन्त्री ।

× × ×

# सम्पादकीयम्

## श्रीमान् मङ्गलदेव-शास्त्रिमहोदयः।

परं प्रमोदास्पदं संस्कृत-प्रणयिनां यत् काशीस्थ-राजकीय-महाविद्यालयस्य [ बनारस-गवर्नमेन्ट-संस्कृत-कालेज ] अध्यक्ष पदे [ प्रिन्सिपल ] श्रीमन्तो मङ्गलदेवशास्त्रिणो युक्तप्रान्तीय-शिक्षाऽध्यक्षैर्नियुक्ता इति। तद्वयं प्रान्तीय-शिक्षाध्यक्षेभ्यो धन्यवादान् वितरन्तः, श्रीमतां शास्त्रि-महोदयानां हार्दिकं स्वागतं समभिनन्दनञ्च कुर्वाणाः, परं हर्ष-प्रकर्षमनुभवामः।

श्रीमङ्गलदेवशास्त्रिणां जन्म १९५२ तमे वैक्रमाब्दे समभूत्। बाल्यादेव संस्कृताध्ययने रुचिरासीदेतेषाम्। १९०९ तमे ईशवीये पञ्चापप्रान्तीय-संस्कृतशास्त्रिपरीक्षायां सर्वप्रथममुत्तीर्णाः। ततश्च विशिष्टमध्ययनं विधातुं वाराणस्यां समागताः। तत्र च श्रीमतां गोस्वामिदामोदरशास्त्रिणाम्, प्रातः स्मरणीयानां शिवकुमारशास्त्रिणाम्, मीमांसक-शिरोमणीनां नित्यानन्दशास्त्रिमहोदयानाम्, श्रीमदच्युत-मिश्रमहोदयानाञ्च सविधे न्याय-वेदान्त-मीमांसा-व्याकरणादिषु विशिष्टां नैपुणीमध्यगच्छन्।

१९१८ तमे वैक्रमाब्दे पञ्चापविश्वविद्यालयस्य एम० ए० परीक्षायामपि सर्वप्रथममुत्तीर्णाः, उच्च-शिक्षामवाप्तुं इङ्गलेण्डनगरीय-'आक्सफर्ड'-विश्वविद्यालये वैदिकानुसन्धानं विधाय, १९२२ तमे ईसवीये वत्सरे 'डी० फिल०' उपाधिं लब्धवन्तः। १९२४ वत्सरे च राजकीये 'सरस्वती-भवन'-पुस्तकालये अध्यक्षपदमारूढाः। १९३२ तमेशवीये वत्सरे च राजकीय-संस्कृत-परीक्षाऽध्यक्षा अभवन्। साम्प्रत वत्सरे च तदध्यक्षपदमारूढाः सन्ति।

एतेषां क्रमिक-विकाशमालोक्य केचन मात्सर्य-मग्न-मनसो नितान्त-तान्त-स्वान्ताः समुन्नतौ क्षुद्रतरं विरोधमकार्षुः। परमस्वाभाविकोऽसौ विरोधो न कस्याऽपि निष्पक्षस्य सचेतसो हृदये स्थानमासादयत्।

शास्त्रिमहोदयाः साम्प्रतं महाविद्यालयाध्यक्षाः [ प्रिन्सिपल ], संस्कृत-परीक्षाध्यक्षाः [ रजिस्ट्रार ], युक्तप्रान्तीय-संस्कृत-शिक्षाधिकारिणः [ सुपरिन्टेन्डेन्ट ऑफ संस्कृत-स्टडीज़, यू० पी० ] इति पद-त्रयस्याऽपि कार्यं निर्वहन्ति। श्रूयते युक्तप्रान्तीय-शिक्षा-संस्कार-समितेर्मन्त्रिपदेऽपि नियुक्ताः साम्प्रतं माननीयेन शिक्षामन्त्रिणा। एतदतिरिक्तं विविध राजकीय-संस्कृत-शिक्षा-समितिषु अध्यक्षाः, सदस्याश्च सन्ति।

वाराणसेय-राजकीय-महाविद्यालयो हि नाम निखिल-भारतीयः संस्कृत-विश्वविद्यालय इव वरीवर्त्ति। तदध्यक्षत्वं च महद् गौरवास्पदमुत्तरदायित्व-पूर्णञ्च वर्तते। अत्र पदे तस्यैवाऽधिकारिण आवश्यकता विद्यते, यः खलु प्राचीन-भारतीय-संस्कृति-संस्कृतः, संस्कृत-विदुषां छात्राणाञ्च वास्तविक-स्थिति-परिचितः, संस्कृत-समाजस्य सत्यः सुदृढश्च सेवकः, पक्षपात-रहितश्च स्यात्। तदत्र पदे वयं श्रीमन्तं शास्त्रि-महाभागं सर्वथा समुपयुक्तं सम्भावयामः।

पुराकाले तु आँग्लाः, शर्मण्याः वा अत्र सम्मानिते पदे तिष्ठन्तिस्म, येन संस्कृतज्ञानां महत् कष्टमासीत् सर्वविधम्। सर्वप्रथमे भारतीयाः श्रीमन्तो गङ्गानाथ-झा-महोदया अभूवन्। ततः प्रभृत्येवाऽत्र पदे भारतीया विद्वांसो नियुज्यन्ते-इति परं सुप्रभातं सुरभारती-प्रणयिनाम्।

तत्रापि शास्त्रिमहोदयानामत्रागमनं परं प्रमोदास्पदं स्यात् सुर-सरस्वती-सुप्रभात-प्रणयिनामिति सम्भावयन्तस्तेषां नैरुज्यम्, साफल्यञ्च कामयन्त आशास्महे यत् श्रीमन्तः शास्त्रिमहोदयाः स्वीयां स्वाभाविकीं पक्षपात-शून्यामनुद्वेगकरीं नीतिं वर्तयन्तः, सर्वेषां हृदयेऽपि सत्वरमेव महान्तं गौरव-स्थानमासादयिष्यन्तीति।

## श्रीमान् सत्यनारायणशास्त्रिमहोदयः ।

हिन्दू-विश्व-विद्यालयीये आयुर्वेद-महाविद्यालये अध्यक्ष-स्थानं चिरात् रिक्तमासीत्। चिरकालानन्तरं तत्र तत्रत्या एवाऽध्यापकाः सुप्रभातपाठकानां चिर परिचिताः प्रणयिनः, विद्यावारिधयः श्रीमन्तः सत्य-नारायणशास्त्रिणो भिषक्शिरोमणयः साम्प्रतमेव कियतः कालान्नियुक्ता इति सीमातिशायी प्रमोद-सम्वादः।

साम्प्रतं वाराणस्यां विद्वद्वैद्येषु, अध्यापने, चिकित्साविधौ, विद्वत्वे, सहृदयतायाम्, प्रभावे च श्रीमन्तः शास्त्रिण एव नितरामुपयुक्ततराः सन्तीति नाऽत्र कस्याऽपि विदुषो वैमत्यम्।

एतेषां विषयेऽपि केषाञ्चन छात्राणां विप्रतिपत्ति-रासीत् यदत्र न केवल-संस्कृतज्ञः; प्रत्युत आँगल-चिकित्सा-निपुणोऽप्युभयज्ञ अध्यक्ष अपेक्षत इति। परं वयन्तु मन्यामहे, यदायुर्वेदस्य तदैव वास्तविकं गौरवं स्यात्, यदा वैद्यानामुन्नतिः, प्राचीनतमा, आयुर्विज्ञान-पद्धतिश्च प्रसृता, सफला च भवेत्। आँग्ल्याः सम्मिश्रणेन तु उभयोरपि विनाशः स्यात्। प्राचीन-भारतीय-ज्ञान-विज्ञान-कलाकौशलादीनामभि-वृद्धिरेव हिन्दू-विश्वविद्यालय-स्थापनस्य प्रधान-मुद्देश्यम्। प्राचीनायुर्वेदपद्धतिर्यदि न समुन्नता भवि-ष्यति, तदा व्यर्थ एव प्रयत्नः स्यात्।

तदिमां सरणिमनुसरद्भिस्तदधिकारिभिः केवला-युर्वेद-महाविदुषः सम्मानं कृतमिति ते धन्यवादार्हाः।

वयमपि श्रीमतां शास्त्रिपादानां हार्दिकमभिनन्दनं कुर्वन्तस्तेषां नैरुज्यं साफल्यञ्च काशी-विश्वेश्वरात् प्रार्थयामः, सम्भावयामश्च यत्ते प्राचीनायुर्वेद-विज्ञान-पद्धति-समुन्नयने प्रचारे च सुदृढं प्रयतमानाः साफल्य-मासादयिष्यन्तीति।

× × ×

## नेपालराज्यस्य सत्कार्य्यम्।

श्रूयते किल वाराणस्यां धार्मिकबुद्ध्या काशीनिवासं विदधतां नेपालराज्य-प्रवासिनाम्, ब्राह्मणानाम्, विदुषाम्, वृद्धानाम्, अनाथानाम्, विधवानाञ्च कृते नेपालराज्यतो भरण-पोषणार्थम् पञ्चमुद्रावधि [illegible] साहाय्यं प्रदीयते यथायथम्। एषा व्यवस्था भूतपूर्व-महाराजैः प्रातःस्मरणीयैः श्रीमच्चन्द्रशमशेर-बहादुर-महोदयैः स्वोदारतया प्रचारिता-ऽऽसीत्। तदनुजैर्वर्तमान-महाराजाधिराजैर्युद्धशमशेर-महो-दयैः सा व्यवस्था द्विगुणीकृता, पञ्चानां स्थाने दशमुद्राः, एवं सर्वमपि साहाय्यं द्विगुणीकृतम्। साम्प्रतमेतेषां नेपाल-राज्य-प्रवासिनां सौकर्य्यार्थ नितान्तमावश्यकी सहायता समवशिष्टा आसीत्, यां विना नेपालप्रवासिनां कृते किमपि कष्टं वरीवर्त्ति। तच्च समुचितौषधिलाभ प्रबन्धा-भावः, एतस्य महतो दानस्य प्राणदानमपि प्रधानमङ्गं वरीवर्त्ति। तदेतदपि महत्कार्यं नेपालदेशीयैः, धार्मिक-चिकित्सकैः, आयुर्वेद-केशरिभिः श्रीमत्पण्डितवर-धीरेन्द्र-केशरिमहोदयैर्महता यत्नेन, समुत्साहेन च सम्पाद्यते। तच्च सुवर्णे सुगन्ध-सुयोगमिवं मनोहरं प्रतीयते। ते स्वयमेव नेपालदेशीयेभ्यः बाल-वृद्ध-वनिताभ्यः, अनाथेभ्यश्च औषध-वितरणं चिकित्सितञ्च विधाय नेपालराज्यस्य वास्त-विकं साहाय्यमनाथानां प्राणदान-पुण्यञ्चार्जयन्ति।

समाकर्ण्यते यत् प्रातःस्मरणीय-महाराजानां श्री-मच्चन्द्रशमशेर-महोदयानां सुयोग्यतमास्तनूजन्मान एव साम्प्रतं नेपालराज्यधुरं वहन्ति, ते च नितान्तं धार्मिकाः, उदार-चरिताः, पितृभक्ताश्च वर्तन्ते, यदि तेऽत्रात्यावश्यक कार्ये श्रीमतां परमोत्साहवतां श्रीधीरेन्द्रकेशरी-महोदयानां चिकित्सक-चूडामणीनां सहाय्यं विधाय औषधालय-प्रबन्धं विधास्यन्ति चेत् महत्तरं कार्यमेतन्महत्तमं भविष्य-तीति निश्चप्रचम्। मन्यामहे, नेपालराज्यमत्रनूनं दत्तावधानं भवेदिति।

× × × ×

## वाराणसेयच्छात्रसंघस्य विशिष्टाधिवेशनम्

विगत-गोपाष्टम्यां वाराणसेय-संस्कृतच्छात्रसंघस्य विशि-ष्टमधिवेशनं श्रीमतां मङ्गलदेवशास्त्रिणां एम० ए०-पी-एच्० डी०—महोदयानां [ प्रिन्सिपल-गवर्नमेण्ट-संस्कृत-कालेज, बनारस ] सभापतित्वे महता समारम्भेण सम्पन्नम्। एता दृशश्छात्रसमुदायो वाराणस्यां न कस्यापि सभायां सम्मि-लित आसीत्। बहवस्तु स्थानाभावात् परावृत्ताः। अत्र प्राधान्येन पण्डित-प्रवराणां वैयाकरण-शिरोमणि-श्रीहाराण-चन्द्र-भट्टाचार्य—महोदयानां [ प्रोफेसर-संस्कृत-कालेज, कलकत्ता ] 'संस्कृतच्छात्राणां सामयिकं कर्तव्य'मित्यस्मिन्

विषये विस्तृतं हृदयग्राहि भाषणमभूत् । तदनन्तरञ्च श्रीमतां पण्डितप्रवर-सभापति महोदयानाम्, वैद्यवर-श्रीबालगोविन्द महोदयानाम्, सुप्रभात-सम्पादकानाञ्च श्रीकेदारनाथशर्म्मणां संस्कृत-शिक्षापरिवर्तनविषये प्रोत्साहकानि भाषणान्यभूवन् । अन्ते च श्री डा० मङ्गलदेव-शास्त्रिणां विस्तृतं महत्त्वपूर्णं भाषणञ्चाभवत् ।

× × × ×

## धन्यवादाः, कृतज्ञता-प्रकाशश्च ।

सुप्रभातस्य साहित्याङ्को महता विलम्बेन-एकमासात्मकेन-निःसृत इति एतस्य प्रकाशने महती त्वराऽऽसीत् । लेखाश्चाऽपि बहव आसन् । तद्वयं मान्यानां लेखकातीथीनां मातिथ्ये, सुप्रभातस्य मुद्रापणे स्वीयं निर्द्धारितमपि प्रचुरतरं वक्तव्यम्, न प्रकाशयितुं शक्नुमः । साम्प्रतमावश्यकं किञ्चिन्निवेद्य विरमामः ।

साहित्यं हि नाम गम्भीरतरं वस्तु । तस्य विशिष्टाङ्क प्रकाशनं संस्कृते दुष्करमेव कार्यम्, द्रव्याभावात, तत्तद्विषयक-लेखक-नैयून्येन च । परमस्माकं हार्दिक-सहयोगिनः, परमोत्साहवन्तः, प्रथितयशसः, आयुष्मत ईशदत्तशास्त्रिणः 'श्रीश'स्य सुप्रभात-कवेरासीत् प्रबलोऽभिलाषः, यत्सुप्रभातस्य विशिष्टोऽङ्कः कश्चन प्रकाशितो भवेत् । यद्यपि स्वल्पतम-मूल्यस्य, क्षुद्रतम-कलेवरस्य सुप्रभातस्य विशिष्टाङ्क-प्रकाशनमपि महद्दुःसाहसमेव । तथापि मासद्वयस्य युग्माङ्करूपेण गताङ्काऽवशिष्टषोडशपृष्ठावशेषेण च सम्पादितमिदं केवलं विविधविद्वत्तल्लजानां भावपूर्णैर्मनोहरैर्लेखैः कुसुमस्तवक इव पाठकानां मनोरञ्जनमात्रमेव विदध्यादिति सम्भावयामः ।

शारदावकाशे बहिर्गमनेन विविधकार्यव्यग्रतया च मुद्रण-समयेऽपि महती त्वरा कृता । त्वरया च यत्रकुत्राप्यशुद्धयः, प्रायशो मुद्रणाशुद्धयश्च बह्व्यः सन्ति, ताश्च पाठकमहोदयैः स्वाभाविक-सारल्येन, सहृदयतया च क्षन्तव्याः । अत्र मुद्रणकार्ये, शोधनकार्ये, सम्पादनकार्ये च सर्वाधिकं साहाय्यं सहायकैः श्रीमद्भिरीशदत्तशास्त्रिभिरेव प्रदत्तम्, तदर्थं तेषां कृतज्ञताभरमूरीकुर्वन् तेभ्यो हार्दिकान् धन्यवादानाशीर्वादांश्च वितरन्तः सम्भावयामो यत्ते सुप्रभात-सम्पादन-दक्षाः पाठकानां सम्यगाराधनं विधातुं प्रभविष्यन्तीति ।

सुप्रभातमिदं युक्तप्रान्तीयैः, मध्यप्रान्तीयैः, विहारप्रान्तीयैश्च शिक्षाध्यक्षैः, स्व-स्व-प्रान्तीय-शिक्षासंस्थासु पाठ्यत्वेन, पुरस्कारप्रदानाय च स्वीकृतमिति तेभ्यः सादरं धन्यवादान् वितरामः ।

यैरस्माकं दयालुभिर्लेखकमहाभागैः प्रचुरं समयव्ययमासाद्य सुप्रभाते लेखाः प्रेषिताः, त एव वस्तुतः सुप्रभातस्य परमसहायकाः सन्ति । तेषां कृतज्ञताभरं बिभ्रन्तो हार्दिकान् धन्यवादान् वितरन्तस्तेषां पुनरपि समये समये महत् सहाय्यमपेक्षामहे ।

येषां पुनर्लेखक-महोदयानां लेखा न प्रकाशितास्तेभ्यः सविनयं क्षमाप्रार्थनं कुर्वन्तस्ताननुनयैः सम्भावयामः ।

विलम्बेन समुद्विग्नानां ग्राहकाणामपि वयं चिरकृतज्ञाः स्मः, येऽस्मदपराधं मर्षयित्वाऽस्मासु सदा दयन्ते, दयिष्यन्ते च ।

अग्रिमो नवमोऽङ्कः, दशमश्च दिसम्बरमासाभ्यन्तर एव क्रमशः प्रकाशितौ भविष्यत इति निश्चितम् ।

मुद्रितोऽपि भूयानंशो न प्रकाशितुं पारितः । तदर्थं तेभ्यः क्षमा-प्रार्थनं कुर्मः । विशेषतश्च प्रियवर्येभ्यः पं० राजकृष्णवाञ्चू बी० ए०—महोदयेभ्यः क्षमाप्रार्थनं कुर्मः । श्रीमद्भिर्गान्धिमहोदयैः तेषां पत्रव्यवहारः, एकस्य महात्मनश्च पत्रमासीत् । तदग्रिमाङ्के सत्वरं प्रकाशितं स्यात् ।

यैरनुग्राहकैः चित्र त.श्चित्रादिप्रेषणेन, विविधसम्मतिप्रदानेन चानुगृहीताः स्मस्तेऽपि नितरां धन्यवादार्हाः । तत्र मिथिलामिहिर-सम्पादकाः, सहृदय-शिरोमणयः श्रीसुरेन्द्रझा-साहित्याचार्याः, अभिन्न-हृदयाः श्रीशिवपूजनसहाय-महोदयाश्चास्माकं सविशेषं धन्यवाद-भाजन-भूताः सन्ति । इत्यलमनल्पजल्पनया । सुप्रभातम् !!

× × × ×

## स्वागतम् !!

पञ्जाबप्रान्तीय मुलतान-निवासिनः, निखिल-भारते सुप्रसिद्धाः, सनातनधर्म व्याख्यातारः, विद्यावागीशाः अस्मत् प्रिय सुहृदः श्रीमत्पण्डित यदुकुल भूषण गोस्वामि महोदयाः, वाराणस्यां समागताः सन्तीति पत्र प्रकाशनावसरे ज्ञातमिति तेषां हार्दिकं स्वागतं कुर्महे । मार्गशीर्षशुक्ल नवम्यां मेतेषां स्वागताभिनन्दनं काशी-पण्डितसभा-संस्कृत-साहित्य-समाज-सारस्वतसंघ-प्रभृति-सभाभ्यो महता समारम्भेण भविष्यति ।

# सुप्रभातस्य संरक्षकाः

१—काञ्ची-कामकोटिपीठाधीश्वराः जगद्गुरवः श्री १०८ शङ्कराचार्यमहोदयाः, कुम्भकोणम् ।

२—रानूपाली स्थानाधीश्वराः श्रीमहन्त पण्डित बाबा श्रीकेशवरामोदासीनमहोदयाः ( अयोध्या ) ।

३—देहरादून-स्थानाधीश्वराः श्रीमहन्त—बाबा लक्ष्मणदास-महोदयाः ( देहरादून ) ।

४—परमहंस—परिव्राजकाचार्य—श्रीमण्डलेश्वर-पं० गङ्गेश्वरानन्द-शास्त्रिमहोदयाः (काशी) ।

५—श्रीमत्परमहंस—परिव्राजकाचार्य—लोकसंग्रहिणः श्रीविद्यानन्दस्वामिमहोदयाः, महामण्डलेश्वराः ( काशी ) ।

६—काशिस्थ—विश्वाराध्य—संस्थानाधीश्वराः श्रीपञ्चाक्षर-शिवाचार्य—महोदयाः, काशी ।

७—जगद्गुरु शिवानन्दराजेन्द्र महोदयाः, वालेहोन्नूर ( कर्णाटदेशः )

१—श्रीमन्महाराजाधिराज—हिन्दूसूर्य-हिजहाई-नेस श्रीभूपालसिंह—महोदयाः, उदयपुराधीश्वराः ( मेवाड़ ) ।

२—भिषक् शिरोमणयः स्वर्गीय—श्रीनारायण शङ्कर—देवशङ्कर—शास्त्रिणः—प्राणाचार्याः, ( अहमदावाद ) ।

३—राजा बलदेवदासविरलामहोदयाः (काशी) ।

४—माननीय सेठ युगलकिशोरविरला(कलकत्ता) ।

५—माननीय सेठ घनश्यामदासविरला ( कलकत्ता ) ।

६—संस्कृत-साहित्य-सम्मेलनम् ।

७—आर्यप्रतिनिधि सभा ।

८—महामहाध्यापक—विद्यासागर—विद्याभूषण-पण्डितरत्नम् - साहित्याचार्य - व्यायाम-विशारद—'द्वादशभाषा-विशारद'- श्रीनरसिंह शास्त्री, मोटीनसर, सिरसी, उत्तर-कर्णाटदेशः ।

## पोषकाः सदस्याः

श्री 'कल्याण'—सम्पादकाः, गोरखपुरम् ।

श्री हरिप्रसाद एम० पण्ड्या, अहमदावाद ।

सुप्रभातस्य नवमोऽङ्कः परिशिष्टाङ्क-रूपेण सत्वरमेव प्रकाशितो भवति । अवशिष्टा लेखाः, वाङ्मयालोचनञ्च-सर्वमेतत् तत्रैव प्रकाशितं भविष्यति । लेखकैः, पुस्तक-प्रेषकैश्च कृपया मर्षणीयम् । नवमाङ्को दिसम्बरमासस्य पञ्चदश दिवसे, दशमाङ्कश्च ३० तमे दिवसे प्रेषितः स्यात् । ग्राहकैर्न त्वरणीयम् । न च कार्यालये पत्राणि प्रहेयानि । येषां पार्श्वे साहित्याङ्को न प्राप्तः स्यात्, तैर्नूनं पत्रं प्रहेयम् ।

—व्यवस्थापकः ।

Regd. No. A. 1348.




## संस्कृत और हिन्दी के साहित्य-संसार में नवयुग-प्रवर्तन !

# सुप्रभात का प्रकाशन-विभाग !

बहुत दिनों से, बहुत लोग कहा करते हैं कि संस्कृत में नवयुग के अनुकूल परमोपयोगी साहित्य-सृष्टि नहीं हो रही है। यह भी कहा जाता है कि हिन्दी के भाण्डार में वे रत्न नहीं है जो संस्कृत भाषा के द्वारा पैतृक सम्पत्ति के रूप में उसे मिलने चाहिये थे। इन दोनों अभावों की पूर्त्ति के लिये—

## 'सुप्रभात-ग्रन्थमाला'

शीघ्र प्रकाशित की जा रही है। इसमें कई तरह की संस्कृत और हिन्दी-सिरीजें निकाली जा रही हैं।

१—पहली सिरीज में संस्कृत की छोटी २ पुस्तकें कवितासंग्रह, निबन्धमाला, आदि प्रकाशित होंगी। जैसेः—सुप्रभात-गीताञ्जलिः, सुप्रभात-निबन्धमाला इत्यादि।

२—दूसरी हिन्दी सिरीज होगी, जिसमें संस्कृत के उपयुक्त, लोकोपकारक ग्रन्थों का अनुवाद प्रकाशित होगा।

३—आयुर्वेद-ग्रन्थमालामें—सर्वसाधारणोपयोगी, ग्राम्यजनोपयोगी, सुलभ और सुन्दर पुस्तकें प्रकाशित होंगी।

४—चौथी ग्रन्थमाला में परीक्षोपयोगी और छात्रोपयोगी टीकाएँ प्रकाशित होंगी।

सुप्रभात के ग्राहकों को विशेष सुविधाएँ रहेंगी।

**व्यवस्थापक, सुप्रभात-कार्यालय, काशी।**

Printed at Shri Lakshmi Narayan Press, Benares and
Published at Suprabhat Karyalaya, Sakshivinayak Lane, Benares by E. K. Vyas.

SPECIAL NUMBER

[ *Approved by the Directors of Educations U. P., C. P. and Behar for Colleges, Schools, Sanskrit Pathshalas, Libraries and Prizes.* ]

# THE SUPRABHATAM

# सुप्रभातम्

VOL. XII
No. 9

NOVEMBER 1938

वर्ष १२
सं० ९

द्वादशाब्दस्य मार्गशीर्षः



नवमोऽङ्कः

वार्षिकं मूल्यम्
एका मुद्रा

अस्याङ्कस्य
आणकद्वयम्





संपादकः
श्री केदारनाथशर्म्मा सारस्वतः

व्यवस्थापकः, प्रकाशकः, मुद्रकश्च
श्री मदनगोपाल शर्म्मा



तिमिर-ततिमुदस्यद्, भेद-तारा विलुम्पत्, नयदधिसुरभाषाभाष्ट जागर्त्तिमुच्चैः ।
विबुध-विहग-वादैराह्वयद् भाग्य-भानुम्, विलसतु भुवनेऽस्मिन् सर्वतः 'सुप्रभातम्' ॥



१९९५

# विषय-सूची



# सुप्रभातस्य संरक्षकाः

१—काञ्ची-कामकोटिपीठाधीश्वराः जगद्गुरवः श्री १०८ शङ्कराचार्यमहोदयाः, कुम्भ-कोणम् ।

२—रानूपाली स्थानाधीश्वराः श्रीमहन्त पण्डित बाबा श्रीकेशवरामोदासीनमहोदयाः ( अयोध्या ) ।

३—देहरादून-स्थानाधीश्वराः श्रीमहन्त—बाबा लक्ष्मणदास-महोदयाः ( देहरादून ) ।

४—परमहंस-परिव्राजकाचार्य-श्रीमण्डलेश्वर-पं० गङ्गेश्वरानन्द-शास्त्रिमहोदयाः (काशी) ।

५—श्रीमत्परमहंस—परिव्राजकाचार्य—लोकसंग्रहिणः श्रीविज्ञानन्दस्वामिमहोदयाः, महामण्डलेश्वराः ( काशी ) ।

६—काशिस्थ—विश्वाराध्य-संस्थानाधीश्वराः श्रीपश्चाक्षर-शिवाचार्य-महोदयाः, काशी ।

७—जगद्गुरु शिवानन्दराजेन्द्र महोदयाः, बाले-होन्नूर ( कर्णाटदेशः )

१—श्रीमन्महाराजाधिराज-हिन्दूसूर्य-हिजहाईनेस श्रीभूपालसिंह-महोदयाः, उदयपुराधीश्वराः ( मेवाड़ ) ।

२—भिषक्शिरोमणयः स्वर्गीय-श्रीनारायण शङ्कर-देवशङ्कर-शास्त्रिणः-प्राणाचार्याः, ( अहमदाबाद ) ।

३—राजा बलदेवदासबिरलामहोदयाः (काशी) ।

४—माननीय सेठ युगलकिशोरबिरला (कलकत्ता) ।

५—माननीय सेठ घनश्यामदासबिरला ( कलकत्ता ) ।

६—संस्कृत-साहित्य-सम्मेलनम् ।

७—आर्यप्रतिनिधि सभा ।

८—महामहाध्यापक-विद्यासागर-विद्याभूषण-पण्डितरत्नम्-साहित्याचार्य-व्यायामविशारद—'द्वादशभाषा-विशारद'-श्रीनरसिंह शास्त्री, मोटोनसर, सिरसी, उत्तर-कर्णाटदेशः ।

## पोषकाः सदस्याः

श्री 'कल्याण'—सम्पादकाः, गोरखपुरम् ।

श्री हरिप्रसाद एम० पण्ड्या, अहमदाबाद ।



# सुप्रभातम्



द्वादशाब्दे | मार्गशीर्षः, १९९५ वैक्रमाब्दाः | नवमी-संख्या

## 'दृढनिगडनिबद्धा वीक्षते भारतश्रीः'

( श्रीमन्महादेवशास्त्री, कवि-तार्किक-चक्रवर्ती, हिन्दूविश्वविद्यालयाध्यापकः )

( १ )

अरुण-तरुण-रिङ्गद्-रश्मि-रक्त-प्रभाता
तरणि-किरण-तप्त-स्वर्णवर्णोरुमूर्तिः;
द्रुमदल-नव-शस्य-श्याम-सीमाभिरामा
दृढनिगडनिबद्धा वीक्षते भारतश्रीः ॥

( २ )

विगतदशशताब्द-प्राप्त-दास्याभिताप-
क्वथित-हृदय-निर्यद्घोर-घोरार्तनादा;
प्रथित-पुरुषकारारम्भ-सम्भार-धीरान्
दृढनिगडनिबद्धा वीक्षते भारतश्रीः ॥

( ३ )

प्रथम-यवन-पादाघात-मूर्च्छत्तमोऽन्धा
तदनु दनुगुरुण्डोच्छुष्क-सर्वार्थबन्धा;
हृदय-दहन-कील-ग्रीष्मरक्त-प्रवाहान्
दृढनिगडनिबद्धा वीक्षते भारतश्रीः !!

# मूलस्तुतिः ।

[ निबद्धा काशीस्थः–साहित्यवाचस्पतिर्महाकविः श्रीज्वालारामनागर 'विलक्षण'–महोदयः ]

( १ )

सुमतिजगति भास्वद्भासमानस्वरारा
शिखरित-करपुञ्जा किंशुकाकार-हारा ।
मतिविकल-विधारा शश्वदानन्द-धारा
नटतु हृदय-रङ्गे गेयमारभ्य भारा ॥

( २ )

सवियदुदधिविभ्रद्वाडव-प्रस्फुलिङ्गां
प्लुन-परिणत-सङ्गां सव्यभव्याहिलिङ्गाम् ।
शिरसि कलितनृत्यन्मोदकाक्तैकदन्तां
हृदय भज पराभा रोम-कुञ्जे रमन्ताम् ॥

( ३ )

प्रणव-वसन-दिव्या शक्ति-सन्दीप्त-हारा
विलसदमलविन्दु-स्विन्दुलेखा-किरीटा ।
मतिरपहृत-मध्या सास्वरा ब्रह्मविद्या
भवतु समसुखानां श्रेयसे नः सवित्री ॥

( ४ )

ज्वलदनल-विकासा सायवाकूतालुमूला
क्रमविहित-तुरीयात्मस्वरोद्यद्दुकूला ।
मुकुट-मिहिर-विम्बावद्धसोमार्द्ध-कूला
भवतु भुवि भवानो भूतये सानुकूला ॥

( ५ )

प्रथमकमल-वर्णस्वच्छगन्धं दधाना
स्वरयुग-परिधाना भासमानाऽसमाना ।
कलित-शिखर-तिर्यङ्नाल-पद्म-प्रधाना
वसतु मम तमःस्थे मानसे शं ददाना ॥

( ६ )

ध्वनित-विविध-नाद-स्फार-खब्रह्म-वर्णां
सकललसदिलाधूर्धारिणीमामपर्णाम् ।
चपल-चरणरिङ्गच्छाम्भवी-गाङ्ग-मालां
स्मर नर शिव-शालां रोहिणी-चन्द्रभालाम् ॥

( ७ )

तां व्यञ्जनादिपरमां परमाणुवासां
जाज्वल्यमान-महसा सहसा सहासाम् ।
भ्रूचुम्बि-सव्यघन-केशकला-विलासां
मूर्ध्नि स्मरामि धृतखर्प्पर-चन्द्रहासाम् ॥

( ८ )

स्थिरतरमनसाऽमुं मन्त्रराजं निशार्द्धे
जपति पितृवने यो निर्भयो लक्षमेकम् ।
प्रणव-युतममोघं पल्लवास्त्र-प्रयुक्तं
भवति कविकलाभृत्सूरि-सम्भाविताङ्घ्रिः ॥

( ९ )

पाण्डित्यं जटिलैः पदैरिति कवेर्ये पण्डिता मन्वते
ते धुन्वन्तु शिरो विलक्षण-कृति-व्याख्याविधौ विद्विषः ।
तेषामेव कृते स्वकाव्यलतिकासारल्य-सूनोज्ज्वला
लीलालास्य-ललज्ज्वलज्जटिलतायैरालवालीकृता ॥

# सम्पादकीयम् ।

## परिशिष्टाङ्कः ।

साहित्याङ्के प्रकाशनार्थं बह्वो लेखाः समागता आसन्। परन्तत्र स्थानाभावत्ते न प्रकाशिता इति परिशिष्टाङ्क-प्रकाशन-प्रबन्धः कृत आसीत्। परं यन्त्रालयाधिकारिणां कार्यव्यग्रतया विलम्बवशादस्माकमुत्साहः शैथिल्यं भजते। साहित्याङ्के कृतभूरिपरिश्रमाः 'श्रीश'—कवयोऽपि साम्प्रतं परीक्षा-विधौ संलग्नाः सन्ति। तेषामेवोत्साह आसीद्वैशिष्ट्येन। इति कारण-परम्परया यद्यपि नाम्ना परिशिष्टाङ्को न प्रकाशितः, तथापि लेखास्तु क्रमशः प्रकाशिता एव भविष्यन्तीति लेखक-महोदयैर्मर्पणीयम्। साम्प्रतं पौष-माघयोः संयुक्ताङ्के सर्वेऽपि लेखाः प्रायो मुद्रिताः स्युः।

× × ×

## श्रीचन्द्र-महाविद्यालयः ।

वाराणस्यां श्रीचन्द्र-महाविद्यालयश्चिरन्तनः सुप्रसिद्धश्चास्ते। कियतः कालात् तदध्यक्षाणां श्री० पं० दर्शनानन्दस्वामिनां प्रबन्धे तु तेन महदुन्नतं स्थानमासादितम्। श्रीदर्शनानन्द-स्वामिनोऽप्यस्माकं परमस्निग्धा विद्वांस उत्साहवन्तश्च सन्ति। परमिदानीं कियतः कालात् विद्यालयविषये किमपि विज्ञापनपत्रं मुद्रितमस्माभिरुपलब्धम्, यस्य प्रकाशकः श्रीजितेन्द्रियाचार्यमहाशयो विद्यते, यस्तस्य विद्यालयस्य छात्र आसीत्। तत्र पत्रे यद्यन्मुद्रितम्, यद्याक्षिप्तम्, तद्विषये वयमनभिज्ञा एव स्मः। केवलं कर्णपरम्परया श्रूयते यत्किमपि। वयमत्र विद्यालयाध्यक्षान् सादरमनुरुन्ध्मो यत्ते कृपया वर्तमानसमयमालोच्य, संस्कृतज्ञानां परिस्थितिं विज्ञाय, विद्यालयीयां मर्यादाञ्चानुरुध्य दोषान् दूरीकुर्वन्तु। पं० जितेन्द्रियाचार्या अपि वैधरीत्या संशोधनप्रस्तावं स्थापयन्तु सहृदयानां स्वामि-महोदयानां पुरस्तात्।

× × ×

## संस्कृत-साहित्य-समाजस्य गुणपूजा ।

वाराणसी हि नाम संस्कृत-विद्यायाः प्रधानं केन्द्रम्। तत्र प्रायो विद्वांसः समागच्छन्ति। परं काशीस्थैर्विद्वद्भिः सह तेषां परिचयः, पारस्परिको विचार-विनिमयश्च न भवति स्म। एतेन पारस्परिक-प्रेमाभिवृद्धिस्तु दूरापास्ता; प्रत्युत विचार-वैषम्यमेव वर्द्धते स्म। काशीस्था विद्वांसः प्रायो बहिस्थान् पण्डितान् न सत्कुर्वन्ति, प्रत्युत तेषामभिभवे, मानमर्द्दने वा वाराणस्या गौरवमामनन्ति। येन बहिस्था विद्वांसो विमनायमाना प्रत्यावर्त्तन्ते स्म। केचन पण्डितम्मन्या ईदृशा अपि सन्ति, ये न केवलमुपेक्षन्ते, प्रत्युत तिरस्कुर्वते च। हन्त! नैतेन वाराणस्या गौरवं वर्द्धते; परं बहिस्थानां भावशैथिल्यमुत्साहहीनत्वञ्च समेधते। ते च स्वदेशेषु वाराणसेयान्निन्दन्ति। एवं पारस्परिक-वैमनस्यवृद्धिः, गुणाभिभवः, असहृदयत्वञ्च समेधमानं भवति स्म, न पारस्परिक-प्रेमाभिवृद्धिः, सङ्ग्रथनम्, विचार-विनिमयो वा। दोषममुं दूरीकर्तुं संस्कृत-साहित्य-समाजेन प्रथमं प्रयत्नो विहितः।

इदानीं यावत् विविध-विदुषां गुणाभिनन्दनं समाजेन विहितम्, विधीयते च। विश्व-विख्यात-यशसां वैदिकमहार्णव-मथन-मन्दरायमाण-बुद्धिवैभवानाम् जयपुरराज्यप्रधान-पण्डितानां श्रीमधुसूदन-झा—महोदयानाम्, निखिलभारतीय-षड्विंश-वैद्य सम्मेलन-सभापतीनाम्, अहमदाबाद-नगरस्थ-प्रधान-वैद्यानाम् स्वर्गीय-नारायणशङ्कर-देवशङ्कर-शास्त्रिणाम्, प्रथितयशसां महामहोपाध्याय-गिरिधरशर्म्मणाम्, सनातनधर्म-संरक्षण-बद्धपरिकराणाम् पण्डित-यदुकुलभूषणगोस्वामिमहोदयानाम्, खगोल-विज्ञान-विशारदानां विद्याभूषण-श्रीदीनानाथशास्त्रि-चुलैट-महाशयानाम्, महावैयाकरणानां विहारप्रान्त-मार्त्तण्डानां पं० श्री हरिशङ्कर-पाण्डेय-महोदयानाम्,

अन्येषाञ्च बहूनां विद्वद्वराणां गुणाभिनन्दनं कुर्वता, संस्कृत-साहित्य-समाजेन, महान् पवित्रतम आदर्शः संस्थापितः। एतदपि महत्साफल्यं यदस्मिन् कार्ये वाराणसेय-प्रधान-दिग्गजानां भारत-प्रथितानाम्-महामहोपाध्याय-प्रमथनाथभट्टाचार्याणाम्, आचार्य-गोस्वामि-दामोदरलालशास्त्रिणाम्, सर्वतन्त्र-स्वतन्त्र पण्डित-पद्मनाभशास्त्रिणाम्, विद्वद्वर-सभापति-शर्म्म महोदयानाम्, विद्यावयोवृद्धानां श्रीकाशीराम एम० ए० महोदयानाम्, श्रीपूर्णचन्द्राचार्य-महोदयानाम्, भिषक्शिरोमणि श्रीसत्यनारायणशास्त्रिणाम्, दैवज्ञ-शिरोमणि-श्रीदाऊजीदीक्षितानां, अन्येषाञ्च विशिष्ट विदुषां सहर्ष—सहयोगोऽपि नितान्तं गौरव-मासादयति।

वयं सम्भवयामो यद्वाराणसेया महान्तो विद्वांसस्तु वस्तुतः सहृदयाः, गुणैकपक्षपातिनः, सरल-हृदयाः सन्ति, केचन स्वार्थान्धाः क्षुद्राश्च तेषां निर्मले चेतसि व्यर्थं क्षोभं जनयन्ति। परमत्र विषये संस्कृत-साहित्य-समाजस्य विपुलं साफल्यमालोच्य वयं प्रमुदिता भवामः, सम्भावयामश्च समाज-सदस्यानां गुणैकपक्षपातिताम्, संस्कृत-समाजाऽभ्युदयकरीं ब्राह्मणोचिताम् गुण-पूजन-पद्धतिञ्च।

वस्तुत एवमेव संस्कृतज्ञेषु सङ्ग्रथनम्, समुन्नतत्त्वम्, गौरवं महत्वञ्च सेत्स्यति। एतदेव महतां महत्वम्, एतदेव विदुषां विद्वत्वम्, गुरूणां गुरुत्वञ्च। एतदर्थं संस्कृत-साहित्य-समाजः सङ्ख्यातीतान् धन्यवादानर्हति।

× × ×

## वाराणस्यां महती संस्कृत-संस्था।

यथा वाराणसी, निखिलेऽपि भूमण्डले संस्कृत-विद्या-प्रधान-केन्द्रत्वेन प्रसिद्धा, यथा च वाराणसेय-संस्कृत-शिक्षाया महत्वम्, यथा च काशीस्थ-विदुषां जगद्विदितं गौरवम्, न तथा काचन तादृशी गौरव-भूता जगन्मान्या केन्द्रभूता विदुषां महती संस्था वरीवर्त्तते। सुचिरादयमुद्योगः संस्कृत-साहित्य-समाजेन सम्पाद्यते। परमत्रत्यानां विदुषां निरुत्साहेन, अनैक्येन, परस्परासहयोगेन, कार्यमेतच्छिथिलमेवासीत्। तथापि समाज-सञ्चालका अस्यां दिशि निरन्तरं प्रयतमाना एव सन्ति। अंशतः साफल्यमपि समासादितन्तैरिति 'सुप्रभातम्' सुरभारत्याः।

वाराणस्यां रामकुण्ड-नामकं स्थानं प्रसिद्धमस्ति। यत्र रामेश्वरमन्दिरम्, विशालस्तडागः, व्यायाम-शाला, कूपः, सहदुद्यानम्, वृक्षवाटिका चेति सर्व-साधनानि समुपस्थितानि सन्ति। प्रायः पञ्चविंशति-सहस्रमुद्राणां स्थानमेतत् संस्कृत-साहित्य-समाजस्य प्रयत्नेन तदधिकारिभिर्महान्तप्रवरैः संस्कृतानुरागिभिः श्रीभगवद्ब्रह्मचारिमहोदयैः, संस्कृत-संस्था निर्माणाय दातुं प्रतिज्ञातम्। एतत् परमं सुप्रभातम् सुप्रभातस्य। यतः सुप्रभातस्य पञ्चदशवत्सरेभ्य इदमेव हार्दमासीत्, यत् वाराणस्यां विश्वविदिता काचन महती केन्द्रीया संस्था संस्थापिता स्यादिति। तदिदानीं सफलीभवदिव दृश्यते। अत्र विषये विशिष्ट-विवेचनमागामिन्यङ्के विधास्यामः।

× × ×

## विलम्बः।

'श्रेयांसि बहुविघ्नानि' इति प्राकृतिक-नियमानुसारं सुप्रभातस्य नवमोऽङ्कः सत्वरं प्रकाशयितुमीहमानैरस्माभिः सुचिरात् प्रकाश्यते। सन्नद्धेष्वप्यस्मासु यन्त्रालयीयाधिकारिभिर्विशिष्टकार्यवशादस्य मुद्रण-कार्यमवरुद्धम्। एतस्मिन्नवसरे शतशः प्रयतमानैरपि नास्माभिः किमपि कर्तुं पारितम्। वारं वारं यन्त्रालय-परिवर्तनमप्यनावश्यकमनौचित्यपूर्णमिति कथं कथमपि सोढमेव दुःखम्। पाठकानामपि हृदये महती वेदना समजनीति समदुःखा वयं यन्त्रालयाधिकारिण आक्रुश्य क्षमा-प्रार्थनं कुर्मः। साम्प्रतं दशमैकादशाङ्कौ सहैव प्रकाशमायास्यतः फाल्गुने। वर्षान्ते च द्वादशोऽङ्कः प्रकाशमायास्यतीति यन्त्रालयाधिकारिणां निश्चयः। सर्वं परवशं दुःखमिति पराधीना वयं स्वप्रतिज्ञा-भङ्गं स्मारं स्मारं भृशं दुःखिता भवामः। यन्त्रालयाधिकृता अपि सन्ति दुःखिता ह्रीणाश्च।

× × ×

## वाराणस्यां सम्मेलनानि ।

वाराणस्यां बहूनि सम्मेलनानि दिसम्बर-मासान्ते संवृत्तानि । यथा-वर्णाश्रम स्वराज्य-संघ-सम्मेलनम्, अखिल-भारतीय-संस्कृत-छात्र-सम्मेलनम्, अखिल भारतीय-सनातन-संस्कृतछात्र-सम्मेलनम् अखिल भारतीय-साधु-महासम्मेलनम्, प्रीतिसम्मेलनञ्चेति ।

तेषां विस्तृताः समाचाराः समाचार-पत्रेषु प्रसिद्धा एव सन्ति । केचन समाचारा अग्रिमाङ्के प्रकाशयिष्यन्ते च सामान्येन । वयमत्र सर्वेषां सम्मेलनानां साफल्यं कामयन्तस्तदुद्देश्य-पूर्त्तौ महतीमाशां धारयन्तश्च तत्संयोजकेभ्यो धन्यवादान् वितरामः ।

× × ×

## नवीना संस्कृत-पाठशाला ।

सुप्रभातस्य संरक्षकैः, उत्तरकर्णाटदेशस्थ-सिरसी ग्रामवास्तव्यैः, विविधोपाधिसमलङ्कृतैः डा० नरसिंह-शास्त्री, पी-एच्० डी०, विद्यासागर-साहित्याचार्य-महोदयैः, मोतीनसर-नाम्नि स्वग्रामे संस्कृत-पाठशाला संस्थापिता, ततश्च तत्र देशे संस्कृत-प्रचाराय चेष्टन्ते । वयं तेषां संस्कृतप्रेमाणं पक्षपातञ्चावलोक्य तेभ्यः सादरं धन्यवादान् वितरन्तस्तेषां साफल्यमहर्निशं कामयामहे ।

श्रीमन्तो नरसिंहशास्त्रिणो नवयुवकाः, विद्याव्यसनिनः, संगीत-व्यायामादिकलाभिज्ञाश्च सन्ति । तेषां संरक्षकत्वे सञ्चालितोऽयं विद्यालयः सार्वत्रिकीं समुन्नतिं विधातुं प्रभविष्यतीत्याशास्महे ।

× × ×

## संस्कृत समाधानम् ।

'संस्कृत'-नाम्ना प्रसिद्धं साप्ताहिकं पत्रं सुचिरादेव 'संस्कृतं राष्ट्रभाषा भव'त्विति महदान्दोलनं कुर्वत् प्रकाशमायाति । तस्य सम्पादकाः श्रीमन्तः कालीप्रसादशास्त्रिण अस्माकं प्रियवयस्याः, सतीर्थ्याः, सनातनधर्माभिमानिनः, उत्साहिनश्च सन्ति । तत्र पत्रे सुप्रभात-विषये किमपि प्रकाशितमिति श्रूयते ।

वस्तुतो विचारे सुप्रभात-संस्कृतयोर्महद् विचार-वैषम्यं विद्यते, तथापि संस्कृतत्वेन द्वयोः साम्यमेव । यदा कदाचित् सति मतभेदे द्वयोः संघर्षः समजनीति वयं तत्र निवेदनमावश्यकं मन्यामहे ।

सुप्रभाते अस्माकं प्रियसुहृदां काचन स्वल्पवयस्का कन्या, साहित्याङ्के 'संस्कृते यवनाः' इति शिरस्कं कमपि लेखं प्रेषितवती । तदुत्साहवर्द्धनार्थं स लेखः प्रकाशितोऽस्माभिः । तत्र 'संस्कृतं' वदति यदिदं चौर्यम् सुप्रभातस्य । सुप्रभात-सम्पादक-सविधे कदापि संस्कृत-पत्रं नायाति, न चापि सम्पादकेन तदवलोकनं क्रियते । को लेखस्तत्र प्रकाशितः को वा न प्रकाशित इति सम्पादको न जानाति-इति सम्पादकस्य चौर्यमिति कथनन्तु क्रौर्यमेव केवलं संस्कृतस्य ।

लेखिकायाश्चौर्यमिति चेत्तदप्यसङ्गतमेव । यतोऽसौ लेखः सम्पादक-लिखिते 'विद्वद्वृत्ते' सङ्गृहीत आसीत् इत्यस्माभिः समालोकितमिदानीम् । तत्रेदमेव वक्तव्यम्, यदैतिहासिका लेखाः कस्यापि पैतृकी सम्पत्तिर्न भवति । स्वयं सम्पादकाश्चात्र प्रमाणभूताः सन्ति । ते स्वयमेव जानन्ति यत्तैरपि यतस्ततः संगृहीता एव लेखा प्रकाशिताः । अतो व्यर्थ-धूलिप्रक्षेपणं कोलाहलो वा व्यर्थ एव ।

अपरं बालिकाया उपरि य आक्षेपः कृतः सम्पादक-महाभागेन, स तु नितरामनौचित्यं भजते । यथाऽस्माकं बालिका; तथैव सम्पादकस्याऽपि । यथाऽस्माभिस्तस्याः समुत्साहवर्द्धनार्थं लेखः प्रकाशितस्तथा तैरपि सा कुमारी, तथैव मन्तव्या ।

इदानीं सुप्रभातं संस्कृत-विषये किमपि चर्चां कर्तुं नाभिलषति । संस्कृतं हि यथेच्छं प्रगल्भताम् । वयन्तु दूरत एव विसर्जनं कामयामहे ।

× × ×

## अशुद्धि-शोधनम् ।

साहित्याङ्कस्य मुद्रणं विंशतिदिवसाभ्यन्तर एव समजनि । तत्रापि प्रारम्भिकान्यष्टौ पृष्ठानि अन्तिमानि च षोडशपृष्ठानि दिनत्रयाभ्यन्तर एव मुद्रितानि इति सम्पादकीय-लेखेषु, पूज्यपादगोस्वामि-महोद-

यानां लेखेषु च काश्चनारुन्तुदा अशुद्धयः सन्ति। 'साहित्योत्कर्ष' नाम्नि लेखे चतुर्थे पद्ये 'पुरुषः' इत्यत्र 'पूरुषः' इति अपेक्षितम्।

'साहित्यस्य दर्शनत्वमिति लेखे–'प्रचञ्चूर्यमाणां' इत्यत्र 'प्रचञ्चूर्यमाण'–इति पठनीयम्। 'स्वस्व मनीषा विभ्रतीः' इत्यत्र 'बिभूती'रित्यपेक्षितम्। 'तन्न साक्षात्परम्परा' इत्यत्र 'तत्र' इति पठनीयम्। 'उत्पन्नाशिष्टभिदातः' इत्यत्र 'उत्पन्नशिष्टाभिदातः' 'लब्ध्वा' इति आवश्यकतायाम् 'लब्धा' इत्यशुद्धम्। 'रसस्यात्मवादे वैतच्छास्त्र' इत्यत्र 'चैतच्छास्त्र' इति अपेक्षितम्। 'व्यपदेशवत्तया' इत्यत्र 'व्यपदेश्यवत्तया' इति शुद्धम्, 'मार्मिक-धुरीणैः' इति लेखनीये 'मर्मिक पुरीणै'रिति मुद्रितम्। अन्ते च 'वेक्रमे' इत्यत्र 'वैक्रमे' इति अपेक्षितम्। एतदतिरिक्तम् 'ऽ' अर्द्धाकाराशुद्धयो वहुत्र नाभिमता लेखक-महोदयानामिति पाठकैः संशोधनीयम्।

सम्पादकीय-लेखे या अशुद्धयस्ताः सूक्ष्मेक्षिकया विचारे प्रत्यवभासन्त इति स्वयं संशोधनीयम्।

---

# वैराष्टकम्

लेखकाः—स्वर्गीय पण्डित-प्रवर-श्रीरघुवीरमिश्र-द्विरेफ-कविमहोदयाः।

रवेर्जातं तापं हरति जगतां यो हिमकरः
सुधाकारान्कारान् विकरति सुधायाश्च निकरः।
समेषां जीवानां जगति नहि केषां हितकरः
न जानीमः कस्माद्वनजवनवैरी हिमकरः ? ॥ १ ॥

गदापाणेः पाणौ वसति भवहेतुर्भवसृजो
यदम्भोजं शम्भोः प्रियतमतया मूर्ध्नि वसति।
रमारामस्थानं कथय नहि कस्य प्रियमहो !
न जानीमः कस्माद्वनजवनवैरी हिमकरः ? ॥ २ ॥

समारूढे चन्द्रे हरशिर इदं चिन्तति सति
मम स्थानादुच्चैर्वसति नहि कस्यापि वसती।
तमप्यारुक्षद्यद्वरयजनकाले सरसिजं
विजानीमस्तस्माद्वनजवनवैरी हिमकरः ॥ ३ ॥

प्रकामं कामेनाखिलविजयकामेन जयिना
पयोजेनानेन व्यथितहृदयो नष्टधिषणः।
यतस्तारानाथोऽप्यकृत-गुरुदाराभिगमनं
विजानीमः कस्माद्वनजवनवैरी हिमकरः ॥ ४ ॥

पयोधी राकायां चलति यदि पुत्रस्य शशिनः
कलङ्कं मार्ष्टुं नं सरसिजमदो वारयति यत्।
तुलां गच्छेन्नो मे स इति लहरीधूतशिरसा
विजानीमः कस्माद्वनजवनवैरी हिमकरः ॥ ५ ॥

उभौ जातावब्धौ दिवि भुवि च साम्येन जगतः
प्रभामात्रं सोमोऽलभत न च गन्धं पितृधनम्।
जहाराम्भोजं यद्द्वयमपि न चाद्यापि ददते
विजानीमः कस्माद्वनजवनवैरी हिमकरः ॥ ६ ॥

ज्वलद्भानौ भानौ सति सति हिमांशावसति च
पुटीभूतामन्तर्भ्रमररवसंरोदनपराम्।
प्रफुल्लं पद्मं यद्धसति शशिजायां कुमुदिनीं
विजानीमः कस्माद्वनजवनवैरी हिमकरः ॥ ७ ॥

शशिभ्राता ज्यायान् जयति जलजं श्लाघ्य-गुणधि-
र्नजानीमः कस्माद्वनजवनवैरी हिमकरः।
पिता प्रोक्षिप्येन्दुं नभसि दधतेऽङ्के च जलजम्
विजानीमस्तस्माद्वनजवनवैरी हिमकरः ॥ ८ ॥

---

# देशभूमिः ।

[ ले०—श्रीनारायणपतित्रिपाठी, काशी ]

अहह ! भरतखण्डं खण्डितं प्रान्तभागै-
रशन-वसन-भूषा-वेष-भाषाऽभिलापैः ।
क्वचिदपि मरुभूमिर्वालुकाखर्वगर्वा,
विलसति च ततोऽन्या शस्यभारोर्वराज्या ॥१॥

हिमालयो यत्र ददाति शैत्यं,
तुषारधाराभिरजस्रमेवम् ।
यतोऽत्र तिष्ठन्ति विदेशिलोकाः,
स्वदेशशीताधिकतो च लब्ध्वा ॥२॥

'कन्याकुमारी'—सविधे प्रचण्ड—
मौष्ण्यं वरीवर्ति यदस्य योगात् ।
प्रायोऽसिताङ्गाः प्रभवन्ति लोका,
अङ्गारकल्पा भुवि कल्पनीयाः ॥३॥

यद्भूतले देशविशेषभागे,
पार्थक्ययोगा बहुशो भवन्ति ।
सङ्घट्टितास्ते किमु भारते ऽस्मिन्,
वसन्ति तत्प्रान्तचरिष्णुशीलाः ॥४॥

क्वचिज्जलार्द्रा गिरिकाननावृता,
क्वचिन्मृदुः कर्परशर्करान्विता ।
क्वचिन्मरुः, शस्य—समृद्धिसंकुला,
मही यदीया जननेत्रमोहिनी ॥५॥

सुश्वेतनीरा शुचिगाङ्गधारा,
कलिन्दकन्याऽप्यतिकृष्णवारा ।
शोणो गलच्छोपितशोणिताभो,
विचित्रवर्णाः प्रवहन्ति नद्यः ॥६॥

त्वदुत्तरे शैत्यमयः प्रदेशः,
त्वद्दक्षिणप्रान्त उतोष्ण्यधामा ।
जाड्यौष्ण्यमध्या तव मध्यदेशाः,
ततो महादेश ! दिशाशिपं मे ॥७॥

धन्या नरास्ते निवसन्ति ये त्वयि,
वैदेशिका देशिकतामुपागताः ।
शीघ्रं भवन्तीह भवत् प्रसादतो,
धान्या धिषण्या धनिकाग्रणीश्वराः ॥८॥

---

# ततः किम् ?

( ले०—नवरत्न-श्रीगिरिधरशर्म-काव्यालङ्काराः )

( १ )

जगत्यां महत्यः पदव्योऽपि लब्धा
धनान्यर्जितानि प्रभुक्तं प्रपीतम् ।
न लग्नं मनो देशसेवाविधौ चे—
ततः किं ? ततः किं ? ततः किं ? ततः किम ?

( २ )

अधीनीकृता फ्रेञ्चभाषाङ्ग्लवाणी,
गिरा जर्मनाख्याऽपरा भारती वा ।
अधीता सभावं सुराणां न वाक् चे—
ततः किं ? ततः किं ? ततः किं ? ततः किम् ?

## श्रीमन्तिकायाः पुण्य-स्मरणम् ।

( १ )

सम्माननीय-समुपस्थित-सज्जनानां,
विद्या-वयःकृत-विशिष्टधियामिदानीम् ।
किं वर्णयामि पुरतः सुरसेविताया
देव्या गुणान् नव-वयोऽनुभवान्वितोऽहम् ॥

( २ )

यत्राऽस्मदीय-भगवान् यदुनन्दनः श्री-
पूर्णश्चकार सुरवाणिसमर्चनं च ।
क्रीडां सहैव सखिभिः शिशुसौलभां च
सन्दीपनं गुरुवरं किल सेवमानः ॥

( ३ )

आसीत्प्रबुद्ध-पद-किंकर-पण्डितानां
मौलिर्महामहिम-भूप-पुरोहितः श्रीः
कात्यायनो धवलयन्यशसा दिगन्ता-
नावन्तिकः सुरगिरं नितरां निषेव्य ॥

( ४ )

आसीदशोक-महिमण्डल-मण्डनेशो
विद्वत्समूह-सहितः सततं रराज ।
यत्रार्य-गुप्त नरसिंह-खगोलविज्ञाः
पारंगता गणनशास्त्र-विचक्षणाः स्युः ॥

( ५ )

यस्यां जगद्विजयिना नृप-विक्रमेण
रत्नैर्नवैर्नरवरैस्सहितः सुधीन्द्रैः ।
आलोकितं जगदिदं ननु सा विशाला
सन्मन्दिरं विबुध-वाग्वर-देवतायाः ॥

( ६ )

यस्यां कवीन्द्र-कुल-मौलिमणिर्महीयान्
सद्वाग्विलास-विभवः कवि-कालिदासः ।
प्रादुर्बभूव यशसा समलंचकार,
लोकं गिरामपरवाणि-वरावतारः ॥

( ७ )

नान्यः सुधीः समभवद्वसुधाभिरामो
रामाधरामृत-समान-वचोभिरामः ।
यत्काव्य-नाट्य-वर-वाग्रस-बिन्दु-लुब्धा
मुग्धाः सुधीन्द्र-निकरा मधुपायमानाः ॥

( ८ )

अत्रैव भव्य-नव-काव्य-कला-विलासो
व्यासोपमः सकल-दैव-विदां वरिष्ठः ।
श्रीमान्वराहमिहिरो ह्यभवन्मयूखै-
रालोकयज्जगदिदं महनीय-कीर्तिः ॥

( ९ )

या भोज-भूप-परिसेवित-पुण्यकीर्तिः
श्रीशारदीय-विविध-श्रुति-रंग-शाला ।
श्रीबाण-भास-कविनिर्झरिणी विशाला
सावन्तिका सुरगिरामपरां तनोतु ॥

( १० )

यत्पुण्यपत्तनमिदं बुध-मण्डलीभि-
र्वाग्वारिधेस्तरल-तुंग-तरंग-पूतम् ।
यत् कालिदास-कविभिः प्रथितं सुगीतम्
तच्छारदार्चनविधौ सुतरां प्रणम्यम् ॥

—सूर्यनारायणो व्यासः

( संस्कृत-छात्र-संघाधिवेशने पठिता । )

# कालिदासस्य प्रकृतिवर्णनम् ।

श्री वटुकनाथशास्त्री, खिस्ते, साहित्याचार्यः

श्रीमतः कविकुलगुरोः शारदाविलासतया वर्णितस्य महाकवि-कालिदासस्य कृतिषु रघुवंश-प्रभृतिषु तत्र तत्र निबद्धं प्राकृतिक-सुषमा-वर्णनं कं नाम सचेतसं न मोहयति। यद्यपि धरातलवर्ति-सकलकविकुल-प्रधानाचार्यपीठे श्रेष्ठैः प्रतिष्ठापितस्य कवेः समस्तवस्तुविषयकं वर्णनं सर्वातिशायि वर्तत इति सुशकमनुमातुम्, तथाऽपि 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति सहृदयसूक्तिमनुसरता मया प्राकृतिक-वर्णनविषये किञ्चिदुच्यते।

अस्तु नाम गवेषकाणां विवादशतं, किन्तु शैलराजे हिमालये कालिदासेन बहुकालमुषितमिति तु निर्विवादमेव। तथाहि—मेघदूतादौ तत्तत्पर्वत-वर्णनेषु सत्स्वपि हिमालयवर्णने कश्चनाऽभिनिवेशविशेषो दृश्यते महाकवेः। कुमारसंभवे प्रथममेवोपन्यस्तेषु सप्तदशपद्येषु किमप्याकर्षणमिव दृश्यते कवेः। तथा हि सत्यपि बहुविध-विभव-सम्भारे तुहिनातिशयस्तु दोषायैव कल्पते इत्याशङ्क्य पद्यमेतन्न्यासि—

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः॥

एवमन्यत्राऽपि सविशेषं शैलराजवर्णनं न्यबध्यत कविना। क्वचित्पुरुषोपमानत्वेनाऽपि हिमालयवर्णनम्, यथा रघुवंशे इन्दुमती-स्वयंवरावसरे पाण्ड्यराज-वर्णनं—

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाऽद्रिराजः॥

अत्रोपमानत्वेन परिकल्पितं दृश्यं साक्षाद् दृग्दर्शनं विना कथं नाम निबद्धं स्यात्? एतच्च केवलं हिमालयविषय एवोक्तम्। अन्यत्राऽपि नायकनायिका-व्यवहारस्य लता-वृक्षव्यवहारोपक्षिप्तत्वं पर्वतलतादीनां स्तनाद्यवयवत्वेन रूपणं च प्रकृति-वर्णने सविशेषमभिनिवेशं गमयति महाकवेः। यद्यपि कालिदासात्पूर्वैः पश्चादुत्पन्नैश्च कविभिः, स्वीयेषु काव्यनाटकादिनिबन्धेषु बहुश उपमानत्वेन प्रकृततया वा प्रकृतिवर्णनं व्यधायि, किन्तु कालिदासोक्तिषु यदुपमानतया वर्णने, स्वभाववर्णने, वा सहृदयमनोहारि सादृश्यं, स्वाभाविकगुणनिरूपणं च प्रतीयते तन्नाऽन्यत्र कुत्राऽपि तथाविधमिति सहृदयगम्यमेवेदम्। कालिदासीयोत्कर्षकारणेषु प्रधानतमं कारणमिदमतएवोदियाय ख्यातिरेषा—"उपमा कालिदासस्य"। नन्दिनी-वर्णनं प्रथमसर्गे—(रघौ)

ललाटोदयमाभुग्नं पल्लव-स्निग्ध-पाटला
बिभ्रती श्वेतरोमाङ्कं संध्येव शशिनं नवम्।

अत्र पद्ये दिनान्ते वसिष्ठाश्रममधिवसतः सदारस्य राज्ञो दिलीपस्य पुरस्तादेव वनान्तात्प्रत्यागतां कामधेनु-नन्दिनीं नन्दिनीं नाम धेनुं वर्णयति कविः। अत्रत्यमौचित्यं किंचिद्विविच्यतां—दिनावसाने भगवति गभस्तिमालिनि पश्चिमाचल-यवनिका-तिरोहित-वपुषि सति, समन्तात् पाटलिते दिग्भागे, पौरस्त्ये नभसि लोचनगोचरायामसमस्त-प्रकाशायां धवलायां मृगाङ्कलेखायां, यत्सांध्यप्रकृतिस्वरूपमुन्मिषति, तदिह पल्लव-स्निग्ध-पाटलायां, खण्ड-चन्द्राकार-श्वेतरोमाङ्क-राजित-ललाटायां नन्दिन्यां सामस्त्येन घटमानं कंचन सहृदयमनस्तोषमाविर्भावयति। विशेषतश्च प्रकरणानुरोधेन (प्रकरणे हि सायंकालरूपम्) कृतेयं वर्णना परामौचितीं पुष्णाति। अग्रे चाऽस्या धेनोः पूज्यत्वेन वक्ष्यमाणायाः संध्या-समाधिः पूतभावं वाऽनुबध्नाति।

एवं सामान्यतयोपमानवर्णनमपि प्रकृतिविषयं चारुता-परम्परामरचयत्। इत्थमेव स्थलान्तरेष्वपि वैशिष्ट्यं परिभावनीयम्।

उद्दीपन-विभावभूतं ऋतुवर्णनप्रभृति च विशेषशालि महाकवेः। कुमारसंभवे चन्द्रोदयमष्टमसर्गे वर्णयति कविः—

अङ्गुलीभिरिव केशसंचयं संनियम्य तिमिरं मरीचिभिः।
कुड्मलीकृत-सरोजलोचनं चुम्बतीव रजनीमुखं शशी॥

अत्रत्ये वस्तुन्यश्लीलत्व-परिजिहीर्षापरैर्दरमुकुलित लोचनैर्भवितव्यम्। इयं कल्पनाऽन्येन कालिदासोत्तरं केनाऽपि स्वशब्दैः प्रकटिता चेत्, सा कालिदासोपज्ञैवेति वक्तव्यमेव । नायकनायिकाव्यवहारोऽत्र रजनी-शशिनोः सम्बन्धे कीदृशेन सौष्ठवेन कविना विनिवेशित इति सूक्ष्मं द्रष्टव्यम्। इत्थमेव शाकुन्तलादौ 'गच्छति पुरः शरीर' मित्यत्र शरीरस्य पुरोगमनेऽपि पश्चाद्गन्तुमुत्सुकं चेतः वाताभिमुखनीयमानस्य केतोः पश्चाद्गमनं विधातुमिव कम्पमानेन चीनांशुकेन तुलितं साधर्म्य-निबन्धनमुपमाऽलङ्कारं सवांशेन प्रसाधयति । 'इदं स नीलोत्पलपत्रधारया समिल्लतां छेत्तुमृषिर्व्यवस्यती'त्यादावपि प्रकृतिविपयोपस्कृतवर्णन चातुरी विलक्षणैव ।

एवमस्य महाकवेः कृतिषु नानाविधानि स्थलान्यसंख्यानि विवेचनीयानि सन्ति, यान्यल्पकाये लेखे मनोरञ्जनमात्रफलके न निबद्धुं शक्यन्ते, तथापि दिङ्मात्रप्रदर्शनमिदमेवंविध-कविसूक्तिविमर्शपर-लेखप्रवर्तनाय । आशासे प्रयतिष्यन्ते साहित्य-सिन्धवो बुधवरा अनया दिशेति शम् ।

---

# अवदधतु संस्कृतप्रणयिनः !

श्रीमुकुन्दीलाल द्विवेदी, शास्त्री, हरद्वारस्थः

अद्यत्वे संस्कृत-समाजे प्रायः संस्कृत-शिक्षा-सुधार-विषयिणी चर्चैव प्रचलति। अपेक्षितस्तत्र सुधार इति सर्व एव लोको मनुते । परं केचन स्वार्थान्धा विरोधैककर्माणोऽत्राऽपि व्यर्थमेव कोलाहलं कुर्वन्ति -इति आवश्यकं किञ्चिन्निवेदनम् ।

येन मनागपि संस्कृत-पाठ्य-पद्धतौ पदं निहितं नाविदितं तस्य तस्या दुरवस्थितिः, न्यूनता, त्रुटिबाहुल्यं च । मन्ये, अस्ति तत्रैकं वैशिष्ट्यं विशिष्ट-वैयाकरणं नैयायिकादिकं चोत्पादयितुम्, परमस्ति तदपि एकदेशीयाध्यायकत्वम् । तथा तत्रैव विषये समेषां छात्राणामभविष्यद्दशामल्पवयस्कानाञ्च प्रवर्तनं नाऽभीष्टम् । यथा शिक्षा-क्रमेण प्रोत्साहीयन्ते छात्राः । आद्वादशवर्षमधीत्यापि व्याकरणादिकन्ते किमुपकुर्वन्ति लोकस्य ? तथा चानया पाठ्यपद्धत्या शिक्षिताश्छात्रा अक्षमा भारताभ्युदयं विधातुं पराधीनतामेव पोषयन्ति ।

साम्प्रतं यत्रापि दिशि दृष्टिर्दीयते तत्र सर्वेऽपि देशाः, आबाल-वृद्ध-वनिता जनाः, स्वातन्त्र्यमर्जयितुं रक्षितुं च प्रयतमाना अवलोक्यन्ते । अत्रापि भारते स्वातन्त्र्यदेवीं प्रसादयितुमनेकैरुपहृता बलि-वेद्यां स्वीयाः प्राणाः । सन्ति च सहस्रशः स्वतन्त्रता-समाराधन-तत्पराः । परं किन्तत्र संस्कृतज्ञानां स्थानम् ? स्युरेतादृशा द्वित्राः; परं संस्कृत-शिक्षा-सरणिमवलोक्य तेषामपि अत्र स्वतन्त्रता-संग्रामे समागमनमाश्चर्यकरमेव । तर्हि कस्याऽत्र दोषः ? शिक्षा-पद्धतेरुत छात्राणाम् ? छात्रास्तु गुरूननुकुर्वन्ति, यथा शिक्ष्यन्ते तथैवाचरन्तीति न तेषां दोषः, अपि तु शिक्षा-पद्धतेरेव। यतो हि गवर्नमेण्ट-संस्कृत-कालेज-पाठ्यक्रमेण ज्ञायते यत् ब्रिटिशराज्य-स्थिरीकरणायैव सा संस्कृत-शिक्षा-पद्धतिर्यया शिक्ष्यन्ते छात्राः ।

अथ च सर्वविदिता संस्कृतविदुषामेकदेशीयता व्यवहार-शून्यता च । अन्यत्र देशे यदि युद्धो भवेदत्र किं प्रभावमापादयेति तु दूरापास्तमेव । यतो हि कुत्र स देशः, कियद्दूरमास्ते, किन्तत्रोत्पद्यते, कीदृशी तस्य भौगोलिकीस्थितिरित्यादेस्तु तत्र नामापि न श्रूयते । किं कदापि विचिन्त्यते संस्कृतज्ञैर्यत्कथमन्येऽस्मान् प्रति 'बुद्धू' इति शब्दं प्रयुञ्जते ।

केचनेदमेकदेशीयत्वमङ्गीकृत्य, संस्कृतन्तु परमार्थ विद्येति ब्रुवन्ति । परन्नैतद्विचारयन्ति ते यत्कथं तर्हि

अयं लौकिक-परीक्षा-क्रमः । अनया परीक्षापद्धत्या दीक्षितश्च कश्चिदपि संस्कृतज्ञः किं लोकेऽस्याः सार्थक्यं प्रकटितवान् । अपितु अत्र परा-विद्या-विषयेऽपि भारतस्य गौरवं गौरादिदेशेषु ख्यापयन्तः स्वनाम धन्याः स्वामिरामतीर्थ-विवेकानन्दप्रभृतयोऽपि आङ्गल-भाषाभिज्ञा एवाऽसन् ।

तर्हि किं क्रियते साम्प्रतं संस्कृतज्ञैरिति प्रश्ने यदि कश्चिदुत्तरेत्—'देशं दुर्दशां नेतुम्, मुग्धान् जनान् वञ्च-यितुम्, वर्धयितुमालस्यम्, विशेषतश्च ब्रिटिश-राजस्य भित्तिमूलं ( नीव ) दृढयितुमेवाद्य संस्कृतज्ञाः'—तर्हि नाऽत्र असत्यलेशोऽपि । किमस्ति देश-प्रगतौ संस्कृतज्ञानां किमपि स्थानम् ? कस्यात्र दोषः, यद्वयमनभिज्ञाः, उदासीनाश्च बाह्यविषयेभ्यः ? केवलं पाठ्य-पद्धतेरेव एष दोषः । अतोऽत्रामूलचूलं परिवर्तनमावश्यकम् ।

वयं प्रान्तीय-कांग्रेस-शासकेभ्यः शतशः साधु-वादानुपहरामः, विशेषतश्च संस्कृत-संस्कृति-स्नेहपराणां शिक्षामन्त्रिणामभिनन्दनं कुर्महे, यत्तैः संस्कृत-शिक्षा-परिष्काराय समितिरपि नियोजिता ।

परं केचन पण्डितम्मन्या उदरम्भरय एतदर्थमपि प्रान्तीयमन्त्रिमण्डलालोचनं कुर्वन्ति "यदत्रापि कांग्रेसस्य कूटनीतिपरत्वमेव, कांग्रेसीयाः संस्कृतविनाशायैव एवं कृतवन्तः ।" किमेषां विषये बहु वक्तव्येन । कांग्रेसविरोधस्तु एतेषां सहजं कर्म । अतोऽहं संस्कृत-प्रणयिनः, संस्कृत-विदुषः, भारताभ्युद-यैकहेतून् संस्कृतान्तेवासिनः प्रार्थये यत्ते सत्वरं सङ्घी-भूयैतेषां पण्डितमानिनां मानं मर्दयेयुर्यतो हि एते विविधैः प्रकारैः, मिथ्या-प्रचारं कुर्वन्ति, यद्यपि छात्रा न सहमता एभिः । यदि साम्प्रतं न दत्तेक्षणाः भवि-ष्यन्ति भवन्तः, पश्चात् संस्कृत-संस्कृति-मान-संरक्षणाय नोपयुक्तः समयः शीघ्रमवाप्स्यते ।

अन्ते च संस्कृत-शिक्षा-सुधारसमिति-सदस्याना-मपि ध्यानमाकर्षयामि यत्ते कोलाहलं कुर्वतामेषां वचांस्युपेक्ष्य संस्कृतोन्नतये देशस्य चरमं स्वातन्त्र्य-लक्ष्यमुद्दिश्य पाठ्य-पद्धति-परिष्कारं कुर्युः । आशासे संस्कृतप्रणयिनः स्वार्थोपहतचेतसां देश-द्विषां वचां-स्युपेक्ष्य अत्र विषये स्वकर्तव्यपरायणत्वं प्रदर्शयिष्यन्ति ।

---

# अस्मत्साहित्यमहत्त्वम्

मुरारीलाल नागरः, शास्त्री, काव्यतीर्थः

साम्प्रतं संसारे यावत्यो जातयो जीवन्ति; याव न्ति च साहित्यानि समुलभ्यन्ते; तेषुभारतीयाया आर्य जातेः ( हिन्दूजातेः ), तस्याः संस्कृत-साहित्यस्य च स्थानं श्रेष्ठतमं प्राचीनतमञ्च वर्तत इति तथैव निर्विवादं यथा वन्हेर्दाहकत्वं रवेरुष्णता चाऽऽस्ते । इतोऽन्यैरपि च कारणैरासृष्टेरद्ययाव-त्ताभ्यां स्वेतरापेक्षयाऽधिकतमः संमानोऽलम्भि, गौरवमयञ्च पदमधिष्ठितम् । किन्तु, कथयतो हृदयं शतधा भिद्यते, अद्य तयोरवस्था सर्वथा विपरीता व-र्तते । यवनानामतितमां क्रूरे भयङ्करेऽपि च साम्राज्य-काले याऽऽर्यजातिः, स्वाननेकान्वीरपुङ्गवान्स्वतन्त्रता-यज्ञस्याहुतीकृत्याऽपि स्वात्मना सह स्वीयमुच्च-तमं साहित्यमक्षुण्णं गौरवमयञ्च विदधे, भविष्यति कालेऽपि सा तथैव गौरवमयी स्वसाहित्य-गौरव रक्षिणी च तिष्ठेन्नवेति साशङ्कं सर्वे पृच्छन्ति । सस-न्देहदृष्ट्या सर्वे चिन्तयन्ति यत्तस्याः सोऽमूल्यो निधि-स्तदधिकाराद्बहिर्भूतस्तु न स्यात् ? यावत्तस्याः संस्कृतिः, सभ्यता, साहित्यं, धर्मश्च जीवति तावदेव साऽपि जीवेत् । तेषु दुर्दैववशाद्विलीनेषु सा केवलमिति हासपृष्ठेष्वेव नाममात्रावशेषा भवेदत्र कः पामरोऽपि जनः सन्देहलवमपि कुर्यात् ? एतत्प्रश्नोत्तरन्तु सर्वज्ञः परमेश्वर एव दातुं समर्थः, किन्त्वद्य वर्तमानाया आर्य जातेः "वयं प्राक्कालीनमहर्षिभिरभिन्नाः, अस्मत्सा-हित्यस्य न काऽप्यवदशा, अस्मत्साहित्यममरत्वान्न

कदाऽपि विलीनं स्यादित्यादि"—गर्वोक्तिरात्मवञ्चनामात्रं गुरुतरं धाष्टर्यञ्चेति। भवतु नामास्मत्साहित्यस्यान्यदेशेषु परमोन्नतिः, परमितोऽधिकतरं किं स्याद् दुःखदं यदस्माकं स लोकोत्तरो निधिः, अस्माकं तदपूर्वं साहित्यमस्मदधिकारान्निर्गत्य परेषां विदेशिनां हस्ते गच्छेत्।

अस्माकं साहित्यं पुरा कीदृग्गौरवमयमासीदद्य च कियदधः पतितमिति विचारयच्चेतो दुःखभराक्रान्तं शतधा विदीर्णं कथं न भवतीत्येतदेव महच्चित्रम्।

अस्मत्साहित्यं पुरा कियद्विशालमासीदत्र प्रमाणमस्ति छान्दोग्योपनिषदि,

महर्षिणा सनत्कुमारेण 'किमधीतवानसि' इति पृष्टो नारदः प्रोवाच—

"सहोवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्याम् भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पजन-देवविद्यामेतद्भगवोऽध्येमि।"

इतिहासपुराणम् History; वेदानां वेदम्=वेदार्थबोधि अङ्गविद्यां, यथा व्याकरण-निरुक्तादिं Grammer and Philolozy; पित्र्यम्=पितृप्रसादनविद्यां Anthopology, राशिम्=गणितविद्याम् Mathematics; दैवम्=उत्पातविद्यां यथा भूकम्प-जलप्लावन-विद्युत्कोप-वायुकोपादि Physical Geography; निधिम्=खनिविद्याम् Minerology; वाकोवाक्यम्=तर्कशास्त्रम् Logic; एकायनम्=नीतिविद्याम् Ethics; देवविद्याम् (सम्यङ् न प्रतिपादयितुं शक्यते, यदत्र देवपदस्य कोऽर्थ इति। परन्तु ब्राह्मण-ग्रन्थेषु अष्टवसूनामेकादश-रुद्राणां द्वादशादित्यानां विद्युतो हवनयज्ञस्य च यद्देवत्वस्वीकारोऽस्ति तेनैतज्ज्ञायते यद् यद्येषां व्याख्यानं देवविद्यायामासीत्तदा निःसन्देहमेषा विद्याऽतिमहत्त्वरूपाभूत्।) सम्पूर्णां रसायन-शिल्पादि-शास्त्ररूपां तत्त्व-विद्याम्, अन्तर्भावित-तत्त्वभिन्न-चेतन-जीव-व्याख्याम्, Physical Science; ब्रह्मविद्याम्=ब्राह्मण-व्याख्यायुक्ताम् Brahma Vidya; भूतविद्याम्=प्राणिनां विद्याम्, प्राणिनां प्रकार-वर्णनम्, तेषां रचनादिवर्णनञ्च Zoology, Anatomy etc.; क्षत्रविद्याम्=धनुर्विद्याम्, राजशासनविद्यां च, Military Science etc. and Art of Government नक्षत्रविद्याम्=ज्योतिषम् Astronomy; सर्पदेवजनविद्याम्=अस्यास्तात्पर्यं सम्यङ् न ज्ञायते। परन्त्वेतत्सम्भवति यदस्यां सर्पविषदूरीकरणविद्या-देवजनसम्बन्ध्यनेकप्रकारका विद्या वर्णिताः स्युः। अस्यां व्याख्यायां क्वचिद्विदुषां मतभेदोऽपि स्यादिति सम्भवति।

श्रेष्ठतमस्यास्माकं संस्कृतवाङ्मयस्य तत्त्वज्ञैः संस्कृतवाङ्मय-महार्णवमन्दरायमाण-धिषणैः पौरस्त्यैः पाश्चात्यैश्च परः शतैः समालोचन-तत्परैर्विद्वद्भिः संस्कृतसाहित्यान्तःपाति वेदोपनिषत्सूत्रग्रन्थ-दर्शन-धर्म-नीति-ज्योतिर्गणित-सामुद्रिक-आयुर्वेदादि-शास्त्राणां भाषाव्याकरणयोश्च तदन्तर्गतानामनेकानां ग्रन्थरत्नानां प्रचुर-प्रशंसायां निष्पक्षभावेन परःसहस्रं सूक्तीनां काले काले प्रकाशितमस्ति। अवकाशाभावान्नैव तत्सकलप्रतिपादनं सम्भवतीति अधिकतरोपयोगित्वात्कवि-काव्ययोर्विषये यद्वोचि; तदंशतः परिदर्श्यते—

## कवयः, काव्यानि च

अत्रैव शर्मण्यदेशीयस्तत्ववेत्ता हंबोल्ड-महोदय एवं ब्रवीति—

"शाकुन्तल—काव्यस्य विख्यातकर्त्रा कविवरेण कालिदासेन प्रेमपात्राणामन्तःकरणेषु सम्प्रभावानां स्वभावानामुत्कृष्टं दिग्दर्शनमकारि। विचारतरङ्गकल्पनाशक्त्युदात्तसम्पत्तिभिः सम्पूर्णजगत्कविपूज्यतमं पदमसमर्पि" इति।

"येनेदं (अभिज्ञानशाकुन्तलम्) नाटकं संस्कृतेऽधीतं स न केवलमार्यः; कोऽप्यन्योऽपि भवेन्नाम, एतामेव सम्मतिं हृदये धारयिष्यति; यद् नम्रया मृदुलहृदयया वनवासिन्या शकुन्तलयाऽधिकतरा मृद्वीमनोभावकल्पना मनुष्यलेखन्या न प्रकाशीकृता स्यादिति—इति आर० सी० दत्त-महोदया ऊचुः।

'शाकुन्तलं' तदलौकिकं वस्तु वर्तते यद् यौवना-

वस्थायामुत्पन्नामनुरागरूपां कलिकाप्रौढ़ावस्थां सञ्जितभावरूपफलेन मेलयति । 'शाकुन्तलं' तद्वस्तु वर्त्तते यद् पृथ्वीं स्वर्गेन संयोजयति"—इति कविवरो 'गेटे' महोदयः कथयति ।

'सर् विलियम जोन्स'—महोदयेन शकुन्तला काव्यस्यानुवादो यदाऽऽङ्गलभाषायामकारि तत्कालपर्यन्तं हरिवर्षदेशीया भारतवासिजनान् असभ्यतयाऽमानयन् । किन्त्वेतदनुवादेन हरिवर्षदेशजानामक्ष्युन्मीलनमभूत् । शाकुन्तलस्य कवितां, तत्रत्यानां चरित्रम्, तद्भावप्रवणतां च वीक्ष्य ते मोदमापुः । शाकुन्तलाङ्गलानुवादस्याऽपि अनुवादा 'शर्मण्य'-फ्रेञ्च-प्रभृतिभाषासु अभूवन्; यानधीत्य तद्देशवासिभिरपि तच्छ्रेष्ठता मुक्तकण्ठमङ्गीकृता । तैरेतदप्यवगतं यद्यस्य 'ग्रीक'-साहित्यस्य ते गर्वमुद्वहन्ति, ततोऽपि संस्कृतसाहित्यं केषुचिद् विषयेषु श्रेष्ठतरमस्ति । प्राचीनतायां तु संस्कृतसाहित्यस्य तुलनां किमपि साहित्यं कर्तुं नालम् ।

समस्त-संसारस्य ग्रन्थ-राशिं स्वचित्तपथमानयेत्, ततो रामायणं गीता-प्रथितं भारतं चाधीयीत । तत्पश्चात् कः सत्यः समालोचकः कथयेद्यदेतेषु कस्य-प्रधान्यम् ? कुत्र सुधा-मधुरो ध्वनिरस्ति ? परीक्षणानन्तरं स एवमेव कथयिष्यति यद् भगवन् ! कुत्रापि स्याम् किन्त्वन्ते एनमेव ध्वनिं शृणुयाम । तानि विविध-गम्भीरतत्त्व-परिपूर्णानि अलौकिकानि ग्रन्थ-रत्नानि भस्मसात्कृतानि, परःशतं विद्यामन्दिराणि पुस्तकालयाश्च वह्निशरणीकृताः, पारावार-पारङ्गमिताः। किन्तु हन्त ! अद्यावशिष्टान्यपि छिन्न-भिन्नानि पुस्तकानि एवमेव वारंवारं पृच्छन्ति यद् हन्त ! अपि त एव यूयम् ? अद्य तु प्रत्यभिज्ञायध्वेऽपि नहि !

ईदृशस्यापि साहित्यस्याधुना नितरां दुरवस्थत्वपरिरक्षणार्थमस्माकं मते केचन बन्धवो भारतीया बद्धपरिकराः सर्वविधमुद्योगमाचरन्ति परं न तस्य वास्तविकः समुद्धारो जायते । न कोऽपि तेषां सहायः स्यात् । कथम् ? परमेश्वरोऽपि तस्यैव सहायो भवति यः स्वयमात्मसहायता-विधाने पटुर्भवति । अस्माकं भारतीय-सभ्यतायाः संस्कृतेः धर्मस्य साहित्यस्य च सर्वतोमुखे विनाशे जायमानेऽपि अस्माकमनेके बन्धवो न निद्रां मुञ्चन्ति । परं "विद्या-विवादाय धनं मदाय" इत्यादिन्यायेन परस्परं सामान्य वस्तुष्वपि कलहमाचरन्तोऽरिपु सत्यासत्यत्व-परिच्छेदं कर्तुमसमर्थाः सत्य-शत्रूनां प्रतीकारं कर्तुं सामर्थ्यवन्तोऽपि तत्प्रतीकारं चित्तविषयमपि नाऽनयन्तः स्वीयानात्मीयान् प्रियान् स्वधर्म-जाति-संस्कृति-सभ्यता-देशरक्षणेच्छुकान् प्रयासं कुर्वतः सततं तद्रक्षणपरान् स्वीयान्बान्धवान् सुहृद्भूतानपि शत्रुत्वेन मानयन्तस्तेषामेव सत्ये मार्गे कण्टकरूपा भवन्ति ।

एकतस्त्वस्माकं संस्कृतविद्वत्सु तावत्यनुसन्धान रुचिर्नास्ति, तत्र प्रवृत्तिरेव नास्ति, तेषां काप्यनुसन्धान-समितिर्नास्ति, कश्चित्वनुसन्धानस्यावश्यकतामपि-न स्वीकरोति, नापि कस्मिन्नपि नवीन-वस्त्वाविष्करणेच्छा वर्त्तते, अन्यभाषा-विदुषामिव साहित्य-प्रोत्साहन-समुल्लासनेच्छा नास्ति, तथापि ये विद्वांसः परमया भक्त्या, स्वरुचिमात्रप्रवर्तिताः किमपि लोकानां पुरतः स्थापयन्ति, साहित्यक्षेत्रे नवीनं बीजं वपन्ते, नवीनवस्तुमुत्पाद्य जनानामग्रे प्रतिष्ठापयन्ति तेषामादरकर्तारः संमानयितारः तद्वस्तु स्वीकारकरिष्णवो नितरां न्यूनाः सन्ति। केचन पुनर्विद्वन्मन्याः शास्त्रार्थ-युद्धाह्वानं कुर्वन्ति । साम्प्रतमस्मत्साहित्येषु नवीन ग्रन्थनिर्मातॄणामुत्साह-संवर्द्धनाय परःशतं पारितोषिकाणां स्थाप्यते । अन्यानि साहित्यानि प्रतिदिनमभिवृद्धिं गच्छन्ति । किन्त्वहह ! अस्माकं संस्कृत साहित्यम् !! संस्कृतसाहित्ये निखिलं ज्ञानतत्त्वमधुनाऽप्यस्ति, तत्र काऽपि न्यूनता नास्ति, उन्नततमस्य कानामोन्नतिर्भवता कर्तुं शक्यते ? इति दृढाश्रद्धा बद्धैव । तस्मादनेके विद्वांस एतद्विषयिणीं वार्तामपि न शृण्वन्ति । विदेशिनो विद्वांसः, अस्मद्देशीया अप्यन्य-साहित्यप्रणयिनःस्वस्वसाहित्य-संवर्द्धकानां यावत्संमानं कुर्वन्ति तस्य शतांशतोऽपि यद्यस्माभिर्विधीयेत-चेदेषा दशा न जायेत ।

ममैतल्लेख-लेखनस्य न केवलमयमेवाभिप्रायो यत्स्वबन्धूनां परिवादविधान-पुरःसरं तेषु हीन

तारोपपुरःसरं तेषामपमानः कर्तव्य-इति। किन्त्वे तदेव प्रार्थनं वर्तते यद्—

पुराणमित्येव न साधु सर्वं न चापि सर्वं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः।

इति विचार्यम्। कापि जातिस्तावदेव जीवति यावत्तस्याः साहित्यं जीवति। यद्यस्माभिरार्यजातेः कल्पान्तस्थायित्वमिष्यते चेत्तस्या मूलभूतस्य संस्कृत-साहित्यस्य परिरक्षणे परिवर्द्धने च सर्वदैव दत्त-चित्तैर्भाव्यम्। अस्मत्पूर्वजानां शारीरिक-मानसिका-र्थिका परिस्थितयः कीदृश्य आसन्? अस्माकञ्च कीदृश्य?इति सर्वदैव विचारयितव्यम्। पूर्वजसम्बन्धि-नीनां तासां समीचनत्वेऽस्माकञ्चासमीचीनत्वे को हेतुः? लोकानां समाजस्य जातेश्च कीदृश्यवस्थाऽऽसी-दधुना च कीदृशी?अस्याः सार्वत्रिकाया भारतदुर्दशाया उत्तरदायित्वं कस्य वर्तते? इत्यादिप्रश्नानां विचार-स्तेषामुत्तरञ्च ज्ञात्वा तदनुसारं कार्यप्रवृत्तिरेवास्माकं परमं कर्तव्यं यथास्यात्तथा यतितव्यम्। ब्राह्मणाः, विशेषतः समवयस्का युवानोऽस्मत्प्रार्थनाविषयाः सन्ति, यद् अस्माकमद्य वर्तमानैर्गुरुजनैः स्वजीवनं तु यथा-कथञ्चिद् सुखेन दुःखेन वा अतिवाहितप्रायमेव वर्तते, किन्त्वधुनाऽस्माकं प्रभातमेव वर्तते, अस्माभिरधुनैव-जीवनयात्राऽऽरब्धाऽऽस्ति। जीवनयात्रायाः सम्पूर्णो भागस्त्वधुना निर्वाहयितव्योऽस्ति। अस्माकमेतत्कर्त-व्यमस्ति तदस्माभिः संवीभूय तथा यतितव्यं यथा-ऽस्माकं देशस्य, समाजस्य, जातेश्च मस्तकं पुनरप्युन्न-मितं स्याद्। अधुना वयं सर्वत्र हीनदृष्ट्या गण्यामहे इति अपि न विस्मर्तव्यम्। अन्यदेशानां भारतवा-सिनाञ्चान्यसमाजानां गतिविधिषु लक्ष्यदानपुरःसर-मस्मासु वर्तमानदोषाणां दूरीकरणं तेषां गुणग्रहणञ्च परमं कर्तव्यमस्ति। एतदपि ध्यान-पथमानेयं यद् अस्माकं सर्वदुःखानां मूलं पारतन्त्र्यमेवः—

उक्तमेव तत्र भवता मनुभगवता—सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्। एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः। अन्यच्चः—मा जीवन्यः परावज्ञा-दुःख—दग्धोऽपि जीवति। इतिशम्।

ॐ वन्देमातरम्।

---

## पर्जन्यः

मान्यः परहित-कारिणां, पर्जन्य! प्रतिभाति।
संतप्तानां तृप्तये, जीवनमपि विजहासि॥
जीवनमपि विजहासि मलिनतां दूरीकुरुषे।
उच्चपदं परिभूय निम्नतामूरीकुरुषे॥
अभ्रपुष्पमर्पयसि सुहृद्भ्यः सदा वदान्यः।
अन्यस्तुलनामञ्चतु ते कथमिह सामान्यः॥२॥

जलधर! कामिह वेदनां हृदयेन्तर्निदधासि।
मुक्तकण्ठमाक्रन्दनं स्तनित-मिषाद्विदधासि॥
स्तनित—मिषाद्विदधासि विमुञ्चसि किमश्रुमालाम्।
तड़िच्छलात् किमु दर्शयसि स्विक-हृदय ज्वालाम्॥
अहह! किमु व्यञ्जयसि शुचं व्यायत-नीलाम्बर।
बत! कस्तव मनो विमर्दयते निष्करुणो जलधर!॥३॥

## 'अमृतसरः सम्मेलने सुरभारती'

अमृत-मधुर-वर्णा जगति महिताऽमृत-दानेन।
अमृत-गवी राजत्यधिकममृतसरःस्नानेन॥
अमृतसरः-स्नानेन निर्मलां शोभामयते।
पंचामृत-सुमनो मनस्सु निर्भरं विजयते॥
अमृतां भाग्य-विभूतिमियं बत! सम्प्रति-तनुते।
मृतभाषामेनामिह को मनुतोको मनुते॥४॥

## तरुवरः

तरुवर! मनु-तनु-जनुभृतां किमिव क्लान्ति-हरोऽसि।
तनुच्छेद-निरतात्मनां कथमुपकार-परोऽसि॥
कथमुपकारपरोऽसि समाश्रित-रक्षां कुरुषे।
वर्षातप-हिमबाधा निजशिरसा स्वीकुरुषे॥
पुष्प-फलौषध-धनं समर्पयसि व्यायत-कर!
सन्ततमतनुं तनुं दाहयसि तेभ्यस्तरुवर!!॥५॥

—श्री महावीर प्रसाद जोशी, साहित्याचार्यः

# साहित्योन्नतिः

ब्रह्मचारी प्रभुदत्तः शास्त्री, 'भक्ति'-सम्पादकः

वर्तमानकाले संस्कृतभाषायाः यादृशी दुर्दशा विद्यते तामालोक्य कस्यापि प्रेक्षावतश्चेतसि हर्षोद्वेगो न प्रसरति । अङ्गुल्यग्रभागोपरि परिसंख्यातव्यानां संस्कृतपत्राणां व्यवस्थैव पूर्वं तु हीनतमा, धनाभावात्, तेषां प्रबन्धादिसौकर्यापादनासमर्थत्वाच्च, ये च परिगणिताः पत्रचयाः प्रकाश्यन्ते तेषामेव दर्शनं विधाय वयं तु भगवते परं धन्यवादं समर्पयामः, यतः संप्रति हि सर्वं विपरीतमिव विधानं दृश्यते । तदत एवंविधायां विपद्यमानायामवस्थायां सुप्रभातनाम्नः प्राचीन-पत्रस्य साहित्याङ्क-प्रकाशनोद्योगमालोक्य नूनमतितरां तुष्टा स्मः । सर्वथाऽपि भगवान् श्रेयो विधास्यति भूतभावनः । संप्रति प्रकृतमपि किञ्चिदुपस्थातव्यम्—

अद्यत्वे सर्वासां भावानां विविधैरुपायैरुन्नतिर्भवति । आंग्लभाषायां यादृशी समुन्नतिरस्ति नान्यस्यां कस्यांचिदपि तथा दृश्यते । साहित्येनैव भाषायाः समुन्नतिर्भवति । अत एव आंग्लभाषायाः साहित्यं विशालं, विविधाभिः प्रणालीभिर्मुहुर्मुहुः परिशोधितमतीव सौकर्यावहं पाठकानां कृते संजातम् । अन्यासामपि भाषाणां तथैवोन्नतिशीलमेवास्ते साहित्यम् । परन्तु सर्वाभ्योऽपि भाषाभ्यः प्राचीनाया अस्मदीय-देवभाषायाः सर्वांगाणि नहि परिपूर्णानि दृश्यन्ते, येन साहित्यस्य पूर्णत्वमंगीक्रियेत । यद्यपि अस्मदीयपूर्वजानां ऋषिवर्याणामेवैषः समुद्योगो यत्किल संप्रति संस्कृतभाषायाः संस्मरणानि दर्शनपथमायान्ति, परन्तु कालस्य परिवृत्त्या समाजस्य च दशापर्ययात् संप्रति एतदनुभूयते यत् संस्कृतेऽपि तथाविधानि पुस्तकानि मुद्रितानि भवितव्यानि, यादृंशि किल भाषान्तरेषु सन्ति । बालानां बोधाय सर्वविषयिणी यादृशी प्रथा संप्रति दशसु दिक्षु जागरूकतां भजते, तादृश्येव संस्कृतेऽपि सर्वैरधुनाऽऽकांक्ष्यते । केवलं पूर्वरचितान्येवास्मत्-शास्त्राणि न संप्रति समेषां कृतेऽलं भविष्यन्ति । संप्रति तु ततः स्वल्पेनैव कालेन व्यावहारिकं सर्वमेव ज्ञानं तथाऽधिगन्तुमीहन्ते, यथा किल लघीयसैवायासेन सर्वविधमपि जीवने व्यवहारोपयोगि ज्ञानं लब्ध्वा सुखिनो भवन्तु । भौगोलिकं, गणितविषयकम्, ऐतिह्यम्, तथैवान्यदपि सर्वविधं ज्ञानम् प्रत्येकस्य संस्कृत-विद्यार्थिनः कृते परमावश्यकमिति मन्यते जनैः । तदस्मिन् विषये यावतः प्रयत्नस्यापेक्षा विद्यते तावान् निखिलस्तु न सहसा कर्तुं पार्यते, परं क्रमेणैतत्सर्वं संभाव्यते । अस्मदीये साहित्ये संप्रति यावानुद्योगोऽस्ति तावानल्पीयसैव कालेन साहित्यस्य समुन्नतिकारको भविष्यति ।

कैश्चिच्च महानुभावैरेवमपि बहुधा समालोच्यते यत् किल काव्यमयं संस्कृतसाहित्यम्, शृंगाररसप्रधानतया संप्रति न तथोपयोगि; यथा किल वीर-करुणादि-रसप्रधानम् । यतः संप्रति मनुष्यसमाजस्य शारीरिकं स्वास्थ्यं रोगाक्रान्तत्वात् शक्तिशून्यत्वाच्च न शृंगाररसायोपयोगि, नवावस्थायां बालानां चेतःसु शृंगारादिगार्हस्थ्योपयोगि ज्ञानं नहि महत्वाकांक्षामङ्कुरयितुं प्रभवति । वयमपि साधुतया एतदेव वरं मन्महे यत्किलास्मदीये साहित्ये काप्यसुविधा न भवेदिति साहित्यं तु सर्वथैव जीवनं समुन्नति-सरण्यां प्रवाहयेत् तदैवान्वर्थं तस्य नामापि । अन्यथा तु न साहित्यस्य कापि महत्ता यदि जीवनं साहित्यविदामधोगामि भवेत् ।

समुन्नतिस्तु सति अवसरे सर्वस्याऽपि भवत्येव । अस्मत्साहित्यस्याऽपि भविष्यति, अत्र तु न कोऽपि संशयः । परं तु यथासमय एव भवेत्तथाऽस्माभिरेतस्मिन् विषये प्रयतितव्यम् । सर्वेऽपि महान्तो विद्वान्सः संस्कृतज्ञाः विषयेऽस्मिन् स्वयमेव प्रवृत्ताः सन्ति-इति तु परेशस्यैवात्यन्तमनुग्रहोऽस्ति । वयं तु न किञ्चिदपि कर्तुं समर्थाः, केवलमेतस्य कृते भगवन्तमेवास्मदीयसहायकं मत्वा प्रार्थयामः । स एव भगवान् भूतभावनः सर्वेषामेवास्मद्विद्वद्वर्याणां हृदयानि तथाऽस्मिन् विद्यायै संवलितानि विधास्यति, येन सर्वमापेक्षिकं सुव्यवस्थं भविष्यति ।

सुप्रभातस्य कृपालु-पाठकैरपि नूनमेतद् विभाव्यं यदस्मदीयं साहित्यं कथं सर्वांगपूर्णं सुविशदं सुखादेवोपलभ्यञ्च भवेत् । आशासे विश्वेषामस्माकं संकल्पबलात् प्रार्थनया च भूतये भविष्यति भगवान् भूतनाथः । किं बहुना, अत्र तस्यैवानुग्रहस्य परमाऽपेक्षा विद्यते ।

# प्राचीन-साहित्य-वैभवम्

श्री अयोध्यानाथ सान्याल शास्त्री

निखिलप्राणिसंकुले जगतीतले संस्कृत—लैटिन-पारस्य-प्रभृतयो वहुविधा भाषा विराजमानाः सन्ति । तत्र संस्कृत-लैटिनारव्यभाषाणां गणना प्राचीनभाषासु विद्यते । तत्रापि आरव्यभाषया भाषन्ते आरव्यदेश-निवासिनः, परं संस्कृत-लैटिन-भाषाभ्यां न कोऽपि साधारणजनो भाषते, कथितभाषासु गणनाभावात् मृतभाषा ( Dead Language ) इत्याख्यायेते । यद्यपि लैटिनभाषा कदापि कुत्रापि कैरपि नाभ्यधायि; तथापि संस्कृतभाषा कदापि भारतेऽस्मिन् व्यवहर्त्तव्य-भाषासीत् । अतएव महाभाष्ये शव्दानुशासनप्रयोजनावसरे केषां शव्दानां लौकिकानां वैदिकानाञ्चेत्युक्तं लौकिकशव्दवत् गौः अश्वः पुरुषो मृगो इत्यादि लोके प्रयुक्ताः शव्दा एवोदाहृताः । साम्प्रतं यद्यपि संस्कृतभाषायां व्यपहारः कस्मिन्नपि देशे नास्ति, तथापि लैटिनभाषातोऽधिकप्रचारोऽद्यापि विद्यते, तस्मात् मृतभाषेति व्यपदेशोऽस्यै कृते लाच्छनमात्रमेव । केनापि वैदेशिकविदुषाऽपि मुक्तकण्ठं व्याहारि (Yet Sanskrit never be spoken as a "dead langauge" rather as a fettered language ) संस्कृतभाषा-न कदापि मृतभाषेत्यपदेशेन व्यपदेश्या परं पवित्र-भाषा ( Sacred language ) इत्यनेन व्यपदेश्येति ।

साहित्य-समुन्नत्यधीनैव भाषायाः समुन्नतिभर्वतीति सर्वत्रैवाक्षिगोचरीभूयते । यथाधुनाङ्गलभाषा समृद्धिशिखरारुढ़ा दृश्यते, न तथा पञ्चशतवर्षपूर्वमिति सर्वजनप्रसिद्धम् । एलिजावेथाभिधसम्राज्ञीराज्य-काल-एव विविध-समुन्नत्या साकं साहित्यसमुन्नतिरप्यभूदिति सर्वैरितिहासवित्तैस्तदानींतनो युगः 'सुवर्णयुग' ( Golden age ) इत्यभिधीयते । तत एव शेक्सपियर-मिल्टन-स्काट-एडिशनादिकवि-कुलशिरो-मणिभिर्गद्य-पद्य-लेखकैर्जनुषा जन्मभुवं भूषयद्भिर्गद्यपद्यात्मक-साहित्य-समुच्चयैः पूरितं भाषा-भाण्डागारमिति सर्वैरैतिहासिकैर्विदितमेव । यद्यप्यभिनवलेखक-लिखितानि वहूनि काव्यानि प्रतिहायनं प्रकाश्यन्ते; तथापि शेक्सपियरादि-प्राचीनकविविरचितानि काव्यानि समादरदृष्ट्या दृश्यन्ते, पाठ्यन्ते च निखिलाङ्गलभाषा-विश्व-विद्यालयेषु ।

संस्कृतभाषायां यद्यप्यभिनव-ग्रन्थरचना-प्रगतिर्निरुद्धैव लक्ष्यते, तथापि महर्षिप्रणीतानां ग्रन्थानां प्राचीनत्वेनानार्षग्रन्थानामर्वाचीनत्वेन च व्यपदेष्टुं शक्यते । एकमार्षसाहित्यमपरमनार्षसाहित्यमित्यन्यथापि विभाजयितुं शक्यते । आर्षसाहित्ये कथंकारं वैभवमस्तीति निश्चप्रचम् । प्रासादगुणसमन्वितान्येव काव्यानि सर्वत्र कविभिराद्रियन्तेऽतएवाधुनिककाव्यजगति च महाकविकालिदासविरचिताभिज्ञानशाकुन्तलं काव्यज्ञाने शेखरायते, क्लिष्टशव्दवाहुल्येन काव्यगत-माधुर्यं सर्वथा विलीयते, अतएव रसप्रतिबन्धकत्त्वेन दोषाधायकत्त्वञ्च तत्र भवतीति सुधीभिर्विवेचनीयमिति । प्राचीनार्षसाहित्यञ्च सर्वथा एतदोष-विनिर्मुक्तमेवास्तीति वोध्यम् । रामायण-महाभारतीय-कविता अधीयानानां जनानां केषान्न चेतांसि प्रमोदपारावारे प्रोन्मज्जन्ति ? तथा च वर्णनमिदमवलोक्य निश्चेतुं शक्यते कविगुरुवाल्मीकेः काव्य-नैपुण्यं वर्णना-क्षमत्त्वञ्च कथमासीदिति निदर्शनत्वेन तदीयकवितेयं पाठक-समक्षं स्थाप्यते ।

स वेश्मजालं वलवान् ददर्श व्यासक्तवैदूर्यसुवर्णजालम् ।
यथा महत्प्रावृषि मेघजालं विद्युत्पिनद्धं सविहंगजालम् ॥

स वलवान् मरुतात्मजो लङ्कां प्रविश्य व्यासक्तं वैदूर्यरत्नैः सुवर्णस्य च जालं यत्र तद् वेश्मजालं प्रावृषि महत् सविहंगजालं विद्युत्पिनद्धं मेघजालमिव वर्तमानं ददर्श । ललिताक्षरैर्विनिवेशितोपमानुप्रासालङ्कार-विभूषिता चेयं कस्य सचेतसश्चेतो न रञ्जयति ?

अपरञ्च महाभारते आदिपर्वणि महाराज-दुष्यन्तस्य मृगया-वर्णनावसरे वानप्रस्थवर्त्तिनां मुनीनामाश्रम-कानन-वर्णनमिदम्—

शीत-मारुत-संयुक्तं जगामान्यन्महद् वनम्।
पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम्॥
विपुलं मधुरारावैर्नादितं विहगैस्तथा।
पुंस्कोकिल-निनादैश्च झिल्लीकगण-नादितम्॥
स्वनन्ति रावान् मधुरान् षट्पदा मधुलिप्सवः।
तत्र प्रदेशाश्च वधून् कुसुमोत्कर-मण्डितान्॥
सुखं शीतः सुगन्धी च पुष्परेणुवहोऽनिलः।
परिक्रामन् वने वृक्षान् उपैतीयं रिरंसया॥

एषु पद्येषु कथमक्षरविन्यासः? कथं वा सहृदय-हृदयग्राहिका स्वभावोक्तिरिति स्वयमेव पाठकैरनुभाव्यम्। श्रीमद्भागवतविषये तु किं वक्तव्यमस्ति? पुरा किल विविधशास्त्रपारङ्गता अपि महामनीषिणो यस्य स्वीकारकरणेन परीक्षिता भवन्ति स्म। अत एव तु 'विद्यावतां भागवते परीक्षे'ति लोकोक्तिरद्यत्वेऽपि विबुधसमाजे प्रचलिता विद्यते। अनया च श्रीमद्भागवतस्य काव्यराजत्त्वं माहात्म्यातिशयश्च द्योत्यते। श्रीमद्भागवतमेव केवलं निखिलमाधुनिक-काव्य-कलापमतिशयितुं क्षमते। एतदेवाधीयाना जना आत्मानं कृतकृत्यं मन्यन्ते। किं बहुना, परमपीदं पद्यं भागवतं स्तौति।

निगमकल्पतरोर्गलितं फलं; शुकमुखादमृतद्रवसंयुतम्।
पिबत भागवतं रसमालयं; मुहुरहो रसिका भुवि भावुकाः॥

निखिलकाव्यगुणोपेतं भागवतं किमाधुनिक-काव्यजातं स्पर्धितुं प्रभवति?

तथा च दशमस्कन्धे, यदा भगवान् श्रीकृष्णचन्द्रः कृत्तिकया युक्तायां पौर्णमास्यां शरद्रात्रौ रासाभिधक्रीडया क्रीडितुं मनसि प्रास्तावीत्तदा चन्द्रमसो वर्णनमिदम्—

तदोडुराजः ककुभः करैर्मुखं
प्राच्या विलिम्पन्नरुणैश्च शंतमैः।
स चर्षणीनामुदगाच्छुचो मृजन्
प्रियः प्रियाया इव दीर्घदर्शनः॥

तदा चन्द्रमाः प्राच्या दिशो मुखमरुणेन व्यलिम्पत्। यथा कश्चित् नायको विदेशादागत्य प्रोषित-भर्तृकायाः प्रियाया मुखमरुणेन कुङ्कुमेन विलिम्पति तद्वत्। अनेन प्राच्या दिशो नायिकात्वं चन्द्रमसो नायकत्वञ्चारोपितम्। अन्योऽपि कश्चित् नायकः कस्याश्चित् नायिकाया मुखमरुणेन कुङ्कुमेन विलिम्पतीति व्यज्यते, तेन समासोक्तिरलङ्कारः। चर्षणीनां मनुष्यजातीनां शुचोऽपनयन् प्रियाया दीर्घदर्शनः प्रिय इव उदगात्। अनेन प्रियाया दीर्घदर्शनत्व-विशिष्टप्रियत्वमारोपितं तेनोत्प्रेक्षालङ्कारोऽपि, उभयोः संसृष्ट्या सङ्करश्चेति विबुधैर्विवेचनीयम्।

इत्थं शारदं चन्द्रमसं विलोक्य भगवान् स्वकर-पल्लव-धृतां वंशीमवादयत्। तस्य वर्णनम्—

दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं
रमाननाभं नवकुङ्कुमारुणम्।
वनं च तत् कोमलगोभिरञ्जितं;
जगौ कलं वामदृशां मनोहरम्॥

अखण्डमण्डलमत एव लक्ष्मीवदनकान्तिं नवकुङ्कुमारुणं चन्द्रमसमवलोक्य, कोमलैर्मृदुभिरंशुभिः किरणैरभिरञ्जितं तत् वनञ्चावलोक्य रमणीनां मनोहारि ललितं गीतं जगौ।

तंमनोहारिणं वंशीध्वनिमाकर्ण्य व्रजवधूटीनां का दशाभूत्तद्वर्ण्यते—

निशम्य गीतं तदनङ्गवर्द्धनं
व्रजस्त्रियः कृष्णगृहीतमानसाः।
आजग्मुरन्योन्यमलक्षितोद्यमाः
स यत्र कान्तो जव-लोल-कुण्डलाः॥

तदनङ्गवर्धनं गीतं निशम्य कृष्णेन गृहीतं मानसं यासां, परस्परं न,लक्षितमुद्यमं याभिः, जवेन लोलं कुण्डलं यासां ताः व्रजस्त्रियः स कान्तो यत्रासीत्, तत्र आजग्मुः जग्मुरिति वक्तव्ये आजग्मुरित्यनेन तासां द्रुततरं गमनं सूच्यते। दिङ्मात्रेणैवावगन्तव्यमन्यथा बहुसमालोचनेन प्रबन्धोऽपि बहुविस्तृतः स्यादिति काव्यालोचनं विरमय्य नीरस-शब्दशास्त्रं समालोचितुमुद्युञ्जे।

प्राचीनकाव्ये न केवलं काव्यतत्त्वमपि तु दर्शनतत्त्वमपि निहितं विद्यते। अद्यत्वे सर्वत्रैव शब्दशास्त्रस्यैव पठनपाठन-बाहुल्यं नयनविषयीक्रियते, तत्रापि नवीनग्रन्थानां प्रचाराधिक्यम्, परं यत् वैभवं महाभाष्यादिप्राचीनग्रन्थेषु विद्यते, तस्य षष्टितमा कलापि मनोरमादिग्रन्थेषु नावाप्यते।

पुरा किल प्रत्यक्षधर्म्माणः परापरज्ञा विदितवेदितव्या अधिगतयाथातथ्या महर्षयो बभूवुः। येऽस्माकं लक्षणैकचक्षुषां हिताय शब्दब्रह्म योगैकगम्यं प्रत्यक्षीकृत्य स्वानुभवं विनिवेशयन्तो ग्रन्थरत्नं विरचयामासुः। यदि तदीयग्रन्थरत्नावलोकनपराङ्मुखा भवेम वयं तदास्माकं मन्दभाग्यतैवं येऽङ्कस्थितामपि सरस्वतीमवमानयामः। महाभाष्यं न केवलं पाणिनीय-सूत्राणां व्याख्यानमात्रं किन्तु बहूनि लक्ष्याणि स्वेष्ट्या साधुत्वेन प्रतिपादयति। अत एव सकलदर्शनव्याख्यानानि भाष्याभिधेयेनैव प्रथितानि; परं पाणिनीयसूत्राणां व्याख्यानभूतोऽयं ग्रन्थो महाभाष्यनाम्नैव प्रसिद्ध इति। नागेशभट्टेनाऽपि विवरणे प्रत्यपादि—

"व्याख्यातृत्वेऽप्यस्येष्ट्यादि कथनेनान्वाख्यातृत्वादितरभाष्य-वैलक्षण्येन महत्त्वमिति"

किञ्च महाभाष्यं सागरोपमं गम्भीरायतञ्च। महावैयाकरणः कैयटोऽप्याह—

"भाष्याब्धिः क्वाऽतिगम्भीरः क्वाऽहं मन्दमतिस्तत इति।"

यथा—अगाधसमुद्रतले बहून्यसंख्येयानि रत्नानि विराजमानानि सन्ति; तथैव महाभाष्याब्धावपि बहूनि रत्नानि निहितानि सन्ति। न कोऽपि पुरुषो महता प्रयत्नेनाऽपि समुद्रान्महार्घ्य-रत्नानि निःशेषीकर्त्तुं शक्नोति। कथं पुनर्महाभाष्याब्धिस्थानि रत्नानि दीक्षितादिभिर्निःशेषीकृतानि भवेयुरिति सुधीभिर्विवेचनीयम्।

हंहो! बहूनि सिद्धान्तवार्तिकानि दीक्षितपादैर्न स्थापितानि सिद्धान्तकौमुद्याम्, किञ्च क्वचित् त्रुटितवार्तिकपाठ-सन्निवेशः सहृदयानां चेतांसि दुःखाकरोति।

एतेनापि ग्रन्थपाठन-जन्येनांहसा कस्तत्र लिप्तो भवेत्, एतद्ग्रन्थमधीयाना जनाः किमुभयतो भ्रष्टा न भवेयुः? अर्द्धवार्तिकेन यथा दृष्टफलं शब्दसाधुत्वप्रतिपादनरूपं न जनयितुं क्षमते तथा अदृष्टफलमपि जनयितुं कथं प्रभवेत्? तथाहि—

"इवेन सह समासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वञ्चे"ति-

सम्पूर्णं वार्तिकं महाभाष्ये दृश्यते, परं सिद्धान्तकौमुद्यामिवेन सह समासो विभक्त्यलोपश्चेत्येव वार्तिकमिति वागर्थाविवेति प्रयोगे कः स्वरः स्यात् कौमुद्यनुसारिणि वार्तिकपाठे "समासश्चे"ति अन्तोदात्तत्वं स्यात् भाष्यरीत्या तु पूर्वपदप्रकृतिस्वरत्त्वमिति महत् वैलक्षण्यमिति विभावनीयम्।

किञ्च "दादेर्धातोर्घ" इति सूत्रस्य उदादिपदस्यावृत्त्या औपदेशिकपरत्त्वव्याख्यानेन दामलिहमात्मानमिच्छतीति दामलिडिति भवति दीक्षितमते, महाभाष्ये तु होढोऽदादेरिति न्यासेन "अधोधित्यत्राव्याप्तिदोषपरिहार एव दृश्यते, न तु दामलिहमात्मानमिच्छतीत्यत्रातिव्याप्तिशङ्कालेशोऽपीति दामलिघित्येव रूपं भाष्यरीत्या साध्विति भाष्यविरुद्धत्वदोषात् को मोचयितुं प्रभवति भाष्यविरुद्धत्वदोषदानेन काशिकादिप्राचीनवृत्तिग्रन्थखण्डनतत्परोऽपि स्वयमेवं तद्दोषगर्ते निपतित इत्याश्चर्य्यम्।

यथा "उपपदमतिङ्" इति सूत्रे महाभाष्ये महान्तं कुम्भं करोतीति विग्रहे सापेक्षमसमर्थवद्भवतीति सामर्थ्याभावात् समासो न भवतीति "काशकटीकार" इत्यत्राऽपि समासो न प्राप्नोति, गोनर्दीयस्त्वाह इष्यते एवेति। इत्थं महाभाष्यीयज्ञानाभावात् कथंकारं इष्टिज्ञानं लब्धुं शक्यम्? इष्टिज्ञानाभावाच्च सर्वथा साधुत्त्वमन्वाख्यातुंसमर्था नभवाम इति महाभाष्यादिप्राचीनग्रन्थानामध्ययनं सर्वथावश्यकमेवेति, न तु वैयाकरणसिद्धान्तकौमुद्यां दीक्षितपादैः सर्वमिष्टिजातं प्रतिपादितं। क्वचित् कात्यायनविरचितं लक्ष्यसाधुत्वप्रतिपादकं वार्तिकमपि न निधापितम्। यथा "लोमादिपामादिपिच्छादिभ्यः शनेलचः"इत्यस्मिन् सूत्रे "शाकीपलालीदद्रुदा

ह्रस्वत्वञ्चे" ति वार्तिकं दृश्यते, तेन विना कथं शाकिनः, पलालिनः, दद्रुण इति प्रयोगाः सिध्येरन्। न प्रत्यये कृतेऽपि ह्रस्वत्वस्य सर्वथा विधातुमशक्यत्वात्, तत्र न्यूनताऽपरिहेयैवेति।

किञ्च महाभाष्यमनधीत्य मनोरमादिग्रन्थानामपि सम्यक् ज्ञानं दुःशकम्। यतो मनोरमादिग्रन्थाः समालोचनात्मकाः सन्ति। ततो मूलपुस्तकाध्ययनमन्तरा नहि कोऽपि तस्मिन् समालोचने समर्थो भवति। यथा भवभूति-कालिदासयोः समालोचना हिन्दीभाषायां प्रसिद्धा। अभिज्ञानशाकुन्तलमुत्तररामचरितञ्चानवलोक्यैव न कोऽपि समालोचनग्रन्थमवगन्तुं शक्नोति। यदि कश्चित् कथञ्चित् समालोचनग्रन्थमेव बहुपरिश्रमेणाधीत्यावगन्तुं समर्थो भवेत् तदा तद्रीत्यैव समालोचयितुं शक्ष्यतीति बोध्यम्। मूलग्रन्थाध्ययने त्वनेकधा दोष-गुणविचारेण स्वातन्त्र्येणैव समालोचयितुं समर्थो भवतीति। तथा महाभाष्यग्रन्थमधीयानोऽपि जनोऽनेकधा कल्पयितुं शक्नोतीति महाभाष्यादिप्राचीनपुस्तकाध्ययनमतीवोपयोगीति बोध्यम्।

अतएव प्रौढ़मनोरमाया हरिदीक्षितविरचितशब्दरत्नाख्यटीकायां प्रौढ़त्वञ्च "सफलदर्शनाध्ययनपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वमि"त्युक्तम्। अनेनाऽपि महाभाष्याध्ययनस्य मनोरमातः प्राक्कालिकत्त्वं दर्शितं, तदध्ययनं विनैव तद्गूढार्थज्ञानवत्ताया दुर्लभत्वात्। अतएव सत्यामपि मनोरमायां नागेशभट्टेन स्वातन्त्र्येणैव लघुशब्देन्दुशेखरे तत्खण्डनपूर्वकं विचारधारा प्रवाहिता। महाभाष्यमधीत्यैवेत्थंभूता शक्तिर्लब्धा, अन्यथा तु नाऽयं शक्तः स्यात्। प्रमाणन्तु—

"पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः"

इति तदीयवाक्यादेवोपलभ्यते। मया तु पातञ्जलमहाभाष्ये बहुपरिश्रमो विहितोऽत एव महाभाष्यतत्त्वमपि शोभनमवगमयितुं शक्यत इति लघुशब्देन्दुशेखरस्यापि तन्मूलकत्वादेव प्रामाण्यमिति दर्शितम्, अन्यथा यदि मनोरमायाः स्वतन्त्रं प्रामाण्यं गरिमाधिक्यं वाऽभविष्यत्तदा प्रौढ़ायां मनोरमायां कृतभूरिपरिश्रम इत्येव प्रत्यज्ञास्यत्।

---

# दीपस्य तले तमः—

निबन्द्धा-कविरत्न पं० श्री महावीर प्रसाद जोशी, काव्यतीर्थः साहित्याचार्यः, साहित्यधुरीणः, काव्यकलानिधिः, आयुर्वेद-विशारदः (ढूण्डलोद)

अद्यापि मध्ये व्योम विराजति भगवति भास्वति; अपि च प्रभास्वति जगन्मण्डले; गगन-तलं गाढ-नीलिमानमेव धारयतीति विभाव्य निश्चीयते यत् प्रकाशस्यान्तर्गहनमन्धं तमो विराजति। साम्प्रतं भारते पाश्चात्य-सभ्यता-चमत्कृते नेतृ-मण्डल-कृता काऽपि समुन्नतिरनुमीयते, किन्तु हन्त! दीपस्य तले तमः!! सर्वत्रापि नेतृ-कर्मचक्राऽभिनन्दका विपुलाः समुद्घोषाः कर्णपथाऽतिथीक्रियन्ते, परं तत्र सारवत्ता शतांशतयाऽपि न विभाव्यते। वस्तुतः पाश्चात्य-मिथ्याचाराऽतिरञ्जिता, प्रदर्शन-मात्र-प्रधाना, देशोद्धार-पद्धतिरत्रापि प्रचलिता। विदेशानुकृत्यैव समाचार-पत्राणां मिथ्याक्रान्तिः सवाक्चित्रपटमायेव प्रथिता। प्रस्तावन-मात्र-सारा च प्रस्ताव-सरणिरप्यनुसृता।

साम्प्रतिकाश्च नेतारो मनो-विनोद-साधिकां राजनीति-चर्चामङ्गीकुर्वन्ति। केवलं समाचार-पत्रेषु सोल्लासभाषया लिखितै राजनीतिकैर्लेखैः शासकमण्डलेऽव्यवस्थां सम्पाद्यैव ते कृतकृत्याः। अपि च पुरुषत्व-सुलभां कर्मठतां विहाय वाग्बाणैरेव जगज्जेतुं प्रयतन्ते। विविधान्दोलन-जनित-कोलाहल-

मात्रे सर्वाः शक्तीरपव्ययीकृत्य देशोन्नति-मन्दिर-भाविनीं पश्यन्ति। किन्तु कर्म-वैमुख्येन शनैः शनैर्जड़ता नपुंसकता चाक्रामति देशम्। येचाऽऽभ्यन्तर शक्त्याऽऽत्योत्कर्षमसाधयन्तो वहिः सभ्यता-शक्त्या समुन्नतिं समीहन्ते, कथमिवाधिगच्छन्तु ते सफलताम्?

वस्तुतो युगमिदमान्दोलनस्य। जनताया हृदयं करुणार्द्रं विधाय स्वस्वमनोरथ साधन-प्रवणैर्जनैर्नव-नव-प्रयोगास्तायन्ते। यतश्चक्षुः प्रक्षिप्यते, तत एव करुणस्य मूर्तिमतो दर्शनं भवति। 'एको रसः करुण एव' इति भवभूति-वचनं चरितार्थं भवति। सर्वे हि स्वस्वेष्ट-पूर्त्यै क्रन्दन्ते, विलपन्ति च। तर्हि कस्तावदन्वेषयतु सत्यमादर्शम्?

तत्र हि प्रथमे निर्धन-जन-निधनायमाना विविध वञ्चनामय-व्यवसायैर्जनतायाः शोणितमाचूषमाणाः, अर्थायानर्थ-सहस्रं कल्पयन्तः, श्रमिक-जन-शोषकाः, वित्त-वित्ताः। ये हि महता कलकलेन स्वकीय-हानि-लाभाय विलपन्तो निभाल्यन्ते। अन्ये च परिवार मपि भारमिवाकलयन्तः संसार-समरस्य कातरा स्सैनिकाः स्वकीयं जीवनं निस्सारमिव मन्वानाः स्पष्टं कष्ट-क्लिष्टा अपि सृष्टि-सृष्ट्यै प्रयतमाना निष्क्रिया-पाश-पतिताः स्वमनोरथ-साधनाक्षयपौरुषा जनाः। ये च साक्रोशमाक्षिपन्ति हि सामयिकीं स्थितिम्। इतरे चान्न-गृह-हीनाः, क्षीण-कलेवराः, सकरुणं चीत्कुर्वन्त्युदर-पोषणाय। अपरे च देशभक्त-मानिनः सामयिकीः समस्या उत्तरयितुं यतमाना इव, दीन-दुर्दशां हृदयेऽननुभवन्तोऽपि कल्पना-प्रसूत-सहानुभूति-प्रदर्शन-मात्र-प्रवणाः, वर्तमान-युग-प्रधानाधिनायकाः; येषां हि स्वमनोरथपूर्तिरेवोद्देशः, व्याख्यानाख्याना-दिभिः प्रसिद्धि-प्राप्तिर्जनता-कृत-सम्मानलाभश्चैव मनोरथः। सर्वत्र प्रभावोत्पादनमेव चान्तरिकी गूढनीतिः। मनो-विनोदोपकरणं च देश-दुर्दशा-विचार-प्रकरणम्। तेऽपि देशाय क्रन्दमाना आन्दोलयन्ति भारतम्। केनचिन्मर्मवादिना कदाचित् समाचार-पत्रेषु विनैव मूल्यं नेतृत्व-लाभौषधं प्रकाशितं-यत् 'यदि यूयं हिन्दवः, तर्हि हिन्दूनेवाक्रोशन्तु, पातयन्तु च कतिपयाश्रु-बिन्दूनहिन्दुभ्यः, निन्दन्तु वेद-पुराणादि-शास्त्राणि, उपादेयामपि प्राचीनां सरणिं खण्डशः कर्तुमान्दोलयन्तु संसारम्, ततः शीघ्रमेव नेतृत्वं प्राप्स्यथ। इदमेव साम्प्रतं नेतृत्व-लाभस्यामोघमौषधम्।' इति वास्तविकं चित्रणं तेषां महानुभावानां नामतोऽपि परिहरणीयम्।

इत्येवं सर्वत्राऽप्यशान्तेः प्राज्यं राज्यं वर्तते। तदा के नाम सत्यादर्शलाभाय प्रयतन्तु? हन्त! ततोऽपि प्रसादमासादयति जनता भारतोन्नति-प्रसन्नतामनुभूय। किन्तु साम्प्रतमनुयोगोऽयमस्माकम्-यत् किमु स्वार्थसाधनाय विविधोपाधिपरायणानां हस्तलाघवमेव देशोद्धारः? उक्त-प्रकारेणान्तःशून्यामुन्नतिं विभाव्याऽपि को नाम समुदयो भारतस्य मन्यताम्?

इदं विवेचनं तु न साम्प्रतमसाम्प्रतं यत्-कृतेऽपि प्रयत्न सहस्रे न किमिवाऽत्र काऽप्युन्नतिरनुभूयते? कथं च न भवति सुनीति-नेतारो नेतारः? समुन्नति-शिखराऽऽरोहिणः सर्व-देशगुरोर्भारतस्य किमिदं परिवर्तनम्? किं तच्चिरत्नं रत्नं व्यलेष्ट? येन विनेदृशी गतिर्जाता भारतस्य। अयमत्राऽभिसन्धिर्यत् वासना-विकलेऽप्यविकले लोके सर्वेऽपि प्राणिनः सुख-समुन्नति-समीहां बिभ्रति, किन्तु स्वेष्ट-सिद्धिमेव सुखं समुन्नतिं च मन्वते। तथाहि—शिशवस्तु सुधा-सध्रीचीनां सरस-पयः स्रुतीनां जननीं जनन्यङ्कपालीमेव सुखमयीमवगच्छन्ति; तरुणाश्च प्रणयिनी-प्रेम-पाश-पतिताः कच-कुच-कपोल-कल्पनायामेव कलयन्त्य-विकलां कलाम्। सन्तति-कामाश्च सन्ततं पुत्र-प्रसवेनैव प्रसादोपसादं प्रपद्यन्ते। सामयिक-शिक्षा-दीक्षितो विद्यार्थि-सार्थश्च परीक्षि-गतार्थतामेवाभीष्टामुन्नतिं मन्यते, भृत्यवर्गश्चावकाशमेव विकाश-साधनं जानन्ति। सहृदयानां हृदयेषु च सरसाः सुधा-बिन्दु-निष्पन्दिन्यः कविता एव कन्दलयन्त्यस्माकमानन्दम्। अनवद्या वैद्याश्च गत-विचिकित्सां चिकित्सामेव यशस्करीं मन्वते। अशनायन्तः सरसं स्वादुभोजनमधिगम्य मोमुदति, उदन्यन्तश्च निपीय शीतलं सलिलं शान्तिं लभन्ते, ... चिन्ताः सन्त एव

समुन्नत-मानिनो भवन्ति। इति दिङ्मात्रं प्रदर्शितो भ्रान्तानां समुदयानुसन्धान-श्रान्तानां फल्गु-प्रयासः। एवं स्वार्थ-परम्पणान् सर्वानपि निर्मथयितुं धर्म-शास्त्राणामाविर्भावः कृत आसीत्। तत्र हि सत्यः समुदय-मार्गः समुपदिश्यते भ्रान्तेभ्यः। तदनुगमेन च परतराभ्युदय-प्राप्तिर्निश्चितैव। पुरा भारतमपि धर्मशास्त्रमर्यादया संचलदेव सर्व-समुन्नतं स्थान-मशिश्रियत्। यदारभ्य चाऽत्र धर्मशास्त्र-वैमुख्य-मुररीकृतं जनतया, तत एवावनतिगर्ताभिमुखतां आपद्यत। साम्प्रतं तु चरमां सीमानमधिगच्छति। यतो हि विसंस्थुलाऽजनि शास्त्र-मर्यादा। समूलघातं च हन्यते धर्मः। धर्मरूपमेव तच्चिरन्तनं रक्तमासा-मास, येन विना दुर्दशामनुभवन्ति भारतीयाः। किन्त्वयमनुयोगः समुचितः सम्प्रति यत् किमिव कारणं शास्त्र-मर्यादा-मर्दने, धर्म-दलने च ? तत्र विचार-स्पृशा दृशा विवेचनेन भारतीय-संस्कृति-संरक्षिकायाः संस्कृत-भाषायाः प्रचार-वैरल्यमेव हेतु-रभिमुखी भवति। सनातनीयं भाषा भारतस्य सुमधुरा, सरसा, पूर्णवैज्ञानिकी च वर्तते। अन्याः सर्वा अपि भाषा अर्थज्ञानमपेक्षन्ते, आनन्दजन-कतायामियन्तु श्रुतिमात्रेणाप्यमन्दं मधुरिमाणं जन-यति। इदमेवात्र कारणं यद्वैदेशिका अपि विद्वांसः संस्कृत-वैभव-मुग्धा मुक्त-कण्ठमुद्घोषयन्ति सर्व-श्रेष्ठत्वमस्याः। तथाहि—

'न जाने विद्यते किंतन्माधुर्यमत्र संस्कृते।
सर्वदैव समुन्मत्ता येन वैदेशिका वयम् ॥"

(होरेस-हेम्यान-विलसन-महोदयस्य, यूरोपवासिनः)

एवमन्येऽपि बहवो वैदेशिका विदो दृश्यन्ते संस्कृत-भक्ताः। किन्तु हन्त ! यत्कृता हि समुन्नतिरद्य डिण्डिमघोषमुद्घोष्यते समाचारपत्रेषु, त एव भारतीया नेतारः संस्कृत-भाषायाः सत्तामपि भारते द्रष्टुं न पारयन्ते। हिन्दी-भाषायामपि संस्कृत-शब्द-प्रयोगं न सहन्ते। किन्तु न त एवं विचारयन्ति यत्-संस्कृत-साहित्य-प्रचाराऽभावो भारतावनतेः प्रथमो हेतुः। संस्कृत भारतीय-संस्कृतेरनुपमा खनिः, संस्कृत-विरोधकाः स्वसंस्कृति-विरोधका एव मन्तव्याः। हिन्दीभाषया स्वल्पतर एव समये या समुन्नतिः, प्रौढ़ता, व्यापकता च प्राप्ता, सा सर्वाऽपि संस्कृत-शब्द-समादर-महिम्नैव। यदि च सा हिन्दु-स्तानी-रूपं स्वीकृत्य संस्कृत-शब्द-बहिष्कार-परायणा भवेत्तर्हि तस्याः साहित्यिकं महत्त्वं नांशतोऽपि गण-नीयं स्यात्। किन्तु नैतद्दूरर्शितां लोका ज्ञातुम-धीशते। यतो नेतारश्च 'दीपस्य तले तम' इति चरि-तार्थयन्त्येवेत्यनुपदमनोहरम्।

वस्तुतः संस्कृतस्याऽप्रचारे, विरोधे, भारतावनति-परम्परायाः कारणं संस्कृतज्ञानामौदासीन्यमेव। एवं-विधे युगान्तरकारिणि समयेऽपि ते मौनमवलम्ब्य सन्ततं शान्तिमुपासत-इति परतरं दुःखस्थानम्। साम्प्रतमपि यदि तेषां चिर-स्थायि मौनमस्थास्यत्तर्हि अचिरवर्तिन्येव भविष्यति संस्कृतभाषा दूरतरमुत्सा-रिताऽभविष्यत्। सदैव च तया भारतीया संस्कृति-रपि। संस्कृतज्ञाश्च सावमाननं बहिष्करणीयाः स्यु-रिति शान्ते स्वान्ते ध्येयम्। विना संस्कृतज्ञ-प्रयत्नं कदाचनाऽपि न भारते समुन्नतिर्जातेत्यत्र भारतीये-तिहासः प्रमाणम्। निदर्शनं च श्रीशङ्कराचार्यकृता-भ्युदय एव। अतः साम्प्रतमपि संस्कृतज्ञैर्निद्रां विद्राव्य कर्म-क्षेत्रे पद-क्षेपो विधेलिमः। किन्तु हन्त ! धर्म-मर्म-विज्ञाः, कृतिनः, सर्वतन्त्र-स्वतन्त्राः, लोकनीत्यादि प्रवीणा अपि विदो न सामयिकेषु विषयेषु क्षणमपि प्रक्षिपन्त्यक्षि, प्रत्युत पारस्परिक-वादविवाद एव समयहानिं विदधति। बत ! अत्रापि 'दीपस्य तले तमः'।

संस्कृतज्ञानां मौनेनैव समृद्धोत्साहाः शासन-सभायामधिकृताः कांग्रेस-नेतारः प्रजातन्त्रानुयायि-मानिनोऽपि प्रजामतमनादृत्य संस्थापयन्ति स्मानेक-विधान् धर्म-कर्म-कृतो राजकीय-नियमान्। हन्त ! हिन्दवोऽपि ते मोहमदानुयायिनां चाटुकारित्वेऽपि युक्ता हिन्दूनामधिकारेषु कुठाराघातं कुर्वन्ति। आर्याणां धार्मिकीमपि स्वतन्त्रतामसहिष्णवो मन्दिर-प्रवेशादिनियमानवतारयन्ति स्म। आर्य-संस्कृतेः प्रतिष्ठा-मूलके विहार-संस्कारेऽपि ते हस्तक्षेपं कुर्वन्ति

तं च समूलमुन्मूलयितुं विविधोपधिप्रयोगैरनेकविधान् विवाह-विच्छेदादि-नियमानभिमुखीकुर्वन्ति। हन्त ! किमेतदर्थमेव जनता बहुमतं प्रदाय प्रातिष्ठिपदेतान् शासन-सभाऽधिकारि-पदेषु ? जनताम्प्रति विश्वास-घातमाचरन्तोऽपि हन्त ! सबहुमानमेते स्वकीयं शासनं प्रशंसन्ति।

हन्त ! विचित्रेयं सामयिकी स्थितिः संसारस्य ! वैदेशिका विवाह-विच्छेदादि-पद्धतिं निन्दन्तः, तथाविधमाचारं त्यजन्ति, भारतीयास्तु तेभ्यो विविधालनान् जनयन्ति, राजकीय-नियमांश्च प्रस्तावयन्ति। शर्मण्यदेशीयो हिटलरस्तु भारतीयां संस्कृतिं स्वीकर्तुकाम इव बहु पराक्रमति, निजस्यार्य्यत्वं चोद्घोषयति। भारतीयाश्च विरुद्धमाचरन्ति। इति सर्वोऽपि विपरीत इव कार्यक्रमः। अत एवाऽयं समुदयाभिगामिनः सन्ति, भारतं चावनतिमेवाङ्के करोति।

अयि ! निष्करुण विधे ! कं विधिं विधातुमुद्यत स्त्वं भारतस्य। यत्राद्यापि भारतीयेषु जाग्रतमविवेकातिरेकमपहरसि। कोऽयं ते कोप-क्रमः। का चेयमनिष्ट-दिष्ट-जननी दृष्टिः। भगवन् ! करुणामय, क्वाऽद्य ते करुणा ? किमिव च प्रियतरं लीलाक्षेत्रमुपेक्षसे ? कथं च धर्मग्लानिः सह्यते ? किमु न शृणोसि करुणं चीत्कारमार्तजनानाम् ? हन्त ! किमु 'दीपस्य तले तमः ?'

---

## आलङ्कारिको वासुदेवः ( सगुणब्रह्म )

सावयवं निरवयवं समस्तवस्त्वेकदेशसंवर्त्तम्।
रूपकमिव गत-भेदं श्रयतानुपमं सदा सदाराध्यम् ॥ १ ॥

असमो विषम-विरोधो दृष्टान्तैकावली विचित्रोऽयम्।
उपमाश्लेषोदात्तः सालङ्कारस्तथाप्यसन्देहः ॥ २ ॥

प्रसाद-माधुर्य-समाधि-कान्ति-श्लेषौज आद्यैः सुकुमारतावान्।
उदारतावान् सगुणस्तथापि सदासमो राजति निर्गुणोऽयम् ॥ ३ ॥

शृङ्गारी गोकुले यो, नतिमति करुणः, कंसगोष्ठ्यां सुवीरः,
चित्रो गीतोपदेशे, किरिरुचि विकृतो, योगिचित्तेषु शान्तः, ॥
वामा-वर्गे सहास्यो, रिपुषु प्रतिभयो, रौद्ररूपश्च चैद्ये,
भात्येवं कान्तलोके सकल रसमयः सोऽस्तु किं नो रसेशः ॥ ४ ॥



श्रीमन्माननीय—महामहोपदेशक—विद्यावारिधिव्याख्यान-वाचस्पति—युक्तिकल्पतरु-प्रभृति-विविध-सम्मानोपाधि-समलङ्कृतेभ्यः पञ्जाब-सनातन-धर्म-महासभा-प्राणभूतेभ्यः, सारस्वत-कुलकमल—दिवाकरेभ्यः, गोस्वामिवंशावतंसेभ्यः,

## श्रीमत् पण्डितवर गोस्वामि यदुकूलभूषणशास्त्रिमहोदयेभ्यः—

# शुभाभिनन्दनम्—

अयि आर्य्यवर्य्याः !

साम्प्रतं सर्वतः समाप्लुतायामस्यां भारतावनौ सङ्कोचमञ्चन्त्याम् क्षीण-क्षीणायां भगवत्यां सुर-सरस्वत्याम् विलुलितायां, शनैः शनैर्ह्रासभावमुपगतवति भगवति सनातनधर्मे, निर्दयं विलुण्ठ्यमानायां संस्कृतौ, श्रीमत्सदृशैरेव विद्वद्भिर्धर्मप्राणैश्च भारतीयं गौरवं सर्वथा समेधमानमालोक्यते।

श्रीमतां वैदुष्य-विभूषितोऽयं सनातनो हिन्दूधर्मः कलिकालेऽपि कराले स्वात्मानं धन्यं मन्यते। सनातन-धर्मस्य च सर्वोन्नतं महिमानं सर्वदा संरक्षितुं बद्धपरिकराणां श्रीमतामदम्योत्साहं विलोक्य काशिस्था अपि विद्वांसश्चकित-चकिताः, मुदित-मुदिताः सन्तस्तत्र भवतां शुभाभिनन्दनं विधातुं सर्वतः सन्नद्धाः सन्तिष्ठन्ते।

मान्याः !

श्रीमद्भिः पञ्जाबप्रान्ते, सीमाप्रान्ते, सिन्धुप्रान्ते च सनातनधर्म-सेवायां, समुन्नतौ, प्रचारे च शारीरकार्थिकादि - विविध - क्लेशजातमविगणय्य, सभाव्याख्यान - शास्त्रार्थ - पुस्तकलेखनादि-कार्य्यजातं विहाय यद् हिन्दू - सनातनधर्म—संरक्षणं प्रचारश्च क्रियते तच्छ्रीमतामद्भुतमपूर्वं च स्वाभाविकं धार्मिकोत्साहमभिव्यनक्ति।

सुरगवी-गगन-चङ्क्रमण-चन्द्रमसां श्रीमतां सारस्वत-वैभवं, वाग्वैदग्ध्यम्, गुणगौरवम्, भाषण-पाटवम्, सरस-सरसं मधुर-मधुरं वचनामृतं च समाचामतां श्रोतृचकोराणां पुरतः प्रस्फुटमेव प्रकाशते।

श्रीमन्तः !

किं बहुना, नवशिक्षित-समाजे स्वीय-गम्भीर-गवेषण-तर्क-युक्ति-प्रभावेण प्रसह्य धार्मिक-भावमासजतां श्रीमत्सदृशानामेव विदुषां सद्भावतः सम्प्रति भारत-भूरियमात्मानं बहुमन्यमाना सर्वस्मिन्नपि विषये स्वात्मानं सुविभूषितं मन्यते। इत्येवं सर्वतोऽपि प्रसिद्ध-पाण्डित्यानां प्रथित-यशसां सनातनधर्म-संरक्षण बद्ध-परिकराणां स्वजातीय - कुरीति-सुधार-सन्नद्धानां श्रीमतां शुभं स्वागतं विदधतीयं श्रीकाशी-पण्डित सभा, सुर-सरस्वती-सेवन-बद्ध-परिकरो विद्वत्प्रतिनिधि भूतःसंस्कृत-साहित्य-समाजः, भवद्गुण-मुग्धाः काशीस्था नागरिकाः सारस्वत-बान्धवाः, भवद्गौरव-गर्विताः सारस्वतच्छात्राश्च 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति' इति श्रीमद्भगवदनुशासनम् स्मारं स्मारं श्रीमत्करकमले इदं शुभाभिनन्दनपत्रम् समर्पयति, आशास्ते च यच्छ्रीमन्तोऽपि उपर्युक्त-पद्यस्योत्तरार्धं संस्मरन्तोऽवश्यमिदं 'प्रदीप्त किरणाय सहस्र-भानवे' दीप-प्रदान-वद् अकिञ्चित्करमपि स्वीकृत्येमं समाजमनुग्रहीष्यन्तीति।

# संस्कृत-समाचाराः

## गोस्वामि यदुकुलभूषणशास्त्रिणामभिनन्दनम्।

मार्गशीर्षे शुक्ल पक्षे, गुरु वासरे काशीस्थे श्री अर्जुनायुर्वेद-विद्यालये श्रीमतां गोस्वामि—यदुकुल-भूषणशास्त्रि महोदयानां शुभाभिनन्दनाय श्रीकाशी-पण्डित-सभा, संस्कृत-साहित्य-समाजः, सारस्वत-सभा, सारस्वत छात्र-संघः—इत्येतेषां चतुर्णां सभानां सम्मिलितं विशिष्टाधिवेशनं समभूत्।

विद्वद्वरेण्या युक्तप्रान्तीय-भूतपूर्व-संस्कृतशिक्षा-निरीक्षकाः श्रीमन्तः काशीराम एम०ए०—विद्यासागर-महोदयाः सभापतिपदं समलङ्कृतवन्तः। समुपस्थितेषु च विद्वत्सु—भिषक् शिरोमणयः श्रीबदरीनाथवैद्याः, सर्वतन्त्रस्वतन्त्राः श्रीपद्मनाभशास्त्रिणः, विश्व-विख्यात-यशसः श्रीरामनारायणमिश्राः, सनातन-धर्मधुरन्धराः श्रीमदनमोहनशास्त्रिणः, रायबहादुर-माधवरामसण्ड-सनातनधर्म-मार्त्तण्डाः, वैयाकरण-शिरोमणयः श्रीपूर्णचन्द्राचार्याः, आयुर्वेदकेशरिणो धीरेन्द्रकेशरिणः, सोमयाजिनः श्रीगङ्गाधरशास्त्रिणः, श्रीअमरनाथदीक्षिताः वैदिकशिरोमणयः, श्रीगोपाल-शास्त्रिणो दर्शनकेशरिणः, वैयाकरणकेशरिणः श्रीराम-देव-द्विवेदाः, श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः, आयु-र्वेदाचार्याः श्रीलालचन्द्र वैद्याः, वेद-मार्त्तण्डाः-श्रीअनन्तरामडोगराशास्त्रिणः, सुप्रभात-सम्पादकाः श्रीकेदारनाथ-शास्त्रिणः, अन्ये च विविधाः विद्वांसः, सारस्वत-प्रेष्ठाश्च समुपस्थिता आसन्।

अत्र गोस्वामिनां सनातनधर्म-सेवा-विषये क्रमशः श्रीकेदारनाथ-शर्म्मणाम्, श्रीविन्ध्येश्वरी-प्रसाद-शास्त्रिणाम्, श्रीगोपालशास्त्रिणाम्, श्रीमदन-मोहनशास्त्रिणाम् व्याख्यानान्यभूवन्। अनन्तरञ्च सभापतिमहोदयानामाज्ञया श्रीकेदारनाथ-शर्म्मभिः संस्कृतभाषानिबद्धं गुणाभिनन्दनं पठितम्, तच्च सभापति—महोदयैस्तेभ्यः स्वहस्तेन सादरं समर्पितञ्च।

तदनन्तरं श्रीमतां गोस्वामिमहोदयानां विधवा-विवाहमधिकृत्य शास्त्रयुक्तिपूर्णं हृद्यवैज्ञानिकं भाषणं समभूत्। अन्ते च सर्वतन्त्रस्वतन्त्रैर्दर्शनाचार्यैः श्री-मपद्मनाभशास्त्रिभिर्धन्यवादानन्तरं सभाविसर्जनं कृतम्।

अभिनन्दनपत्रञ्चास्मिन्नवाङ्के मुद्रितमस्ति।

× × × ×

## वाराणस्यां श्रीदीनानाथचुलैट-शास्त्रिणः।

भारतविजय-पञ्चाङ्ग-प्रणेतारः, इन्दौरराज्य-प्रधान-ज्योतिर्विदः, तत्रत्य-पञ्चाङ्ग-शोधन-समितेर-ध्यक्षाः, सुप्रथित-यशसो विद्याभूषण-श्रीदीनानाथ-शास्त्रिणः, समस्तभारते पञ्चाङ्गानामेकीकरणाय विविधयन्त्रादिसाधनैर्दृक्प्रत्ययेन ग्रहाणां साधनं कुर्वन्तः, साधारण-जनतासु च खगोल-विज्ञानं प्रचार-यन्तः कियतः कालात् भारत-भ्रमणं कुर्वन्तीति विदितचरमेव सुप्रभात-पाठकानाम्। एभिः सह आकोलानगरस्थाः, महेन्द्रविजय-पञ्चाङ्ग-प्रणेतारः श्रीमन्तो भवानीशङ्करशास्त्रिणः, ज्यौतिषाचार्याः श्री-शिवशङ्करशास्त्रिणः, श्रीगोपीनाथचुलैट-शास्त्रिणः, अन्ये च द्वित्रा विद्वांसः सन्ति।

अत्रैव प्रकरणे एतेषां मण्डली, वाराणस्यां समा-गता। आगमनावसरे च काशीस्थैः सुप्रसिद्धैर्विद्व-द्भिरेतेषां सादरं स्वागतं विहितम्। तत्र च श्रीमन्तः पं० रामानन्द मिश्राः ज्यौतिषाचार्याः, श्रीदुर्गादत्त-शास्त्रिण आयुर्वेदाचार्याः, श्रीरामदेव द्विवेदाः व्या-करणाचार्याः, श्रीलालचन्द्र शर्म्माण आयुर्वेदाचार्याः, श्रीधर्माधिकारिणः, श्रीकेदारनाथ शर्म्माणः सुप्रभात-सम्पादकाः प्राधान्येन सम्मिलिता आसन्।

वाराणस्यामेतेषां क्रमशः, नागरी-प्रचारिणी-सभा-काशी-विद्यापीठ—सेन्ट्रल-हिन्दू-स्कूल—हिन्दू-विश्व-विद्यालयेषु चत्वारि भाषणान्यभवन्। प्रथम-द्वितीय-सभासु विश्व-विख्यात-वैदुष्याः देशनेतारो विद्वांसः श्रीभगवानदास एम० ए०, डी० लिट्०, एम० एल० ए० (केन्द्रीय)—महोदयाः सभापतय आसन्। देशपूज्यैर्महामान्यैः श्रीमन्मदनमोहन-मालवीय-महो-

जाब-प्रेस, काशी।

दयैश्च हिन्दू-विश्वविद्यालये वेध-दर्शनं कृत्वा महान् सन्तोषः प्रकटीकृतः।

प्रत्यहं दिवसे रात्रौ च सहस्रशो नागरिकैर्वेधावलोकनं खगोल-विज्ञान-विषय-चर्चा च कृता। श्रीमतां दीनानाथशास्त्रिणामद्भुतं पाण्डित्यं परिश्रमञ्चावलोक्य चकित-चकिता अभूवन् काशीस्थाः विद्वांसः, शिक्षिताः, नागरिकाश्च।

सर्वत्राऽपि सभासु ज्योतिर्विज्ञान-समुन्नति-तत्पराणाम् विद्या-व्यसनिनां श्रीमन्महाराजाधिराज—इन्दौर-नरेश्वराणाम् प्रशंसनम्, तेभ्यो धन्यवादाश्च वितीर्णाः संख्यातीताः।

## चुलैट-शास्त्रिणामभिनन्दनम्।

काशीस्थ-वेध-विज्ञान-परिषत्-सभापतीनां दैवज्ञ-शिरोमणि—श्रीदाऊजीदीक्षित-महोदयानां गृहे श्रीमतां विद्याभूषण—दीनानाथशास्त्रि-चुलैट-महोदयानामभिनन्दन—समारोहः समजनि। सभापति-पदञ्च दैवज्ञ-शिरोमणि—श्रीगेन्दालाल चौधरी—महोदयैः समलङ्कृतमासीत्। उपस्थितेषु विद्वत्सु—श्रीबालगोविन्दशास्त्रिणो वैद्यचूडामणयः, श्रीसीतारामझा ज्यौतिषाचार्याः, श्रीरामनिहोर ज्यौतिषाचार्याः श्रीरामानन्दमिश्रज्यौतिषाचार्याः, श्रीशिवशङ्करत्रिपाठिनः ज्यौतिषाचार्याः, श्रीरामदेव-द्विवेदाः व्याकरणाचार्याः, श्रीकेदारनाथ-शर्म्माणः सुप्रभात—सम्पादकाः, श्रीलालचन्द्रशास्त्रिण आयुर्वेदाचार्याः, श्रीलक्ष्मीधरपन्तधर्माधिकारिणः, अन्ये च बहवो ज्योतिषशास्त्राध्यायिनश्छात्राः समुपस्थिता आसन्।

प्रथमं गोयनका-संस्कृत-कालेजाध्यापकानां श्रीबालगोविन्द-महोदयानामायुर्वेद-चूडामणीनां भू-गोल विषये अनुसन्धान-पूर्णमद्भुतं भाषणमभूत्। तदनन्तरञ्च चुलैटशास्त्रिणां भाषणमभवत्। ततश्च सुप्रभात-सम्पादकैः श्रीकेदारनाथशर्म्मभिर्वेधविज्ञान-परिषदः परिचयं प्रददद्भिः काश्यां वेधालयस्थापनस्यावश्यकता प्रादर्शि, चुलैटमहोदयानां तत्संरक्षकाणां, श्रीमतामिन्दौर-महीमहेन्द्राणां प्रशंसनं धन्यवादाश्च प्रदत्ताः। तदनन्तरञ्च संन्यासि-संस्कृत-कालेज—ज्यौतिषशास्त्राध्यापकैः श्रीसीतारामझा-महोदयैः, मारवाड़ी-संस्कृत-कालेजाध्यापकैः, श्रीरामनिहोर-द्विवेदैः, ज्यौतिषाचार्यैः, सभापति-महोदयैश्च चुलैट शास्त्रिणां प्रशंसा कृता।

अन्ते च जलपानानन्तरं सभा-विसर्जनं समभूत्।

Regd No. A. 1348

## संस्कृत और हिन्दी के साहित्य-संसार में नवयुग-प्रवर्तन !



# सुप्रभात का प्रकाशन-विभाग !

बहुत दिनों से, बहुत लोग कहा करते हैं कि संस्कृत में नवयुग के अनुकूल परमोपयोगी साहित्य सृष्टि नहीं हो रही है। यह भी कहा जाता है कि हिन्दी के भाण्डार में वे रत्न नहीं हैं जो संस्कृत भाषा के द्वारा पैतृक सम्पत्ति के रूप में उसे मिलने चाहिये थे। इन दोनों अभावों की पूर्त्ति के लिये—

## 'सुप्रभात-ग्रन्थमाला'

शीघ्र प्रकाशित की जा रही है। इसमें कई तरह की संस्कृत और हिन्दी-सिरीजें निकाली जा रही हैं।

१—पहली सिरीज में संस्कृत की छोटी २ पुस्तकें कवितासंग्रह, निबन्धमाला, आदि प्रकाशित होंगी। जैसेः—सुप्रभात-गीताञ्जलिः, सुप्रभात-निबन्धमाला इत्यादि।

२—दूसरी हिन्दी सिरीज होगी, जिसमें संस्कृत के उपयुक्त, लोकोपकारक ग्रन्थों का अनुवाद प्रकाशित होगा।

३—आयुर्वेद-ग्रन्थमालामें—सर्वसाधारणोपयोगी, ग्राम्यजनोपयोगी, सुलभ और सुन्दर पुस्तकें प्रकाशित होंगी।

४—चौथी ग्रन्थमाला में परीक्षोपयोगी और छात्रोपयोगी टीकाएँ प्रकाशित होंगी।

सुप्रभात के ग्राहकों को विशेष सुविधाएँ रहेंगी।

**व्यवस्थापक, सुप्रभात-कार्यालय, काशी।**

Printed at Shri Lakshmi Narayan Press, Benares and
Published at Suprabhat Karyalaya, Sakshivinayak Lane, Benares by M. G. Sharma.